# श्रीरघुवंश-महाकाव्यम्

## सञ्जीविनी-छात्रोपयोगिनी-हिन्दीटीकायुतम् ,

## प्रथमः सर्गः

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥
वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम् ॥
कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः ॥
तथापि दक्षिणावर्तनाथाद्यैः क्षुण्णवर्त्मसु ।
वयं च कालिदासोक्तिष्ववकाशं लभेमहि ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्छिता ।
एषा सञ्जीविनी टीका तामद्योज्जीवयिष्यति ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥

**सञ्जीविनी**—इह खलु सकलकविशिरोमणिः कालिदासः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे' इत्याद्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्, रघुवंशाख्यं महाकाव्यं चिकीर्षुः, चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात्, 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्काव्यनिर्माणस्य विशिष्टशब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टशब्दार्थयोश्च 'शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः' ॥ इति वायुपुराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तत्वदर्शनात्तत्प्रतिपित्सया तावेवाभिवादयते—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥१॥

**सञ्जीविनी**—वागर्थाविवेत्येकं पदम् । "इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम्" । एवमन्यत्रापि द्रष्टव्यम् । वागर्थाविव शब्दार्थाविव संपृक्तौ नित्यसंबद्धावित्यर्थः । नित्यसंबद्धयोरुपमानत्वेनोपादानात् । 'नित्यः शब्दार्थसंबन्धः' इति मीमांसकाः । जगतो लोकस्य पितरौ । माता च पिता च पितरौ । "पिता मात्रा" इति द्वन्द्वैकशेषः । 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमरः । एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रदानशक्तिः परमकारुणिकत्वं च सूच्यते । पर्वतस्यापत्यं स्त्री पार्वती "तस्यापत्यम्" इत्यण् । "टिड्ढाणञ् द्वयसज्दघ्नञ्०" इत्यादिना ङीप् । पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ । परमशब्दः सर्वोत्तमत्वद्योतनार्थः । मातुरभ्यर्हितत्वादल्पाक्षरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः । वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थं वन्देऽभिवादये । अत्रोपमालंकारः स्फुट एव । तथोक्तम्—'स्वतः सिद्धेन भिन्नेन संपन्नेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा ॥' इति । प्रायिकश्चोपमालंकारः कालिदासोक्तकाव्यादौ । भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगाच्छुभलाभः सूच्यते । तदुक्तम्—'शुभदो मो भूमिमयः' इति । वकारस्यामृतबीजत्वात्प्रचयगमनादिसिद्धिः ॥१॥

नत्वा सरस्वतीं दिव्यां, ध्यात्वा साम्बञ्च शंकरम् ।
करोमि रघुवंशस्य, व्याख्यां छात्रोपयोगिनीम् ॥

**अन्वयः**—'अहं कालिदासः" वागर्थाविव सम्पृक्तौ, जगतः, पितरौ, पार्वतीपरमेश्वरौ, वागर्थप्रतिपत्तये, वन्दे ।

**वाच्य०**—"मया" पार्वतीपरमेश्वरौ, वागर्थप्रतिपत्तये वन्द्येते ।

**व्याख्या**—वाक्=वाणी च अर्थः=अभिधेयश्चेति वागर्थौ, वागर्थौ इव=यथा, इति वागर्थाविव, सम्पृक्तौ=संमिलितौ=नित्यसंबद्धावित्यर्थः, गच्छतीति जगत्, तस्य जगतः=संसारस्य, माता=जननी, च, पिता=जनकश्चेति पितरौ (एकशेषः) पर्वतस्यापत्यं स्त्री पार्वती, ईशितुं शीलमस्येतीश्वरः, परमश्चासौ, ईश्वरः, परमेश्वरः, पार्वती=भवानी, च, परमेश्वरः=शिवश्चेति, पार्वतीपरमेश्वरौ, (पार्वतीं पातीति पार्वतीपः, रमाया ईश्वरः, रमेश्वरः, पार्वतीपः=शिवः, रमेश्वरः=विष्णुः तौ पार्वतीपरमेश्वरौ, पार्वतीं पिपर्तीति पार्वतीपरः=शिवः, मायाः ईश्वरः मेश्वरः=विष्णुरिति तौ पार्वतीपरमेश्वरौ) वाक्=वाणी च. अर्थोऽभिधेयश्चेति वागर्थौ, तयोः, प्रतिपत्तिः=ज्ञानमिति वागर्थप्रतिपत्तिस्तस्यै वागर्थप्रतिपत्तये, वन्दे=प्रणमामि ।

**समा०**—वाक् च अर्थः च वागर्थौ, वागर्थौ इव वागर्थाविव । माता च पिता च पितरौ तौ, पितरौ । पर्वतस्य अपत्यम् स्त्री पार्वती ईशितुम् शीलम् अस्य इति ईश्वरः, पार्वती च परमेश्वरः च पार्वतीपरमेश्वरौ तौ तथोक्तौ । वाक् च अर्थः च वागर्थौ, वागर्थयोः प्रतिपत्तिः, वागर्थप्रतिप्रत्तिः, तस्यै वागर्थप्रतिपत्तये ।

**अभि०**—महाकविः कालिदासः, काव्यनिर्माणार्थमपेक्षितयोः शब्दार्थयोः सम्यग्ज्ञानाय, जगतः पितरौ, उमामहेश्वरौ मिलितौ शब्दार्थौ, इव प्रणमति ।

**हिन्दी**—शब्द और अर्थ के समान (नित्यसम्बद्ध) एकरूप, और संसार के माता-पिता पार्वतीजी और शिवजी को, शब्द और अर्थ का ठीक ठीक ज्ञान तथा व्यवहार करने के लिये, मैं (कालिदास) प्रणाम करता हूँ ॥१॥

संप्रति कविः स्वाहंकारं परिहरति 'क्व सूर्यं–' इत्यादिश्लोकद्वयेन—

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥**

**सञ्जीविनी**—प्रभवत्यस्मादिति प्रभवः कारणम्। "ऋदोरप्" "अकर्तरि च कारके संज्ञायाम्" इति साधुः। सूर्यप्रभवो वंशः क्व। अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा मे मतिः प्रज्ञा च क्व। द्वौ क्वशब्दौ महदन्तरं सूचयतः। सूर्यवंशमाकलयितुं न शक्नोमीत्यर्थः। तथा च तद्विषयप्रबन्धनिरूपणं तु दूरापास्तमिति भावः। तथाहि। दुस्तरं तरितुमशक्यम् "ईषद्दुःसुषु०" इत्यादिना खल्प्रत्ययः। सागरं मोहादज्ञानादुडुपेन प्लवेन। 'उडुपं तु प्लवः कोलः' इत्यमरः। अथवा चर्मावनद्धेन यानपात्रेण। 'चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्' इति सज्जनः। तितीर्षुस्तरीतुमिच्छुरस्मि भवामि। तरतेः सन्नन्तादुप्रत्ययः। अल्पसाधनैरधिकारम्भो न सुकर इति भावः। इदं च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव। तदुक्तम्—'प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः' इति ॥२॥

**अन्वयः**—सूर्यप्रभवः, वंशः, क्व, अल्पविषया, "मम" मतिश्च, क्व, "अहम्" मोहात्, दुस्तरं, सागरम्, उडुपेन, तितीर्षुः, अस्मि।

**वाच्य०**—सूर्यप्रभवेण, वंशेन क्व "भूयते" अल्पविषयया "मम" मत्या च क्व "भूयते" "मया" मोहात्, उडुपेन दुस्तरं सागरं तितीर्षुणा भूयते।

**व्याख्या**—प्रभवत्यस्मात् इति प्रभवः, सूर्यः = सविता, प्रभवः = कारणं, यस्य स सूर्यप्रभवः, वंशः = अन्वयः = कुलमित्यर्थः, क्व = कुत्र, अल्पः = स्वल्पः विषयः = ज्ञेयोऽर्थः, यस्याः सा, अल्पविषया "मम" मतिः = बुद्धिः, क्व = कुत्र, महदन्तरमस्तीत्यर्थः, तथाहि "अहम्" दुस्तरं = तरितुमशक्यम्, सागरं = समुद्रं, मोहात् = अज्ञानात्, उडुपेन = प्लवेन = चर्मावनद्धयानपात्रेण, तरीतुमिच्छति तितीर्षति, तितीर्षतीति, तितीर्षुः = तरीतुमिच्छुः, अस्मि = भवामि। स्वल्पसाधनैरधिकारम्भो न सम्यगस्तीति भावः।

**समा०**—प्रभवति अस्मात् इति प्रभवः, सूर्यः प्रभवः यस्य सः सूर्यप्रभवः। अल्पः विषयः यस्याः सा अल्पविषया। तरीतुम् इच्छति इति तितीर्षति, तितीर्षति इति तितीर्षुः।

**अभि०**—महतः सूर्यवंशस्य मन्दबुद्धेश्च मम महदन्तरे वर्तमानेऽपि सूर्यवंशवर्णने मम प्रवृत्तिस्तथैव हास्यास्पदं यथा कश्चिन्मूर्खः उडुपेन महासागरं तितीर्षतीति।

**हिन्दी**—कहां तो सूर्य से उत्पन्न हुआ वह तेजस्वी वंश, और कहां मन्दबुद्धि मैं ? ( अर्थात् इस बात को मैं जानता हूं कि पराक्रमी प्रभावशाली रघु के वंश का वर्णन करने में मैं सर्वथा अयोग्य हूँ फिर भी मेरी मूर्खता है कि) मैं उसी तरह इसे पार करना चाहता हूँ जैसे कोई छोटी-सी डोंगी से अपार समुद्र को पार करने की इच्छा कर रहा हो ॥२॥

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥

**सञ्जीविनी**—किं च मन्दो मूढः। 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युः' इत्यमरः। तथापि कवियशःप्रार्थी । कवीनां यशः काव्यनिर्माणेन जातं तत्प्रार्थनाशीलोऽहं प्रांशुनोन्नतपुरुषेण लभ्ये प्राप्ये फले फलविषये लोभादुद्बाहुः फलग्रहणायोच्छ्रितहस्तो वामनः खर्व इव । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । उपहास्यतामुपहासविषयताम् । "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः । गमिष्यामि प्राप्स्यामि ॥३॥

**अन्वयः**—मन्दः, "तथापि" कवियशःप्रार्थी, "अहं" प्रांशुलभ्ये, फले, लोभात्, उद्बाहुः, वामनः, इव, उपहास्यतां, गमिष्यामि ।

**वाच्य०**—मन्देन कवियशःप्रार्थिना "मया" प्रांशुलभ्ये फले, लोभादुद्बाहुना वामनेनेव, उपहास्यता गंस्यते ।

**व्याख्या**—"किञ्च" मन्दः=मूढः, मूर्ख इत्यर्थः, "तथापि" कवयन्तीति कवयः, कविताकर्तारस्तेषां, यशः=काव्यनिर्माणेन जातमिति कवियशः, तत् प्रार्थयितुं= काङ्क्षितुं शीलमस्येति कवियशःप्रार्थी, 'अहम्" प्रांशुना=उन्नतपुरुषेण, लभ्यं= प्राप्यं, तस्मिन् प्रांशुलभ्ये, फले=आम्रादिफलविषये, लोभात्=फललिप्सया, उच्छ्रितौ=ऊर्ध्वंकृतौ, बाहू=भुजौ, यस्य स उद्बाहुः, वामनः=खर्वः, इव=यथा, 'खर्वो ह्रस्वश्च वामनः' इत्यमरः। उपहास्यस्य भाव उपहास्यता तामुपहास्यताम्= उपहासविषयतां, गमिष्यामि=प्राप्स्यामि ।

**समा०**—कवयन्ति इति कवयः कवीनां यशः कवियशः, कवियशः प्रार्थयितुम् शीलम् अस्य इति कवियशःप्रार्थी। लब्धुम् योग्यम् लभ्यम्, प्रांशुना लभ्यम् प्रांशुलभ्यम्, तस्मिन् प्रांशुलभ्ये । उच्छ्रितौ बाहू यस्य स उद्बाहुः । उपहास्यस्य भावः उपहास्यता, ताम् उपहास्यताम् ।

**अभि०**—मन्दोऽहं महनीयचरितस्य रघुवंशस्य वर्णने तथैवोपहास्यो भविष्यामि, यथा वामनः पुरुषः, उन्नतपुरुषेण प्राप्ये फले उच्छ्रितबाहुः सन् उपहास्यो भवति।

**हिन्दी**—बड़े बड़े कवियों के यश को चाहने वाला मन्दबुद्धि मैं उसी प्रकार हँसी को प्राप्त होऊँगा, जैसे कि लम्बे मनुष्य के पहुँचने योग्य फल की ओर 'फल तोड़ने के लिये' ऊपर हाथ फैलाए बौना ॥३॥

मन्दश्चेत्तर्हि त्यज्यतामयमुद्योग इत्यत आह—

**अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥४॥**

**सञ्जीविनी**—अथवा पक्षान्तरे पूर्वैः सूरिभिः कविभिर्वाल्मीक्यादिभिः कृतवाग्द्वारे कृत रामायणादिप्रबन्धरूपा या वाक्सैव द्वारं प्रवेशो यस्य तस्मिन्। अस्मिन्सूर्यप्रभवे वंशे कुले। जन्मनैकलक्षणः संतानो वंशः। वज्रेण मणिवेधकसूचीविशेषेण। 'वज्रं त्वस्त्री कुलिशशस्त्रयोः। मणिवेधे रत्नभेदे' इति केशवः। समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्येव मे मम गतिः संचारोऽस्ति। वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थः ॥४॥

**अन्वयः**—अथवा, पूर्वसूरिभिः, कृतवाग्द्वारे, अस्मिन्, वंशे, वज्रसमुत्कीर्णे, मणौ, सूत्रस्य, इव, मे, गतिः, अस्ति।

**वाच्य०**—अथवा अस्मिन्, वंशे, मणौ सूत्रस्येव मे गत्या भूयते।

**व्याख्या**—अथवा=पक्षान्तरे पूर्वे=प्रथमे च ते सूरयः=कविवाल्मीक्यादयः, तैः पूर्वसूरिभिः, वक्तीति वाक्, वागेव द्वारं, वाग्द्वारं, कृतं=विहितं, वाग्द्वारं यस्य स कृतवाग्द्वारस्तस्मिन् कृतवाग्द्वारे=रचितरामायणरूपप्रवेशे अस्मिन्=सूर्यप्रभवे वंशे, वज्रेण=मणिवेधकसूचीविशेषेण, समुत्कीर्णः=विद्धस्तस्मिन्, वज्रसमुत्कीर्णे, मणौ=रत्ने, सूत्रस्य=तन्तोः, इव=यथा, मे=मम, गतिः=सञ्चारः, अस्ति=वर्तते। वर्णनीयेऽस्मिन् सूर्यप्रभवे रघुवंशे मम वाणीप्रसरोऽस्ति।

**समा०**—पूर्वे च ते सूरयः पूर्वसूरयः तैः पूर्वसूरिभिः, वक्ति इति वाक्, वाक् एव द्वारम् वाग्द्वारम्, कृतम् वाग्द्वारम् यस्य सः कृतवाग्द्वारः, तस्मिन् कृतवाग्द्वारे, वज्रेण समुत्कीर्णः वज्रसमुत्कीर्णः तस्मिन् वज्रसमुत्कीर्णे।

**अभि०**—यथा मणिवेधकसूचीविद्धं रत्नं सूत्रस्य गतिः भवति तथैव महर्षि-वाल्मीकिरचितरामायणप्रबन्धद्वारेण, सूर्यवंशेऽस्मिन् मे सञ्चारो भविष्यति ।

**हिन्दी**—( किन्तु मुझे एक ही विश्वास है कि ) वाल्मीकि आदि पूर्व कवियों ने सूर्यवंश पर रामायण आदि काव्य लिखकर, वाणी का द्वार पहले ही खोल दिया है। इस लिये उसमें प्रवेश कर जाना, तथा सूर्यवंश का पुनः वर्णन करना, मेरे लिये वैसे ही सरल है जिस प्रकार हीरे की कनी से बिंधे हुए मणि में डोरा पिरोना सरल है ॥४॥

एवं रघुवंशे लब्धप्रवेशस्तद्वर्णनं प्रतिजानानः 'सोऽहम्' इत्यादिभिः पञ्चभिः श्लोकैः कुलकेनाह—

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥

**सञ्जीविनी**–सोऽहम् । 'रघूणामन्वयं वक्ष्ये' इत्युत्तरेण सम्बन्धः । किंविधाना रघूणामित्यत्रोत्तराणि विशेषणानि योज्यानि । आ जन्मनः जन्मारभ्येत्यर्थः 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः । शुद्धानाम् । सुप्सुपेति समासः । एवमुत्तरत्रापि द्रष्टव्यम् । आजन्मशुद्धानाम् । निषेकादिसर्वसंस्कारसंपन्नानामित्यर्थः । आ फलोदयमा फलसिद्धेः कर्म येषां ते तथोक्तास्तेषाम् । प्रारब्धान्तगामिनामित्यर्थः । आसमुद्रं क्षितेरीशानाम् । सार्वभौमाणामित्यर्थः । आनाकं रथवर्त्म येषां तेषाम् । इन्द्रसहचारिणामित्यर्थः । अत्र सर्वत्राङोऽभिविध्यर्थत्वं द्रष्टव्यम् । अन्यथा मर्यादार्थत्वे जन्मादिषु शुद्ध्यभावप्रसङ्गात् ॥५॥

**अन्वयः**—स, अहम्, आजन्मशुद्धानाम् आफलोदयकर्मणाम्, आसमुद्रक्षितीशानाम्, आनाकरथवर्त्मनां "रघूणाम् अन्वयं वक्ष्ये" ।

**वाच्य०**—तेन मया रघूणामन्वयो वक्ष्यते, 'इति नवमश्लोकस्थपदेन सम्बन्धः' ।

**व्याख्या**—सः=मन्दः, अहम्=कालिदासः, जन्मनः, आ, इति, आजन्म,= जन्मत आरभ्य शुद्धाः=निषेकादिसम्पूर्णसंस्कारसम्पन्नास्तेषाम्, आजन्मशुद्धानाम्, फलस्य=परिणामस्य, उदयः=सिद्धिः, इति फलोदयः फलोदयमभिव्याप्य, इत्याफलोदयम्, आफलोदयं, कर्म=क्रिया उद्योग इति यावत्, येषान्ते, तेषामाफलोदयकर्मणाम्, प्रारब्धान्तगामिनामित्यर्थः, क्षितेः=पृथिव्या ईशाः=अधीश्वराः, इति क्षितीशाः समुद्रं=सागरमभिव्याप्य, इति आसमुद्रम्, आसमुद्रं

क्षितीशा इति आसमुद्रक्षितीशास्तेषामासमुद्रक्षितीशानाम्, रथस्य = स्यन्दनस्य, वर्त्म = मार्गम इति रथवर्त्म. न = नास्ति, अकं = दुःखं यत्र स नाकः, नाकमभिव्याप्य, इति आनाकम्. आनाकं रथवर्त्म येषां तेषामानाकरथवर्त्मनाम्, रघूणामन्वयं वक्ष्ये, इत्युत्तरेण पद्येनान्वयः।

**समा०**—जन्मनः आ इति आजन्म, आजन्म शुद्धाः आजन्मशुद्धाः तेषाम् आजन्मशुद्धानाम्। फलस्य उदयः फलोदयः, फलोदयम् अभिव्याप्य आफलोदयम्, आफलोदयम् कर्म येषां ते आफलोदयकर्माणः, तेषाम् आफलोदयकर्मणाम्। क्षितेः ईशाः क्षितीशाः, समुद्रम् अभिव्याप्य इति आसमुद्रम्, आसमुद्रम् क्षितीशाः इति आसमुद्रक्षितीशाः. तेषाम् आसमुद्रक्षितीशानाम्। रथस्य वर्त्म रथवर्त्म न विद्यते अकम् यत्र स नाक. नाकम् अभिव्याप्य इति आनाकम्, आनाकम् रथवर्त्म येषाम् ते आनाकरथवर्त्मानः, तेषाम् आनाकरथवर्त्मनाम्।

**अभि०**—मन्दोऽहं कालिदासः वेदोक्तसर्वसंस्कारसम्पन्नानां प्रारब्धान्तगामिनां चक्रवर्तिनामिन्द्रसहचारिणां रघूणामन्वयं वक्ष्ये।

**हिन्दी**—मन्दमति मैं कालिदास उन प्रतापी सूर्यवंशियों का वर्णन करूँगा, जिनके संस्कार तथा चरित्र जन्म से लेकर अन्ततक शुद्ध रहे, और जो किसी कार्य का आरम्भ कर, उसे पूरा करके ही छोड़ते थे। जिनका साम्राज्य समुद्र तक फैला था, और जिनके रथ का मार्ग स्वर्ग तक था, अर्थात् पृथिवी से स्वर्ग तक उनके रथ आते जाते थे ॥५॥

यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥

**सञ्जीविनी**—विधिमनतिक्रम्य यथाविधि। 'यथाऽसादृश्ये" इत्यव्ययीभावः। तथा हुतशब्देन सुप्सुपेति समासः। एवं 'यथाकामार्चित—' इत्यादीनामपि द्रष्टव्यम्। यथाविधि हुता अग्नयो यैस्तेषाम्। यथाकाममभिलाषमनतिक्रम्यार्चितार्थिनाम्। यथापराधमपराधम् अनतिक्रम्य दण्डो येषां तेषाम्। यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीलानाम्। चतुर्भिर्विशेषणैर्देवतायजनार्थिसत्कारदण्डधरत्वप्रजापालनसमयजागरूकत्वादीनि विवक्षितानि ॥६॥

**अन्वयः**—यथाविधि, हुताग्नीनां, यथाकामार्चितार्थिनाम्, यथापराधदण्डानां, यथाकालप्रबोधिनाम् "रघूणामन्वयं वक्ष्ये"।

**व्याख्या**—विधिमनतिक्रम्येति यथाविधि, यथाविधि = यथाशास्त्रं, हुताः = तर्पिताः, अग्नयः, यैस्ते, तेषां यथाविधिहुताग्नीनाम्, काममनतिक्रम्येति यथाकामं, यथाकामं = यथाभिलाषम्, अर्चिताः = पूजिताः सत्कृताः, अर्थिनः = याचकाः यैस्ते, तेषां यथाकामार्चितार्थिनाम्, अपराधमनतिक्रम्येति यथापराधं, यथापराधम् = अपराधानुकूलं, दण्डः = दमः; येषां ते, तेषां यथापराधदण्डानाम् 'साहसं तु दमो दण्डः' इत्यमरः। कालमनतिक्रम्येति यथाकालम्, यथाकालं = यथासमयं, प्रबोधिनः = प्रबोधनशीलाः = जागरूकास्तेषां यथाकालप्रबोधिनां, "रघूणामन्वयं वक्ष्ये" इत्यग्रिमश्लोकेन संबन्धः।

**समा०**—विधिम् अनतिक्रम्य यथाविधि, यथाविधि हुताः अग्नयः यैः ते यथाविधि हुताग्नयः तेषाम् यथाविधिहुताग्नीनाम्, कामम् अनतिक्रम्य यथाकामम्, यथाकामम् अर्चिताः अर्थिनः यैः ते यथाकामार्चितार्थिनः, तेषाम् यथाकामार्चितार्थिनाम्, अपराधम् अनतिक्रम्य यथापराधम्, यथापराधम् दण्डः येषाम् ते यथापराधदण्डाः तेषाम् यथापराधदण्डानाम्, कालम् अनतिक्रम्य यथाकालम्, यथाकालम् प्रबोधिनः यथाकालप्रबोधिनः तेषाम् यथाकालप्रबोधिनाम्।

**अभि०**—शास्त्रोक्तविधिना यज्ञकर्तृणामतिथिपूजकानां दुष्टजनशिक्षकाणां प्रजापालने तत्पराणां रघूणामिति संबन्धः।

**हिन्दी**—जो शास्त्रविधि के अनुसार ही यज्ञ करते थे, जो माँगने वालों को भरपूर दान देते थे, जो दुष्टों को अपराध के अनुसार ही दण्ड देते थे, जो समय पर ही कार्य करते थे ॥६॥

त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥

**सञ्जीविनी**—त्यागाय सत्पात्रे विनियोगस्त्यागस्तस्मै। 'त्यागो विहापितं दानम्' इत्यमरः। संभृतार्थानां संचितधनानाम्। न तु दुर्व्यापाराय। सत्याय मितभाषिणां मितभाषणशीलानाम्। न तु पराभवाय। यशसे कीर्तये 'यशः कीर्तिः समज्ञा च' इत्यमरः। विजिगीषूणां विजेतुमिच्छूनाम्। न त्वर्थसंग्रहाय। प्रजायै संतानाय गृहमेधिनां दारपरिग्रहाणाम्। न तु कामोपभोगाय। अत्र 'त्यागाय' इत्यादिषु "चतुर्थी तदर्थार्थ०" इत्यादिना तादर्थ्ये चतुर्थीसमासविधानज्ञापकाच्चतुर्थी। गृहैर्दारैर्मेधन्ते संगच्छन्त इति गृहमेधिनः। 'दारेष्वपि गृहाः पुंसि' इत्यमरः।

'जाया च गृहिणी गृहम्' इति हलायुधः। 'मेधृ संगमे' इति धातोर्णिनिः। एभिर्विशेषणैः परोपकारित्व यशःपरत्वं पितॄणां शुद्धत्वं च विवक्षितानि।

**अन्वयः**—त्यागाय सम्भृतार्थानां, सत्याय मितभाषिणां, यशसे विजिगीषूणां, प्रजायै, गृहमेधिनाम् रघूणामन्वयं वक्ष्ये।

**व्याख्या**—त्याग = सत्पात्रे विनियोगस्तस्मै त्यागाय = दानाय, सम्भृतः = सञ्चितः अर्थः = धनं यैस्ते, तेषां सम्भृतार्थानां, सत्याय = तथ्याय, मितं = स्वल्पं, भाषन्ते तच्छीला इति मितभाषिणस्तेषां मितभाषिणां, यशसे = कीर्त्यै, विजेतुमिच्छन्ति, विजिगीषन्ति, विजिगीषन्तीति विजिगीषवस्तेषां विजिगीषूणां = विजेतुमिच्छूनां, प्रजायै = सन्तानाय, गृह्णन्ति धान्यादिकमिति गृहाः = दाराः, तैः, मेधितुं शीलं येषां ते, तेषां गृहमेधिनां = दारपरिग्रहाणां, नतु कामोपभोगायेत्यर्थः।

**समा०**—सम्भृतः अर्थः यैः ते सम्भृतार्थाः, तेषाम् सम्भृतार्थानाम्, मितम् भाषन्ते तच्छीलाः मितभाषिणः तेषाम् मितभाषिणाम्, विजेतुम् इच्छन्ति इति विजिगीषन्ति, विजिगीषन्ति इति विजिगीषवः तेषाम् विजिगीषूणाम्, गृह्णन्ति धान्यादिकम् इति गृहाः, गृहैः मेधितुम् शीलम् येषाम् ते गृहमेधिनः तेषाम् गृहमेधिनाम्।

**अभि०**—दानशीलानां सत्यभाषिणां यशसे विजेतुमिच्छुकानाम् सन्तानाय गृहस्थानां रघूणामन्वयमिति संबन्धः।

**हिन्दी**—जो कि सत्पात्र में दान देने के लिये ही धन बटोरते थे, सत्य बोलने के लिये ही कम बोलते थे, और जो अपनी कीर्ति फैलाने के लिये ही विजय करते थे, 'न कि अन्य का राज्य छीनने के लिये' जो सन्तान के लिये ही विवाह करते थे, 'न कि भोगविलास के लिये' ॥७॥

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥८॥

**सञ्जीविनी**—शिशोर्भावः शैशवं बाल्यम्। 'प्राणभृज्जातिवयोवचनोद्गात्र०' इत्यञ्प्रत्ययः। 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः। तस्मिन्वयस्यभ्यस्तविद्यानाम्। एतेन ब्रह्मचर्याश्रमो विवक्षितः। यूनो भावो यौवनं तारुण्यम्। युवादित्वादण्प्रत्ययः। 'तारुण्यं यौवनं समम्' इत्यमरः। तस्मिन्वयसि विषयैषिणां। भोगाभिलाषिणाम्। एतेन गृहस्थाश्रमो विवक्षितः। वृद्धस्य भावो वार्द्धकं वृद्धत्वम्। 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ्प्रत्ययः। 'वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि'

इति विश्वः। संघातार्थेऽत्र "वृद्धाच्छः" इति वक्तव्यात्सामूहिको वुञ्। तस्मिन्वार्द्धके वयसि मुनीनां वृत्तिरिव वृत्तिर्येषां तेषाम् एतेन वानप्रस्थाश्रमो विवक्षितः। अन्ते शरीरत्यागकाले योगेन परमात्मध्यानेन। 'योगः संनहनोपायध्यानसंगतियुक्तिषु'। इत्यमरः। तनुं देहं त्यजन्तीति तनुत्यजां देहत्यागिनाम्। 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। एतेन भिक्ष्वाश्रमो विवक्षितः ॥८॥

**अन्वयः—शैशवे, अभ्यस्तविद्यानां, यौवने, विषयैषिणां, वार्धके, मुनिवृत्तीनाम्, अन्ते, योगेन, तनुत्यजां, 'रघूणामन्वयं वक्ष्ये'।**

**व्याख्या**—शिशोः भावः शैशवं,तस्मिन् शैशवे = बाल्ये, अभ्यस्ताः = पठिताः, विद्याः = शास्त्राणि, यैस्ते, तेषामभ्यस्तविद्यानाम्, यूनो भावः, यौवनं तस्मिन् यौवने = तारुण्ये, विषयं = भोगविलासम् इच्छन्ति = अभिलषन्ति, इति विषयैषिण-स्तेषां विषयैषिणां तारुण्ये, गृहस्थाश्रमिण इत्यर्थः। वृद्धस्य भावो वार्धकं तस्मिन्, वार्धके = वृद्धत्वे, मन्तारः = वेदशास्त्रार्थतत्त्वावगन्तारः, मुनयस्तेषां वृत्तिरिव वृत्तिः = वर्तनम् = आचार इत्यर्थः, येषां ते तेषां मुनिवृत्तीनां वानप्रस्थाश्रमिणा-मित्यर्थः, अन्ते = शरीरत्यागसमये, मरणकाले इत्यर्थः, योगेन = चित्तवृत्तिनिरो-धेन, भगवद्ध्यानेनेत्यर्थः, तनुं शरीरं त्यजन्ति = मुञ्चन्तीति तनुत्यजस्तेषां तनुत्यजाम्, रघूणामन्वयमिति संबन्धः।

**समा०**—शिशोः भावः शैशवम्, तस्मिन् शैशवे, अभ्यस्ताः विद्याः यैः ते अभ्यस्तविद्याः तेषाम् अभ्यस्तविद्यानाम्, यूनः भावः यौवनम्, तस्मिन् यौवने, विषयम् इच्छन्ति इति विषयैषिणः, तेषाम् विषयैषिणाम्, वृद्धस्य भावः वार्द्धकम्, तस्मिन् वार्द्धके, मन्तारः मुनयः, मुनीनाम् वृत्तिः इव वृत्तिः येषाम् ते मुनिवृत्तयः, तेषाम् मुनिवृत्तीनाम्, तनुम् त्यजन्ति इति तनुत्यजः, तेषाम् तनुत्यजाम्।

**अभि०**—प्रथमे वयसि पूर्णेन ब्रह्मचर्येण सर्वविधविद्याभ्यासं कुर्वन्तः, यौवने च शास्त्रानुमोदितं गृहस्थसुखमुपभुंजानाः, जरायां संप्राप्तायां स्वसुतेभ्यो राज्यं समर्प्य वने तपस्यन्तः, अन्ते च योगाभ्यासेन 'समाधिना' देहत्यागिनः ये रघव आसन् तेषामन्वयं वक्ष्ये।

**हिन्दी**—जो बचपन में ब्रह्मचारी रहकर विद्याभ्यास करते थे, जो जवानी में गृहस्थाश्रम में रह कर विषयों का उपभोग करते थे और बुढ़ापे में मुनियों

के समान वन में रह कर तपस्या करते थे, ( अर्थात् वानप्रस्थाश्रम का पालन करते थे ) और अन्त समय परमात्मा का ध्यान करते हुए शरीर त्याग करते थे ॥८॥

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥

**सञ्जीविनी**—सोऽहं लब्धप्रवेशः । तनुवाग्विभवोऽपि स्वल्पवाणीप्रसारोऽपि सन् । तेषां रघूणां गुणैस्तद्गुणैः । आजन्मशुद्ध्यादिभिः कर्तृभिः कर्णं मम श्रोत्रमागत्य चापलाय चापलं चपलकर्माविमृश्यकरणरूपं कर्तुम् । युवादित्वात्कर्मण्यण् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इत्यनेन चतुर्थी । प्रचोदितः प्रेरितः सन् । रघूणामन्वयं तद्विषयप्रबन्धं वक्ष्ये ॥ ९ ॥ कुलकम् ॥

**अन्वयः**—"स, अहम्" तनुवाग्विभवोऽपि, सन्, तद्गुणैः, कर्णमागत्य, चापलाय, प्रचोदितः, सन्, रघूणाम्, अन्वयं, वक्ष्ये । ( इति पूर्वोक्तपञ्चश्लोकैः कुलकम् )

**वाच्य०**—तेन मया तनुवाग्विभवेनापि, तद्गुणैः कर्णमागत्य चापलाय प्रचोदितेन "सता" रघूणामन्वयो वक्ष्यते ।

**व्याख्या**—सः = पूर्वोक्तः, अहम् = कालिदासः = लब्धप्रवेश इत्यर्थः, तनुः = स्वल्पः, वाचः = वाण्याः, विभवः = प्रसारो यस्य सः, तनुवाग्विभवः अपि = सन्, तेषां = रघूणां, गुणैः = आजन्मशुद्ध्यादिभिः "कर्तृभिः" कर्णं = श्रोत्रम्, आगत्य = प्राप्य, चपलस्य भावः कर्म वा चापलं = चाञ्चल्यम्, तस्मै = चापलाय, अविचार्य कार्यकरणायेत्यर्थः, प्रचोदितः = प्रेरितः, "सन्" रघूणां = रघुकुलोद्भवानाम्, अन्वयं = वंशं, वक्ष्ये = कथयिष्ये ।

**समा०**—वाचां विभवः वाग्विभवः, तनुः वाग्विभवः यस्य सः तनुवाग्विभवः । तेषाम् गुणाः इति तद्गुणाः तैः तद्गुणैः । चपलस्य भावः कर्म वा चापलम् तस्मै, चापलाय ।

**अभि०**—रघुकुलोत्पन्नानां राज्ञाम्, आजन्मशुद्ध्यादिगुणैः, मम कर्णमागत्य प्रेरितोऽहं रघुवंशवर्णनं करिष्यामि, ननु स्वबुद्धिप्रभावेण ।

**हिन्दी**—यद्यपि मेरी वाणी की सामर्थ्य अल्प है, फिर भी मैं पूर्वोक्त गुणों से

युक्त रघुवंशियों के कुल का वर्णन करूँगा, 'इसलिये कि' उनके जन्म से पवित्र आदि गुणों ने मेरे कान में आकर प्रेरणा की है ॥९॥

संप्रति स्वप्रबन्धपरीक्षार्थं सतः प्रार्थयते—

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥१०॥

**सञ्जीविनी**—तं रघुवंशाख्यं प्रबन्धं सदसतोर्गुणदोषयोर्व्यक्तेर्हेतवः कर्तारः सन्तः श्रोतुमर्हन्ति । तथाहि । हेम्नो विशुद्धिर्निर्दोषस्वरूपं श्यामिकापि लौहान्तरसंसर्गात्मको दोषोऽपि वाग्नौ संलक्ष्यते । नान्यत्र । तद्वदत्रापि सन्त एव गुणदोषविवेकाधिकारिणो नान्य इति भावः ॥१०॥

**अन्वयः**—सदसद्व्यक्तिहेतवः, सन्तः, तं, श्रोतुम्, अर्हन्ति, हि, हेम्नः, विशुद्धिः, श्यामिका, अपि वा, अग्नौ, संलक्ष्यते ।

**वाच्य०**—सदसद्व्यक्तिहेतुभिः, सद्भिः, स श्रोतुमर्ह्यते, हि हेम्नो विशुद्धि श्यामिकामपि वा, अग्नौ संलक्षयन्ति सन्तः ।

**व्याख्या**—सत्=गुणः, असत्=दोषश्चेति सदसती तयोर्व्यक्तिः=विवेकस्तस्या, हेतवः=कर्तारः, परीक्षका इत्यर्थः इति सदसद्व्यक्तिहेतवः, सन्तः=सज्जनाः, श्रोतुम्=आकर्णयितुम्, अर्हन्ति=योग्या भवन्ति. हि=तथाहि, हेम्नः=सुवर्णस्य, विशुद्धिः=निर्दोषस्वरूपं, श्यामिका=सदोषता, अपि वा=अथवा, अग्नौ=वह्नौ, संलक्ष्यते=ज्ञायते, प्रतीयत इत्यर्थः । नान्यत्रेति भावः ।

**समा०**—सत् च असत् च सदसती, सदसतोः व्यक्तिः सदसद्व्यक्तिः, सदसद्व्यक्तेः हेतवः सदसद्व्यक्तिहेतवः ।

**अभि०**—यथा सुवर्णस्य सदोषत्वं निर्दोषत्वं वा वह्नौ, एव ज्ञायते, एवमत्र काव्येऽपि गुणदोषविवेककरणाय सन्त एवाधिकारिणः, नत्वन्ये ।

**हिन्दी**—भले बुरे की पहचान करने वाले विद्वान् ही इस काव्य को सुनने के अधिकारी हैं, क्योंकि सोने का खोटापन अथवा खरापन अग्नि में डालने पर ही जाचा जाता है ॥१०॥

वर्ण्यं वस्तूपक्षिपति—

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।**
**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११ ॥**

**सञ्जीविनी**—मनस ईषिणो मनीषिणो धीराः । विद्वांस इति यावत् । पृषोदरादित्वात्साधुः । तेषां माननीयः पूज्यः । छन्दसां वेदानाम् । 'छन्दः पद्ये च वेदे च' इति विश्वः । प्रणव ओंकार इव । महीं क्षियन्तीशत इति महीक्षितः क्षितीश्वराः । क्षिधातोरैश्वर्यार्थात्क्विप् तुगागमश्च । तेषामाद्य आदिभूतः । विवस्वतः सूर्यस्यापत्यं पुमान्वैवस्वतो नाम वैवस्वत इति प्रसिद्धो मनुरासीत् ॥११॥

**अन्वय**—मनीषिणां, माननीयः, छन्दसां प्रणवः, इव, महीक्षिताम्, आद्यः, वैवस्वतः, नाम मनुः, आसीत् ।

**वाच्य०**—मनीषिणां माननीयेन छन्दसां प्रणवेनेव महीक्षितामाद्येन वैवस्वतेन नाम्ना मनुनाऽभूयत ।

**व्याख्या**—मनसः, ईषिणः मनीषिणस्तेषां मनीषिणां = विदुषां, माननीयः = पूज्यः, छन्दन्तीति छन्दांसि तेषां छन्दसां = वेदानां, प्रणवः = ॐकारः, इव = यथा, महीं = पृथिवीं, क्षियन्ति = ईशते, इति महीक्षितस्तेषां महीक्षितां = क्षितीश्वराणाम्, आद्यः = प्रथमः, आदिभूत इत्यर्थः । विवस्वतः = सूर्यस्य, अपत्यं पुमान् वैवस्वतः, नाम = वैवस्वतनामा, मनुः = प्रथममनुः, आसीत् = बभूव ।

**समा०**—मनसः ईषिणः मनीषिणः, तेषाम् मनीषिणाम् । छन्दन्ति इति छन्दांसि तेषाम् छन्दसाम् । महीम् क्षियन्ति इति महीक्षितः, तेषाम् महीक्षिताम् । विवस्वतः अपत्यम् पुमान् वैवस्वतः ।

**अभि०**—सूर्यपुत्रः, वैवस्वतो मनुः, वेदानां प्रणव इव राज्ञामाद्यः, आसीत् ।

**हिन्दी**--जिस प्रकार वेदों में सर्व प्रथम ॐकार है उसी प्रकार राजाओं में सर्वप्रथम विद्वानों के पूज्य, सूर्यपुत्र वैवस्वत नाम के मनु हुए ॥११॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥१२॥

**सञ्जीविनी**—शुद्धिरस्यास्तीति शुद्धिमान् । तस्मिञ्शुद्धिमति । तदन्वये तस्य मनोरन्वये वंशे । 'अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनं कुलम्' इति हलायुधः । अतिशयेन शुद्धिमाञ्शुद्धिमत्तरः । 'द्विवचनविभज्योप०' इत्यादिना समासः । क्षीरनिधाविन्दुरिव प्रसूतो जातः ॥१२॥

**अन्वयः**—शुद्धिमति, तदन्वये, शुद्धिमत्तरः, दिलीपः, इति, राजेन्दुः, क्षीरनिधौ, इन्दुः, इव, प्रसूतः ।

**वाच्य०**—तदन्वये शुद्धिमत्तरेण दिलीपेनेति राजेन्दुना क्षीरनिधौ इन्दुनेव प्रसूतेन अभावि।

**व्याख्या**—शुद्धिरस्यास्तीति शुद्धिमान्, तस्मिन् शुद्धिमति = दोषरहिते, तस्य = मनोः, अन्वयः = वंशस्तस्मिन् तदन्वये अतिशयेन शुद्धिमान्, इति शुद्धिमत्तरः = अतीव पवित्रः = निष्कलंक इत्यर्थः, दिलीपः = दिलीपनाम्ना प्रसिद्धः, राजा इन्दुरिव, इति राजेन्दुः नृपचन्द्रः = राजश्रेष्ठ इत्यर्थः, निधीयतेऽस्मिन्निति निधिः, क्षीरस्य = दुग्धस्य, निधिः = आकर इति क्षीरनिधिः तस्मिन् क्षीरनिधौ, इन्दुः = चन्द्रः, इव = यथा, प्रसूतः = जातः।

**समा०**—शुद्धिः अस्य अस्ति इति शुद्धिमान् तस्मिन् शुद्धिमति, तस्य अन्वयः तदन्वयः, तस्मिन् तदन्वये, अतिशयेन शुद्धिमान् इति शुद्धिमत्तरः, राजा इन्दुः इव इति राजेन्दुः, निधीयते अस्मिन् इति निधिः, क्षीरस्य निधिः क्षीरनिधिः, तस्मिन् क्षीरनिधौ।

**अभि०**—यथा क्षीरसागरे चन्द्रो जातस्तथैव मनुवंशे दिलीपो जातः।

**हिन्दी**—उन्हीं सूर्यपुत्र मनु के उज्वल वंश में अत्यन्त पवित्र चरित्र वाले, राजाओं में श्रेष्ठ, राजा दिलीप वैसे ही पैदा हुए, जैसे क्षीरसागर में चन्द्रमा॥ १२॥

'व्यूढ–' इत्यादित्रिभिः श्लोकैर्दिलीपं विशिनष्टि—

> व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।
> आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः॥ १३॥

**सञ्जीविनी**—व्यूढं विपुलमुरो यस्य स व्यूढोरस्कः। 'उरःप्रभृतिभ्यः कप्' इति कप्प्रत्ययः 'व्यूढं विपुलं भद्रं स्फारं समं वसिष्ठं च' इति यादवः। वृषस्य स्कन्ध इव स्कन्धो यस्य स तथा। 'सप्तम्युपमान०' इत्यादिनोत्तरपदलोपी बहुव्रीहिः। शालो वृक्ष इव प्रांशुरुन्नतः शालप्रांशुः। 'प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः' इति यादवः। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्ग' इत्यमरः। महाभुजो महाबाहुः। आत्मकर्मक्षमं स्वव्यापारानुरूपं देहमाश्रितः प्राप्तः क्षात्रः क्षत्रसंबन्धी धर्म इव स्थितः। मूर्तिमान्पराक्रम इव स्थित इत्युत्प्रेक्षा॥ १३॥

**अन्वयः**—व्यूढोरस्कः, वृषस्कन्धः, शालप्रांशुः, महाभुजः, आत्मकर्मक्षमम्, देहम्, आश्रितः, क्षात्रः, धर्मः, इव, 'स्थितः'।

वाच्य०—व्यूढोरस्केन वृषस्कन्धेन शालप्रांशुना महाभुजेन देहमाश्रितेन क्षात्रेण धर्मेणेव स्थितम् ।

व्याख्या—व्यूढं = विपुलम्, उरः = वक्षःस्थलं यस्य स व्यूढोरस्कः, वृषस्य = बलीवर्दस्य स्कन्धः, इव, स्कन्धः = अंसः यस्य स वृषस्कन्धः 'स्कन्धो भुजशिरोंऽसः' इत्यमरः, शालः = शालवृक्षः इव, प्रांशुः = उन्नतः, इति शालप्रांशुः, महान्तौ = दीर्घौ, भुजौ = बाहू यस्य स महाभुजः, आत्मनः = स्वस्य, कर्म = व्यापारः, तत्र क्षमं = तदनुरूपमिति, आत्मकर्मक्षमं, देहं = शरीरम्, आश्रितः = प्राप्तः, क्षत्रस्यायं क्षात्रः = क्षत्रियसम्बन्धी, धर्मः = स्वभावः = पराक्रम इत्यर्थः, इव = यथा 'स्थितः'।

समा०—व्यूढम् उरः यस्य सः व्यूढोरस्कः, वृषस्य स्कन्धः इव स्कन्धः यस्य सः वृषस्कन्धः, शालः इव प्रांशुः शालप्रांशुः, महान्तौ भुजौ यस्य सः महाभुजः, आत्मनः कर्म इति आत्मकर्म, आत्मकर्मणि क्षमम् आत्मकर्मक्षमम्, तत् तथोक्तम्, क्षत्रस्य अयम् क्षात्रः ।

अभि०—मूर्तिमान् क्षत्रियधर्म इव विशालवक्षाः, दीर्घबाहुः, उन्नतो दिलीपः एवं भूतः 'स्थितः' ।

हिन्दी—चौड़ी छाती, बैल के समान ऊंचे भारी कन्धों वाले शालवृक्ष के समान उन्नत (ऊंचे) और दीर्घ भुजा वाले (फिर भी) अपने कार्य करने में समर्थ शरीर को धारण किए, राजा दिलीप ऐसे जान पड़ते थे, मानो शरीरधारी क्षत्रियों का वीरतारूपी धर्म हो ॥ १३ ॥

सर्वातिरिक्तसारेण सर्वतेजोभिभाविना ।
स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥१४॥

सञ्जीविनी—सर्वातिरिक्तसारेण सर्वेभ्यो भूतेभ्योऽधिकबलेन । 'सारो बले स्थिरांशे च' इत्यमरः । सर्वाणि भूतानि तेजसाभिभवतीति सर्वतेजोभिभावी तेन । सर्वेभ्य उन्नतेनात्मना शरीरेण 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति विश्वः । मेरुरिव । उर्वीं क्रान्त्वाक्रम्य स्थितः । मेरावपि विशेषणानि तुल्यानि 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥' इति मनुवचनाद्राज्ञः सर्वतेजोभिभावित्वं ज्ञेयम् ॥१४॥

अन्वयः—सर्वातिरिक्तसारेण, सर्वतेजोभिभाविना, सर्वोन्नतेन, मेरुः, इव, उर्वीं, क्रान्त्वा, "स्थितः" एवं भूतो दिलीपः ।

**वाच्य०**—सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना सर्वोन्नतेनात्मना मेरुणेव, तेन, उर्वीं क्रान्त्वा स्थितेनाभावि।

**व्याख्या**—सर्वेभ्यः = समस्तभूतेभ्यः,अतिरिक्तः=विशिष्टः = अधिक इत्यर्थः, सारः = बलं यस्य स सर्वातिरिक्तसारः, तेन सर्वातिरिक्तसारेण सर्वान् = अखिलान् "जनान्" तेजसा = स्वप्रतापेन, अभिभवति = तिरस्करोतीति सर्वतेजोऽभिभावी, तेन सर्वतेजोऽभिभाविना, सर्वेभ्यः = सर्वभूतेभ्यः, उन्नतः = प्रांशुः, तेन सर्वोन्नतेन, आत्मना = शरीरेण, मेरुः = सुमेरुपर्वतः, इव = यथा, उर्वीं = पृथिवीं, क्रान्त्वा = व्याप्य, आक्रम्येत्यर्थः 'स्थितः, दिलीपः'। प्रथमान्तानि कृत्वा मेरुपर्वतेऽपि विशेषणानि योजनीयानि।

**समा०**—सर्वेभ्यः अतिरिक्तः सारः यस्य सः सर्वातिरिक्तसारः तेन, सर्वातिरिक्तसारेण। सर्वान् तेजसा अभिभवति इति सर्वतेजोऽभिभावी, तेन सर्वतेजोऽभिभाविना। सर्वेभ्यः उन्नतः सर्वोन्नतः, तेन सर्वोन्नतेन।

**अभि०**—राजा दिलीपः सुमेरुपर्वत इव शरीरेण बलेनौन्नत्येन तेजसा च 'सर्वातिशायी' सन् पृथिवीमधिष्ठाय स्थितः।

**हिन्दी**—जिस प्रकार सुमेरु पर्वत ने अपनी दृढ़ता से अपनी कान्ति से तथा ऊँचाई से सभी दृढ, कान्ति वाले तथा ऊँचे पदार्थों को दबाकर अपने विस्तार से सारी पृथिवी को व्याप्त कर रखा है वैसे ही राजा दिलीप ने अपने पराक्रम, तेज और लम्बे चौड़े शरीर से सब को नीचा दिखाकर समस्त पृथिवी मण्डल को अपने अधीन कर लिया था ॥१४॥

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।
आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥१५॥

**सञ्जीविनी**—आकारेण मूर्त्या सदृशी प्रज्ञा यस्य सः। प्रज्ञया सदृशागमः प्रज्ञानुरूपशास्त्रपरिश्रमः। आगमैः सदृश आरम्भः कर्म यस्य स तथोक्तः। आरभ्यत इत्यारम्भः कर्म। तत्सदृश उदयः फलसिद्धिर्यस्य स तथोक्तः ॥१५॥

**अन्वयः**—आकारसदृशप्रज्ञः, प्रज्ञया, सदृशागमः, आगमैः सदृशारम्भः, आरम्भसदृशोदयः, 'स दिलीप आसीत्'।

**वाच्य०**—आकारसदृशप्रज्ञेन, प्रज्ञया सदृशागमेन, आगमैः सदृशारम्भेण, आरम्भसदृशोदयेन, दिलीपेन अभावि।

**व्याख्या**—आकारेण = मूर्त्या = शरीराकारेणेत्यर्थः, सदृशी = तुल्या, प्रज्ञा = बुद्धिः, यस्य स आकारसदृशप्रज्ञः, प्रज्ञया = बुद्ध्या, सदृशः = अनुरूपः, आगमः = शास्त्रं यस्य स, सदृशागमः, आगमैः = शास्त्रैः, आरभ्यते इत्यारम्भः, सदृशः = तुल्यः आरम्भः = कर्म यस्य स, सदृशारम्भः, आरम्भेण = उपक्रमेण कर्मणा, सदृशः = समानः उदयः = परिणामः फलसिद्धिरित्यर्थः, यस्य स आरम्भसदृशोदयः, स दिलीपः, आसीत् ।

**समा०**—आकारेण सदृशी प्रज्ञा यस्य सः आकारसदृशप्रज्ञः । सदृशः आगमः यस्य सः सदृशागमः । आरभ्यते इति आरम्भः, आरम्भेण सदृशः उदयः यस्य सः आरम्भसदृशोदयः ।

**अभि०**—राजा दिलीपो यथा प्रशस्ताकारवान् तथैव तीक्ष्णबुद्धिरपि, एवं यादृशी तस्य बुद्धिः तादृश एव शास्त्रपरिश्रमः, तथा शास्त्रपरिश्रमानुसारी एव कार्यारम्भः, कार्यारम्भानुकूलमेव साफल्यमपि आसीत् ।

**हिन्दी**—राजा दिलीप जैसे सुन्दर विशालकाय थे वैसी ही, उनकी कुशाग्र-बुद्धि थी। जैसी तीक्ष्ण बुद्धि थी वैसे ही वे शास्त्राभ्यासी थे, इस लिये शास्त्रानुकूल ही कार्य करते थे, और वैसी ही पूर्ण सफलता भी उनको मिलती थी ॥१५॥

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥१६॥

**सञ्जीविनी**—भीमैश्च कान्तैश्च नृपगुणैः राजगुणैस्तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च स दिलीप उपजीविनामाश्रितानाम् यादोभिर्जलजीवैः । 'यादांसि जलजन्तवः' इत्यमरः । रत्नैश्चार्णव इव । अधृष्योऽनभिगम्य आश्रयणीयश्च बभूव ॥१६॥

**अन्वयः**—भीमकान्तैः, नृपगुणैः, सः, उपजीविनां, यादोरत्नैः, अर्णवः, इव, अधृष्यश्च, अभिगम्यश्च, बभूव ।

**वाच्य०**—तेन अधृष्येण च, अभिगम्येन च यादोरत्नैरर्णवेन, इव बभूवे ।

**व्याख्या**—भीमाः = भयंकराः, च, कान्ताः = मनोहराश्च, ते भीमकान्तास्तैः, भीमकान्तैः, नृपाणां = राज्ञां, गुणाः = तेजःप्रतापदयादाक्षिण्यादयस्तैः नृपगुणैः, सः = राजा दिलीपः, उपजीवन्ति ते उपजीविनस्तेषामुपजीविनाम् = आश्रितजनानाम्, यादांसि = जलजन्तवः च, रत्नानि = मण्यादयश्च तानि, तैः यादोरत्नैः,

अर्णवः = समुद्रः, इव = यथा, धर्षितुं योग्यो धृष्यः, न धृष्यः अधृष्यः = अनभिभव-नीयः, अभिगन्तुं योग्योऽभिगम्यः = आश्रयणीयश्च, बभूव = जातः ।

**समा०**—भीमाः च कान्ताः च भीमकान्ताः तैः भीमकान्तैः, नृपाणाम् गुणाः नृपगुणाः तैः नृपगुणैः, उपजीवन्ति इति उपजीविनः तेषाम् उपजीविनाम्, यादांसि च रत्नानि च यादोरत्नानि तैः यादोरत्नैः, धर्षितुम् योग्यः धृष्यः न धृष्यः अधृष्यः, अभिगन्तुम् योग्यः अभिगम्यः ।

**अभि०**—जलजन्तुभिः, रत्नैश्च सागरो यथा, अनभिभवनीयः, आश्रयणीयश्च भवति तथैव आश्रितानाम् राजा दिलीपोऽपि तेजःप्रतापादिभिः, दयादाक्षिण्यादिभिश्च बभूव ।

**हिन्दी**—तेज प्रताप आदि डरावने तथा दया दाक्षिण्य आदि सुन्दर गुणों के कारण राजा दिलीप का उनके आश्रितजन वैसे ही तिरस्कार नहीं करते थे तथा सेवा भी करते थे, जैसे कि मगर-मच्छों तथा रत्नों के कारण समुद्र का। अर्थात् मकरादि से डरकर लोग समुद्र से दूर भी भागते हैं और रत्नों को लेने के लिये उसमें घुसते भी हैं ॥१६॥

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥१७॥

**सञ्जीविनी**—नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य संबन्धिन्यो नेमीनां चक्रधाराणां वृत्तिरिव वृत्तिर्व्यापारो यासां ताः, 'चक्रधारा प्रधिर्नेमिः' इति यादवः । 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः । प्रजाः आ मनोः मनुमारभ्येत्यभिविधिः । पदद्वयं चैतत् । समासस्य विभाषितत्वात् । क्षुण्णादभ्यस्तात्प्रहताच्च वर्त्मन आचारपद्धतेरध्वनश्च परमधिकम् । इतस्तत इत्यर्थः । रेखा प्रमाणमस्येति रेखामात्रं रेखाप्रमाणं । ईषदपीत्यर्थः । 'प्रमाणे द्वयसज्दघ्नञ् मात्रचः' इत्यनेन मात्रच्प्रत्ययः । परशब्दविशेषणं चैतत् । न व्यतीयुर्नातिक्रान्तवत्यः । कुशलसारथिप्रेषिता रथनेमय इव तस्य प्रजाः पूर्व-क्षुण्णमार्गं न जहुरिति भावः ॥१७॥

**अन्वयः—नियन्तुः, तस्य, नेमिवृत्तयः, प्रजाः, आ मनोः, क्षुण्णाद्, वर्त्मनः, परं, रेखामात्रमपि, न, व्यतीयुः ।**

**वाच्य०**—नियन्तुस्तस्य नेमिवृत्तिभिः प्रजाभिः आमनोः क्षुण्णात् वर्त्मनः परं रेखामात्रमपि न व्यतीये।

**व्याख्या**—नियन्तुः = नियामकस्य, शिक्षकस्येत्यर्थः, तस्य = दिलीपस्य, नेमीनां = चक्रधाराणां = चक्ररेखाणामित्यर्थः, वृत्तिः इव वृत्तिः = वर्तनं, व्यापारः यासां = ताः, नेमिवृत्तयः, इव = यथा, प्रजाः = लोकाः. आ मनोः = मनुमारभ्य, क्षुण्णात् = अभ्यस्तात्, नेमिपक्षे प्रहृतात्, वर्त्मनः = आचारपद्धतेः मार्गाच्च, परम् = अधिकं, रेखामात्रं = रेखाप्रमाणम्, ईषदपीत्यर्थः, न = नहि, व्यतीयुः = अतिक्रान्तवन्तः।

**समा०**—नेमीनाम् वृत्तिः इव वृत्तिः यासाम् ताः नेमिवृत्तयः, मनुम् आरभ्य आमनोः, रेखा प्रमाणमस्येति रेखामात्रम्।

**अभि०**—यथा कुशलसारथिप्रेरिता रथनेमयः पूर्णक्षुण्णमार्गं किंचिदपि न त्यजन्ति, तथैव कुशलशासकेन दिलीपेन रक्षिताः प्रजाः,आमनोः,अभ्यस्तामाचारपद्धतिमपि न परितत्यजुः।

**हिन्दी**—जिस प्रकार चतुर सारथी से चलाए गए रथ के पहिये जरा भी लीक से इधर-उधर नहीं हो पाते, वैसे ही सुयोग्य शासक राजा दिलीप से शासित प्रजा किंचिन्मात्र भी भगवान् मनु के नियमों का उल्लंघन नहीं करती थी।

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १८ ॥

**सञ्जीविनी**—स राजा प्रजानां भूत्या अर्थाय भूत्यर्थं वृद्ध्यर्थमेव। 'अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या'। ग्रहणक्रियाविशेषणं चैतत्। ताभ्यः प्रजाभ्यो बलिं करम्, 'भागधेयः करो बलिः' इत्यमरः। तथाहि। रविः सहस्रं गुणा यस्मिन्कर्मणि तद्यथा तथा सहस्रगुणं सहस्रधोत्स्रष्टुं दातुम्। उत्सर्जनक्रियाविशेषणं चैतत्। रसमम्ब्वादत्ते गृह्णाति। 'रसो गन्धे रसे स्वादे तिक्तादौ विषरोगयोः। शृंगारादौ द्रवे वीर्ये देहधात्वम्बुपारदे॥' इति विश्वः॥१८॥

**अन्वयः**—सः, प्रजानां, भूत्यर्थम्, एव, ताभ्यः, बलिम्, अग्रहीत्, हि, रविः, सहस्रगुणम्, उत्स्रष्टुं, रसम्, आदत्ते।

**वाच्य०**—तेन प्रजानां भूत्यर्थमेव बलिरग्राहि, हि सहस्रगुणमुत्स्रष्टुं रविणा, रस आदीयते।

**व्याख्या**—सः = राजा दिलीपः, प्रजानां = लोकानां, भूत्यै, इदं भूत्यर्थं = कल्याणार्थं, ताभ्यः = प्रजाभ्यः, बलिं = षष्ठांशरूपं करम्, अग्रहीत् = जग्राह, हि = यतः, रविः = सूर्यः, सहस्रं गुणा यस्मिन् कर्मणि तत् सहस्रगुणं = सहस्रगुणाधिकम्, उत्स्रष्टुं = दातुं, रसं = जलम्, आदत्ते = गृह्णाति ।

**समा०**—भूत्यै इदम् भूत्यर्थम्, सहस्रम् गुणाः यस्मिन्कर्मणि तत् सहस्रगुणम् ।

**अभि०**—यथा सूर्यः पृथिवीतो जलं गृहीत्वा सहस्रगुणाधिकं वर्षति तथैव राजा दिलीपः प्रजाकल्याणार्थमेव करं गृहीत्वा सहस्रगुणं कृत्वा ददौ, न तु स्वकीयभोगविलासार्थं जग्राहेति भावः ।

**हिन्दी०**—जैसे सूर्य अपनी किरणों के द्वारा पृथिवी से जल सोखकर हजारगुना वर्षा करता है, वैसे ही राजा दिलीप भी अपनी प्रजा से जो आय का छठा भाग कर रूप में लेते थे उसे प्रजा के कल्याण में ही लगा देते थे ॥१८॥

सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ १९ ॥

**सञ्जीविनी**—तस्य राज्ञः सेना चतुरङ्गबलम् । परिच्छाद्यतेऽनेनेति परिच्छद उपकरणं बभूव । छत्रचामरादितुल्यमभूदित्यर्थः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । 'छादेर्घेऽद्व्युपसर्गस्य' इत्युपधाह्रस्वः । अर्थस्य प्रयोजनस्य तु साधनं द्वयमेव । शास्त्रेष्वकुण्ठिताऽव्याहता बुद्धिः । 'व्यापृता' इत्यपि पाठः । धनुष्याततासऽरोपिता मौर्वी ज्या च । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । नीतिपुरःसरमेव तस्य शौर्यमभूदित्यर्थः ॥१९॥

**अन्वयः**—तस्य, सेना, परिच्छदः, 'बभूव' अर्थसाधनं, द्वयमेव, शास्त्रेषु, अकुण्ठिता, बुद्धिः, धनुषि, आतता, मौर्वी, च ।

**वाच्य०**—तस्य सेनया परिच्छदेनाभावि, शास्त्रेष्वकुण्ठितया बुद्ध्या, धनुषि, आततया मौर्व्या चेति द्वयेनैवार्थसाधनेनाभावि ।

**व्याख्या**—तस्य = राज्ञो दिलीपस्य, सेना = सैन्यं = चतुरङ्गबलमित्यर्थः, परिच्छाद्यते अनेनेति परिच्छदः = उपकरणं, 'बभूव' छत्रचामरादितुल्यमित्यर्थः, अर्थस्य = प्रयोजनस्य, साधनं = निर्वर्तकं, द्वयम् = द्वितयम्, एव शास्त्रेषु = आगमेषु = नीतिशास्त्रेष्वित्यर्थः, अकुण्ठिता = अव्याहता, बुद्धिः = मतिः, धनुषि =

चापे, आनता=आरोपिता, मौर्वी=ज्या च। नीतिपूर्वकमेव दिलीपस्य शौर्यमभूदित्यर्थः।

**समा०**—परिच्छाद्यते अनेन इति परिच्छदः। अर्थस्य साधनम् अर्थसाधनम्। न कुण्ठिता अकुण्ठिता।

**अभि०**—राज्ञो दिलीपस्य सैन्यं तु छत्रचामरादिवत् शोभार्थमेव, किन्तु नीतिशास्त्रानुसारिणी बुद्धिः सज्यं धनुश्चेति द्वयमेव, सम्पूर्णप्रयोजनसाधकमभूत्।

**हिन्दी**—राजा दिलीप की विशाल सेना तो केवल उपकरण 'शोभा' मात्र थी, और उसके प्रयोजन इन दो बातों से ही सिद्ध हो जाते थे, एक तो सम्पूर्ण शास्त्रावगाहिनी बुद्धि और दूसरी धनुष पर चढ़ी डोरी ॥१९॥

राज्यमूलं मन्त्रसंरक्षणं तस्यासीदित्याह—

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २० ॥

**सञ्जीविनी**—संवृतमन्त्रस्य गुप्तविचारस्य। 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः। शोकहर्षादिसूचको भ्रकुटीमुखरागादिराकारः इङ्गितं चेष्टितं हृदयगतविकारो वा। 'इङ्गितं हृद्गतो भावो बहिराकार आकृतिः' इति सज्जनः। गूढे आकारेङ्गिते यस्य। स्वभावचापलाद् भ्रमपरम्परया मुखरागादिलिङ्गैर्वा तृतीयगामिमन्त्रस्य तस्य। प्रारभ्यन्त इति प्रारम्भाः सामाद्युपायप्रयोगाः। प्रागित्यव्ययेन पूर्वजन्मोच्यते। तत्र भवा प्राक्तनाः। 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' इत्यनेन ट्युल्प्रत्ययः। संस्काराः पूर्वकर्मवासना इव। फलेन कार्येणानुमेया अनुमातुं योग्या आसन्। अत्र याज्ञवल्क्यः—'मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम्। कुर्याद्यथा तन्न विदुः कर्मणामा फलोदयात् ॥' इति ॥२०॥

**अन्वयः**—संवृतमन्त्रस्य, गूढाकारेङ्गितस्य च, तस्य, प्रारम्भाः, प्राक्तनाः, संस्काराः, इव, फलानुमेयाः, 'आसन्' इति शेषः।

**वाच्य०**—तस्य प्रारम्भैः प्राक्तनैः संस्कारैः, इव फलानुमेयैः अभावि।

**व्याख्या**—संवृतः=गुप्तः, मन्त्रः=विचारो यस्य स तस्य संवृतमन्त्रस्य, आकारः=आकृतिः=हर्षशोकादिसूचको भ्रकुटिमुखरागादिरित्यर्थः, इङ्गितं=चेष्टितञ्चेति, आकारेङ्गिते, गूढे=अप्रकाशिते, आकारेङ्गिते यस्य स तस्य गूढाकारेङ्गितस्य, च तस्य=दिलीपस्य, प्रारभ्यन्त इति प्रारम्भाः=सामाद्युपायप्रयोगाः,

प्राक्तनाः = पूर्वजन्मभवाः, संस्काराः = पूर्वकर्मवासनाः, इव = यथा, फलेन = कार्येण, अनुमेयाः = ज्ञेयाः, इति फलानुमेयाः 'आसन्' ।

**समा०**—संवृतः मन्त्रः यस्य सः संवृतमन्त्रः तस्य संवृतमन्त्रस्य । आकारः च इङ्गितं च आकारेङ्गिते, गूढे आकारेङ्गिते यस्य सः गूढाकारेङ्गितः, तस्य गूढाकारेङ्गितस्य । प्रारभ्यन्ते इति प्रारम्भाः । अनुमातुम् योग्याः अनुमेयाः, फलेन अनुमेयाः फलानुमेयाः ।

**अभि०**—गुप्तमंत्राकारचेष्टितस्य राज्ञो दिलीपस्य कार्याणि तथैव फलानुमेयानि आसन् यथा पूर्वजन्मसंस्काराः फलानुमेया भवन्ति ।

**हिन्दी**—सर्व प्रकार से मंत्रणा को गुप्त रखनेवाले तथा और बाहर-भीतर के सुख-दुःख के चिह्नों को भी छिपाने वाले राजा दिलीप के समस्त कार्य, पूर्वजन्म के संस्कारों के समान फल से ही जाने जाते थे ॥२०॥

संप्रति सामाद्युपायान्विनैवात्मरक्षादिकं कृतवानित्याह—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥२१॥

**सञ्जीविनी**—अत्रस्तोऽभीतः सन् । 'त्रस्तो भीरुर्भीरुकभीलुकाः' इत्यमरः । त्रासोपाधिमन्तरेणैव त्रिवर्गसिद्धेः प्रथमसाधनत्वादेवात्मानं शरीरं जुगोप रक्षितवान् । अनातुरोऽरुग्ण एव धर्मं सुकृतं भेजे । अर्जितवानित्यर्थः । अगृध्नुरगर्धनशील एवार्थमाददे स्वीकृतवान् । 'गृध्नुस्तु गर्धनः । लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ' इत्यमरः, 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः । असक्त आसक्तिरहित एव सुखमन्वभूत् ॥२१॥

**अन्वयः**—सः, अत्रस्तः, 'सन्' आत्मानं, जुगोप, अनातुरः, 'सन्' धर्मं, भेजे, अगृध्नुः, 'सन्' अर्थम्, आददे, असक्तः, 'सन्' सुखम्, अन्वभूत् ।

**वाच्य०**—तेनात्रस्तेन 'सता' आत्मा जुगुपे, अनातुरेण 'सता' धर्मो भेजे अगृध्नुना 'सता' अर्थः आददे, असक्तेन सुखमन्वभावि ।

**व्याख्या**—सः = राजा दिलीपः, न त्रस्तोऽत्रस्तः = अभीतः 'सन्' 'भयं विनैव त्रिवर्गसिद्धेः, प्रथमसाधनत्वादेव', आत्मानं = शरीरं, जुगोप = ररक्ष = रक्षितवानित्यर्थः । न, आतुरः, अनातुरः = अरुग्णः, 'सन्' धर्मं = सुकृतं = पुण्यमित्यर्थः, भेजे = सिषेवे, अर्जितवानित्यर्थः, न गृध्नुः अगृध्नुः = अलुब्धः, 'सन्' अर्थं =

धनं = वित्तमिति यावत्, आददे = स्वीचकार = स्वीकृतवानित्यर्थः, न सक्तः, असक्तः = आसक्तिरहितः, सन्, सुखम् = आनन्दम्, अन्वभूत् = अनुभूतवान् ।

समा०—न त्रस्त: अत्रस्तः, न आतुरः अनातुरः, न गृध्नुः अगृध्नुः, न सक्तः असक्तः ।

अभि०—राजा दिलीपो भीत्या शरीरं न रक्षितवान् किन्तु अभीत एव, रोगात् धर्मं न पालयामास, अपितु स्वस्थ एव, एवं लोभस्य कारणाद् धनं नाददे किन्तु अलुब्ध एव, एवं सुखानुभवमपि आसक्तिरहित एवान्वभूत् ।

हिन्दी—राजा दिलीप निडर होकर अपनी रक्षा करते थे, नीरोग होकर धर्म की सेवा करते थे एवं लोभ छोड़कर धन का संग्रह करते थे, तथा आसक्ति (मोह) को त्यागकर सांसारिक सुखों का अनुभव करते थे ॥२१॥

परस्परविरुद्धानामपि गुणानां तत्र साहचर्यमासीदित्याह—

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥२२॥

सञ्जीविनी—ज्ञाने परवृत्तान्तज्ञाने सत्यपि मौनं वाङ्नियमनम् । यथाह कामन्दकः—'नात्योपतापि वचनं मौनं व्रतचरिष्णुता' इति । शक्तौ प्रतीकारसामर्थ्येऽपि क्षमापकारसहनम् । अत्र चाणक्यः—'शक्तानां भूषणं क्षमा' इति । त्यागे वितरणे सत्यपि श्लाघाया विकत्थनस्य विपर्ययोऽभावः । अत्राह मनुः—'न दत्त्वा परिकीर्तयेत्' इति । इत्थं तस्य गुणा ज्ञानादयो गुणैर्विरुद्धैर्मौनादिभिरनुबन्धित्वात्सहचारित्वात् । सह प्रसवो जन्म येषां ते सप्रसवाः सोदरा इवाभूवन् । विरुद्धा अपि गुणास्तस्मिन्नविरोधेनैव स्थिता इत्यर्थः ॥२२॥

अन्वयः—ज्ञाने, मौनं, शक्तौ, क्षमा, त्यागे, श्लाघाविपर्ययः 'इत्थं' तस्य, गुणाः, गुणानुबन्धित्वात्, सप्रसवाः, इव, 'अभूवन्' ।

वाच्य०—ज्ञाने मौनेन, शक्तौ क्षमया, त्यागे श्लाघाविपर्ययेण, तस्य गुणैः गुणानुबन्धित्वात् सप्रसवैरिव अभावि ।

व्याख्या—ज्ञाने = परवृत्तान्तज्ञाने सत्यपि, मौनं = मौनावलम्बनम्, शक्तौ = प्रतीकारसामर्थ्येऽपि, क्षमा = क्षमाकरणम् = अपकारसहनमित्यर्थः, त्यागे = दाने सत्यपि, श्लाघायाः = विकत्थनस्य = आत्मप्रशंसाया इत्यर्थः, विपर्ययोऽभाव

इति, श्लाघाविपर्ययः, 'इत्थं' तस्य = राज्ञो दिलीपस्य गुणाः = ज्ञानादयः, गुणैः मौनादिभिः, विरुद्धैः, अनुबन्धित्वं = सहचारित्वमिति तस्मात् गुणानुबन्धित्वात्, सह प्रसवः = जन्म येषां ते सप्रसवाः = सहोदरा, इव = यथा, अभूवन् ।

समा० —श्लाघायाः विपर्ययः श्लाघाविपर्ययः। अनु बध्नन्ति इति अनुबन्धिनः, अनुबन्धिनां भावः अनुबन्धित्वम् गुणैः अनुबन्धित्वम् गुणानुबन्धित्वम् तस्मात् गुणानुबन्धित्वात् । सह प्रसवः येषाम् ते सप्रसवाः ।

अभि०—तस्मिन् दिलीपे, परस्परविरुद्धा अपि ज्ञानमौनादिगुणाः, सोदराः, इव, एकत्राभूवन् ।

हिन्दी—दूसरों की बात जानकर भी चुप रहना, शत्रु से बदला लेने की सामर्थ्य रहते भी क्षमा करना, तथा दान देकर आत्मप्रशंसा न करना, इस प्रकार दिलीप के ज्ञानादि गुण, मौनादि विरुद्ध गुणों के साथ रहने के कारण सगे भाई जैसे जान पड़ते थे । अर्थात् दिलीप में, परस्पर विरोधी गुण बिना विरोध के रहते थे ॥२२॥

द्विविधं वृद्धत्वम् ज्ञानेन वयसा च । तत्र तस्य ज्ञानेन वृद्धत्वमाह—

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥२३॥

सञ्जीविनी—विषयैः शब्दादिभिः 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः । अनाकृष्टस्यावशीकृतस्य विद्यानां वेदवेदाङ्गादीनां पारदृश्वनः पारमन्तं दृष्टवतः । दृशेः क्वनिप् । धर्मे रतिर्यस्य तस्य राज्ञो जरसा विना । 'विस्रसा जरा' इत्यमरः । 'षिद्भिदादिभ्योऽङ्' इत्यङ्प्रत्ययः, 'जराया जरसन्यतरस्याम्' इति जरसादेशः । वृद्धत्वं वार्धकमासीत् । तस्य यूनोऽपि विषयवैराग्यादिज्ञानगुणसंपत्त्या ज्ञानतो वृद्धत्वमासीदित्यर्थः । नाथस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा 'अनाकृष्टस्य' इत्यादिना विशेषणत्रयेण वैराग्यज्ञानशील-वृद्धत्वान्युक्तानीत्यवोचत् ॥२३॥

अन्वयः—विषयैः अनाकृष्टस्य, विद्यानां, पारदृश्वनः, धर्मरतेः, तस्य, जरसा विना, वृद्धत्वम्, आसीत् ।

वाच्य०—धर्मरतेस्तस्य जरसा विना वृद्धत्वेनाभावि ।

**व्याख्या**—विषयैः = शब्दादिभिः, न, आकृष्टः अनाकृष्टस्तस्य, अनाकृष्टस्य, विद्यानां = वेदवेदांगादीनां, पारम् = अन्तं, दृष्टवान् = ज्ञातवान्, इति पारदृश्वा, तस्य पारदृश्वनः, धर्मे = सुकृते, रतिः = अनुरागो यस्य स, तस्य धर्मरतेः तस्य = राज्ञो दिलीपस्य, जरसा = जरया, वृद्धावस्थयेत्यर्थः, विना = अन्तरेण, वृद्धस्य भावः, कर्म वा, वृद्धत्वं = वार्धकम्, आसीत् ।

**समा०**—न आकृष्टः अनाकृष्टः तस्य अनाकृष्टस्य । पारम् दृष्टवान् इति पारदृश्वा तस्य पारदृश्वनः । धर्मे रतिः यस्य सः धर्मरतिः तस्य धर्मरतेः । वृद्धस्य भावः कर्म वा वृद्धत्वम् ।

**अभि०**—यौवनसम्पन्नस्यापि विषयवैराग्यादिज्ञानगुणसम्पत्तिशालिनो धर्मरतेः राज्ञो दिलीपस्य वृद्धावस्थामन्तरेणापि ज्ञानतो वृद्धत्वमासीत् ।

**हिन्दी**—सांसारिक भोगों से दूर रहनेवाले वेदवेदांगादि के पारंगत, धर्मानुरागी राजा दिलीप जवानी में ही इतने ज्ञानसम्पन्न हो गए कि वृद्धावस्था के विना भी उनमें बुढ़ापा जान पड़ने लगा, अर्थात् ज्ञान से बड़े-बूढ़े जान पड़ते थे ॥ २३ ॥

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥

**सञ्जीविनी**—प्रजायन्त इति प्रजा जनाः 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः । 'प्रजा स्यात्संततौ जने' इत्यमरः । तासां विनयस्य शिक्षाया आधानात्करणात् सन्मार्गप्रवर्तनादिति यावत् । रक्षणाद्भयहेतुभ्यस्त्राणात् आपन्निवारणादिति यावत् । भरणादन्नपानादिभिः पोषणादपि । अपिः समुच्चये । स राजा पिताऽभूत् । तासां पितरस्तु जन्महेतवो जन्ममात्रकर्तारः । केवलमुत्पादका एवाभूवन् । जननमात्र एव पितॄणां व्यापारः । सदा शिक्षारक्षणादिकं तु स एव करोतीति तस्मिन्पितृत्वव्यपदेशः । आहुश्च—'स पिता यस्तु पोषकः' इति ॥२४॥

**अन्वयः**—प्रजानां, विनयाधानात्, रक्षणात्, भरणात्, अपि, सः पिता "अभूत्," तासां पितरः 'तु' केवलं जन्महेतवः "अभूवन्" ।

**वाच्य०**—प्रजानां विनायाधानात् भरणात् रक्षणादपि तेन पित्राऽभूयत, तासां पितृभिः, जन्महेतुभिरभूयत ।

**व्याख्या**—प्रजायन्ते इति = प्रजास्तासाम्प्रजानां = जनानां, विनयस्य = शिक्षणस्य, आधानं = करणं, तस्मात्, विनयाधानात्, सन्मार्गे प्रवर्तनादित्यर्थः, रक्षणात् = चौरादिभयहेतुभ्यस्त्राणात्, विपत्तिनिवारणादित्यर्थः, भरणात् = अन्नपानादिदानेन पोषणात्, अपि सः = राजा दिलीपः, पाति = रक्षतीति पिता = पालकः, 'अभूत्', तासां प्रजानां, पितरः = जनकाः, तु, जन्मनः = जन्ममात्रस्य, उत्पादनमात्रस्येति यावत्, हेतवः = कर्तारः, 'एव अभूवन्' ।

**समा०**—प्रकर्षेण जायन्ते इति प्रजाः तासाम् प्रजानाम् । विनयस्य आधानम् विनयाधानम् तस्मात् विनयाधानात् । पाति इति पिता । जन्मनः हेतवः जन्महेतवः ।

**अभि०**—राजा दिलीपो हि स्वप्रजानां शिक्षणभरणरक्षणं सर्वदैवाकरोदिति स एव पिता आसीत्, पितॄणां केवलं जननव्यापारो न तु शिक्षणादिषु ।

**हिन्दी**—अपनी प्रजा को नम्रता, सदाचार की शिक्षा देने से, और उसकी आपत्तियों से रक्षा करने से, एवं अन्नजल की व्यवस्था करके पालन करने से राजा दिलीप ही वास्तव में प्रजा के पिता थे, पिता कहाने वाले और सब तो केवल जन्म देकर नाममात्र के ही पिता थे ॥२४॥

स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥२५॥

**सञ्जीविनी**—दण्डमर्हन्तीति दण्ड्याः 'दण्डादिभ्यो यः' इति यप्रत्ययः । 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' इति शास्त्रवचनात् । तान् दण्ड्यानेव स्थित्यै लोकप्रतिष्ठायै दण्डयतः शिक्षयतः । प्रसूतये संतानायैव परिणेतुर्दारान्परिगृह्णतः । मनीषिणो विदुषः दोषज्ञस्येति यावत् । 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी' इत्यमरः । तस्य दिलीपस्यार्थकामावपि धर्म एवास्तां जातौ । अस्तेर्लङ् । अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पादनरूपधर्मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन्स राजा धर्मोत्तरोऽभूदित्यर्थः । आह च गौतमः—'न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्यात् यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्' इति ॥२५॥

**अन्वयः—दण्ड्यान्, एव, स्थित्यै, दण्डयतः, प्रसूतये, परिणेतुः, मनीषिणः, तस्य, अर्थकामौ, अपि, धर्मः, एव, आस्ताम् ।**

**वाच्य०**—मनीषिणस्तस्य, अर्थकामाभ्यामपि धर्मेणैव अभूयत ।

**व्याख्या**—दण्डमर्हन्तीति दण्ड्यास्तान् दण्डयोग्यान्, अपराधिन इत्यर्थः 'एव', स्थित्यै = लोकस्थितिरक्षार्थं, दण्डयतः = शिक्षयतः, प्रसूतये = सन्तानाय, 'एव परिणेतुः = कृतविवाहस्य, मनस ईषा मनीषा, मनीषा अस्यास्ति, इति मनीषी तस्य मनीषिणः = पण्डितस्य, दोषज्ञस्येत्यर्थः । तस्य = राज्ञो दिलीपस्य, अर्थः = धनं कामः विषयेच्छा चेति, अर्थकामौ = पुरुषार्थौ, इत्यर्थः, अपि धर्मः = सुकृत मेव, आस्ताम् = जातौ ।

**समा०**—दण्डम् अर्हन्ति इति दण्ड्याः तान् दण्ड्यान्, परिणयति इति परिणेता तस्य परिणेतुः, मनसः ईषा मनीषा, सा अस्य अस्ति इति मनीषी तस्य मनीषिणः अर्थश्च कामश्च अर्थकामौ ।

**अभि०**—लोकमर्यादारक्षणाय, अपराधिनामपराधानुसारं दण्डदानात् सन्तानेच्छयैव विवाहसंस्कारकरणात् तस्य दिलीपस्य, अर्थकामावपि धर्म एव, आस्ताम् ।

**हिन्दी**—लोक मर्यादा की रक्षा के लिये अपराधियों को अपराध के अनुकूल दण्ड देनेवाले और केवल पुत्र के लिये विवाह करने वाले विद्वान् राजा दिलीप का अर्थ और काम भी धर्म ही था॥२५॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥२६॥

**सञ्जीविनी**—स राजा यज्ञाय यज्ञं कर्तुं गां भुवं दुदोह । करग्रहणेन रिक्तां चकारेत्यर्थः । मघवा देवेन्द्रः सस्याय सस्यं वर्धयितुं दिवं स्वर्गं दुदोह । द्युलोका न्महीलोके वृष्टिमुत्पादयामासेत्यर्थः । 'क्रियार्थोपपदस्य०' इत्यादिना यज्ञसस्याभ्यां चतुर्थी । एवमुभौ संपदो विनिमयेन परस्परं आदानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । राजा यज्ञैरिन्द्रलोकमिन्द्रश्चोदकेन भूलोकं पुपोषेत्यर्थः । उक्तं च दण्डनीतौ—'राजा त्वर्थान्समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् ॥' इति ॥२६॥

**अन्वयः**—**सः, यज्ञाय, गां, दुदोह, मघवा, सस्याय, दिवं, "दुदोह" एवम्" उभौ, सम्पद्विनिमयेन, भुवनद्वयं, दधतुः ।**

**वाच्य०**—तेन यज्ञाय गौर्दुदुहे, मघोना सस्याय द्यौः 'दुदुहे' उभाभ्यां सम्पद्विनिमयेन भुवनद्वयं दधे।

**व्याख्या**—सः = राजा दिलीपः, यज्ञाय = यज्ञं कर्तुं, गां = पृथिवीं, दुदोह = अदुहत्, करग्रहणात् पृथिवीं निःस्वां चकारेत्यर्थः, मघवा = इन्द्रः. 'इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः' इत्यमरः। सस्याय = धान्याय, दिवं = स्वर्गं दुदोह, स्वर्गलोकात् मृत्युलोके वृष्टिमुत्पादयामासेत्यर्थः, एवम् उभौ = इन्द्रदिलीपौ, सम्पदः = सस्यवृष्टिरूपस्य, विनिमयः = परस्परमादानप्रदानं, तेन सम्पद्विनिमयेन, भुवनयोः = स्वर्गभूलोकयोः, द्वयं = द्वितयमिति भुवनद्वयं, दधतुः = पुपुषतुः।

**समा०**—सम्पदः विनिमयः सम्पद्विनिमयः तेन सम्पद्विनिमयेन। भुवनयोः द्वयम् भुवनद्वयं तत्।

**अभि०**—राजा दिलीपः प्रजाभ्यः करं गृहीत्वा यज्ञैरिन्द्रलोकं पुपोष, इन्द्रश्च वर्षणद्वारा धान्यादि संवर्ध्य मर्त्यलोकं पुपोष।

**हिन्दी**—राजा दिलीप, यज्ञ करने के लिये पृथिवी को दुहता था, 'अर्थात् प्रजा से कर लेकर यज्ञ करता था' और इन्द्र अन्न के लिये स्वर्ग को दुहता था, अर्थात् वर्षा करके अन्न को बढ़ाता था। इस प्रकार इन्द्र और दिलीप आपस में अपनी २ सम्पत्ति का आदान प्रदान करके दोनों भुवनों की रक्षा करते थे॥२६॥

> **न किलानुययुस्तस्य राजानो रक्षितुर्यशः।**
> **व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता॥२७॥**

**सञ्जीविनी**—राजानोऽन्ये नृपा रक्षितुर्भयेभ्यस्त्रातुस्तस्य राज्ञो यशो नानुययुः किल नानुचक्रुः खलु। कुतः। यद्यस्मात्कारणात्तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः स्वविषयभूतेभ्यो व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता। अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः। अथवा 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतोऽस्तीत्यर्थः॥२७॥

**अन्वयः—राजानः, रक्षितुः, तस्य, यशः, न, अनुययुः किल, यत्, तस्करता, परस्वेभ्यः, व्यावृत्ता, 'सती' श्रुतौ, स्थिता।**

**वाच्य०**—राजभिः रक्षितुस्तस्य यशः, नानुयये किल, यत् तस्करतया परस्वेभ्यो व्यावृत्तया 'सत्या' श्रुतौ स्थितयाऽभावि।

**व्याख्या**—राजानः = अन्ये भूपालाः रक्षितुः = पालयितुः भयेभ्यस्त्रातुरित्यर्थः, तस्य = दिलीपस्य, यशः = कीर्तिं, न = नहि, अनुययुः = अनुचक्रुः, किल = खलु, कुतः' यत् = यस्मात्, तस्करस्य = चौरस्य, भावः कर्म वा, तस्करता = चौर्यं, परेषाम् = अन्येषां, स्वानि = धनानि, तेभ्यः परस्वेभ्यः, 'स्वोऽस्त्रियां धने' इत्यमरः। व्यावृत्ता = निवृत्ता, 'सती' श्रुतौ = कर्णे, स्थिता = अस्थात्।

**समा०**—तस्करस्य भावः तस्करता, परेषाम् स्वानि परस्वानि तेभ्यः परस्वेभ्यः।

**अभि०**—भयकारणेभ्यस्त्राणकर्तुर्दिलीपस्य कीर्तिम्, अन्ये भूपाला नानुकृतवन्तः यतोहि दिलीपराज्ये तस्करत्वं केवलं श्रुतिगोचरमेव ननु स्वरूपतोऽस्तीति।

**हिन्दी**—भय के कारणों से रक्षा करने वाले राजा दिलीप के यश को कोई भी राजा न पा सका। क्योंकि उनके राज्य में चोरी यह शब्द केवल सुनने में ही आता था, अर्थात् दिलीप के राज्य में कोई किसी के धन का अपहरण नहीं करता था, इसलिए उनके यश की भी चोरी न हुई ॥२७॥

द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम्।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥२८॥

**सञ्जीविनी**—शिष्टो जनो द्वेष्यः शत्रुरपि। आर्तस्य रोगिण औषधं यथौषधमिव। तस्य संमतोऽनुमत आसीत्। दुष्टो जनः प्रियोऽपि प्रेमास्पदीभूतोऽपि। उरगक्षता सर्पदष्टाङ्गुलीव। 'छिन्द्याद् बाहुमपि दुष्टमात्मनः' इति न्यायात् त्याज्य आसीत्। तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरित्यर्थः ॥२८॥

**अन्वयः**—शिष्टः, द्वेष्यः, अपि आर्तस्य, औषधं, यथा, तस्य, सम्मतः, 'आसीत्' दुष्टः, प्रियः, अपि, उरगक्षता, अङ्गुलीव, "तस्य", त्याज्य, "आसीत्"।

**वाच्य०**—शिष्टेन द्वेष्येणापि, औषधेन यथा तस्य सम्मतेनाभूयत, दुष्टेन प्रियेणापि, उरगक्षतया, अंगुल्या, इव, त्याज्येन अभूयत।

**व्याख्या**—शिष्टः = सज्जनः, द्वेष्यः = शत्रुः, अपि, आर्तस्य = पीडितस्य = रोगिण इत्यर्थः। औषधं = भेषजं,'भेषजौषधभैषज्यानि' इत्यमरः। यथा = इव, तस्य = राज्ञो दिलीपस्य, सम्मतः = अनुमतः = प्रिय इत्यर्थः, आसीत् इति शेषः, दुष्टः = दुर्जनः, प्रियः = प्रेमास्पदीभूतः, मित्रमिति यावत्, अपि, उरगेण = सर्पेण, क्षता

=दष्टा,इति, उरगक्षता, अंगुली=करशाखा, इव=यथा, "तस्य" त्याज्यः= त्यक्तुं योग्यः परिहार्यः "आसीत्" ।

**समा०**—द्वेष्टुम् योग्यः द्वेष्यः, प्रीणाति इति प्रियः, उरसा गच्छति इति उरगः, उरगेणक्षता उरग क्षता, त्यक्तुम् योग्यः त्याज्यः ।

**अभि०**—यथा रोगार्त्तस्य तिक्तौषधमपि प्रियं भवति तथैव दिलीपस्य शिष्टपुरुषः शत्रुरपि प्रियः, दुष्टः बन्धुरपि सर्पदष्टांगुलीव परिहरणीयोऽभूत् ।

**हिन्दी**—सज्जन पुरुष, शत्रु होते हुए भी दिलीप को वैसे ही प्रिय था जैसे रोगी को कड़वी औषधि । और दुष्ट मनुष्य प्रिय-बन्धु होते हुए भी वैसे ही त्याज्य था, जैसे सांप से डसी अँगुली ॥२८॥

तस्य परोपकारित्वमाह—

तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ॥२९॥

**सञ्जीविनी**—वेधाः स्रष्टा । 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः । तं दिलीपम् । समाधीयतेऽनेनेति समाधिः कारणसामग्री । महाभूतानां यः समाधिस्तेन महाभूतसमाधिना विदधे ससर्ज । नूनं ध्रुवम् । इत्युत्प्रेक्षा । तथाहि । तस्य राज्ञः सर्वे गुणा रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनमेवैकं मुख्यं फलं येषां ते तथोक्ता आसन् । महाभूतगुणोपमानेन कारणगुणाः कार्यं संक्रामन्तीति न्यायः सूचितः ॥२९॥

**अन्वयः**—**वेधाः, तं, महाभूतसमाधिना, विदधे, नूनं, तथा हि, तस्य, सर्वे, गुणाः, परार्थैकफलाः, आसन् ।**

**वाच्य०**—वेधसा, महाभूतसमाधिना स विदधे नूनं, तथाहि तस्य सर्वैः, गुणैः =परार्थैकफलैः, अभूयत ।

**व्याख्या**—वेधाः=प्रजापतिः 'स्रष्टा प्रजापतिर्वेधाः' इत्यमरः । तं= राजानं=दिलीपं, समाधीयतेऽनेन इति समाधिः, महाभूतानां=पृथिव्यप्तेजोवाय्वाकाशानां, समाधिः=कारणसामग्री, इति महाभूतसमाधिस्तेन महाभूतसमाधिना, विदधे=ससर्ज=विरचितवानित्यर्थः,नूनं=ध्रुवमित्युत्प्रेक्षा,तथाहि=यतः तस्य=राज्ञो दिलीपस्य, सर्वे=सम्पूर्णाः, गुणाः=दयादाक्षिण्यादयः, रूपरसादि-

महाभूतगुणवदेवेति यावत्, परस्य = अन्यस्य, अर्थः = प्रयोजनमेव, एकं = मुख्यं, फलं = परिणामः, येषान्ते, परार्थैकफलाः, आसन् = अभूवन् ।

समा०—समाधीयते अनेन इति समाधिः, महाभूतानाम् समाधिः महाभूतसमाधिः तेन महाभूतसमाधिना । परस्य अर्थः परार्थः, परार्थः एव एकम् फलम् येषाम् ते परार्थैकफलाः ।

अभि०—ब्रह्मा यया कारणसामग्र्या पृथिव्यादि महाभूतपञ्चकं निर्मितवान्, तयैव कारणसामग्र्या राजानं दिलीपमपि ससृजे, इत्यहमुत्प्रेक्षे, अत एव दिलीपस्य सर्वे गुणाः, महाभूतानां गुणवदेव परार्थैकप्रयोजना अभूवन् ।

हिन्दी—ब्रह्माजी ने जिस कारण सामग्री से 'पृथिवी जल अग्नि वायु आकाश' पंच महाभूतों को बनाया, उसी कारण सामग्री से महाराजा दिलीप को भी बनाया, यह निश्चित है, इसी लिये जैसे पंचभूतों के गुण दूसरों के लिये ही हैं वैसे ही राजा दिलीप के सभी गुण भी दूसरों के ही लिये थे ॥२९॥

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥३०॥

सञ्जीविनी—स दिलीपः । वेलाः समुद्रकूलानि । 'वेला कूलेऽपि वारिधेः' इति विश्वः । ता एव वप्रवलयाः प्राकारवेष्टनानि यस्यास्ताम् । 'स्याच्चयो वप्रमस्त्रियाम् । प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः ।' इत्यमरः । परितः खातं परिखा दुर्गवेष्टनम् । 'खातं खेयं तु परिखा' इत्यमरः । 'अन्येष्वपि दृश्यते' इत्यत्रापि शब्दात्खनेर्डप्रत्ययः । अपरिखाः परिखाः संपद्यमानाः कृताः परिखीकृताः सागरा यस्यास्ताम् । अभूततद्भावे च्विः । अविद्यमानमन्यस्य राज्ञः शासनं यस्यास्तामनन्यशासनामुर्वीमेकपुरीमिव शशास । अनायासेन शासितवानित्यर्थः ॥ ३० ॥

अन्वयः—वेलावप्रवलयां, परिखीकृतसागराम्, अनन्यशासनाम्, उर्वीम्, एकपुरीम्, इव, शशास ।

वाच्य०—तेन वेलावप्रवलया, परिखीकृतसागरा, अनन्यशासना, उर्वी, एक पुरी, इव, शशासे ।

व्याख्या—सः = दिलीपः वप्रा = प्राकारा, एव वलयाः = वेष्टनानि, इति वप्रवलयाः वेलाः = समुद्रकूलानि = समुद्रतटानीत्यर्थः, एव वप्रवलयाः यस्याः सा

तां वेलावप्रवलयां, परितः खातानि परिखाः अपरिखाः परिखाः सम्पद्यमानाः कृताः, इति परिखीकृताः = दुर्गवेष्टनीकृताः, सागराः = समुद्राः यस्याः सा, तां तथोक्ताम्, अन्यस्य = अपरस्य = दिलीपभिन्नस्य, शासनं = शिक्षणं, रक्षणमिति, अन्यशासनं, न विद्यते अन्यशासनं यस्याः सा ताम्, अनन्यशासनाम्, उर्वीं = पृथिवीम्, एका चासौ पुरी चेति, एकपुरी तामेकपुरीम् = एकनगरीम्, इव = यथा, शशास = पालयामास, अप्रयासेन शासितवानित्यर्थः।

समा०—वप्राणि एव वलयाः वप्रवलयाः, वेलाः एव वप्रवलयाः यस्याः सा वेलावप्रवलया ताम् वेलावप्रवलयाम्। परितः खातानि परिखाः, अपरिखाः परिखाः सम्पद्यमानाः कृताः इति परिखीकृताः परिखीकृताः सागराः यस्याः सा परिखीकृतसागरा ताम् परिखीकृतसागराम्। अन्यस्य शासनम् अन्यशासनम् न विद्यते अन्यशासनम् यस्याः सा अनन्यशासना ताम् अनन्यशासनाम्। एका च असौ पुरी एकपुरी ताम् एकपुरीम्।

अभि०—राज्ञा दिलीपेन समुद्रान्तायाः पृथिव्याः शासनम्, परिश्रमं विनैवैक-नगर्याः रक्षणमिव चक्रे।

हिन्दी—राजा दिलीप ने समुद्र के तटरूपी परकोटा वाली तथा सागररूपी 'चारों तरफ की खाई' वाली, दूसरे राजाके शासन रहित सारी पृथिवी का शासन बिना परिश्रम इस प्रकार किया, जैसे कोई एक नगरी का शासन करता है ॥३०॥

तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥३१॥

सञ्जीविनी—तस्य राज्ञो मगधवंशे जाता मगधवंशजा। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। एतेनाभिजात्यमुक्तम्। दाक्षिण्यं परच्छन्दानुवर्तनम्। 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' इति शाश्वतः। तेन रूढं प्रसिद्धम्। तेन नाम्ना। अध्वरस्य यज्ञस्य दक्षिणा दक्षिणाख्या पत्नीव सुदक्षिणेति प्रसिद्धा पत्न्यासीत्। अत्र श्रुतिः—'यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसः' इति। 'दक्षिणाया दाक्षिण्यं नामर्त्विजो दक्षिणत्वप्रापकत्वम्। ते दक्षन्ते दक्षिणां प्रतिगृह्य' इति च ॥३१॥

**अन्वयः—तस्य, मगधवंशजा, दाक्षिण्यरूढेन, नाम्ना, अध्वरस्य, दक्षिणा, पत्नी, इव, सुदक्षिणा, इति, 'पत्नी' आसीत्।**

**वाच्य०**—तस्य मगधवंशजया दाक्षिण्यरूढेन नाम्ना अध्वरस्य दक्षिणया पत्न्या, इव सुदक्षिणया अभूयत ।

**व्याख्या**—तस्य = राज्ञो दिलीपस्य, मगधानां = मगधदेशाधिपानां = राज्ञां, वंशः = अन्वयस्तत्र जाता = उत्पन्ना, इति मगधवंशजा, दाक्षिण्येन = परच्छन्दानुवर्तनेन, रूढं = प्रसिद्धं तेन दाक्षिण्यरूढेन नाम्ना = अभिधानेन, अध्वरस्य = यज्ञस्य, दक्षिणा = एतन्नाम्नी, पत्नी = भार्या इव = यथा, सुदक्षिणा = सुदक्षिणेति-प्रसिद्धा, 'पत्नी' आसीत् = अभूत् ।

**समा०**—मगधानाम् वंशः मगधवंशः, मगधवंशे जाता मगधवंशजा, दक्षिणस्य भावः दाक्षिण्यम्, दाक्षिण्येन रूढं दाक्षिण्यरूढं तेन दाक्षिण्यरूढेन ।

**अभि०**—राज्ञो दिलीपस्य मगधकुलोत्पन्नान्वर्थनामवती, दिलीपस्य मनोनुकूला सुदक्षिणानाम्नी पत्नी, यज्ञस्य दक्षिणेवासीत् ।

**हिन्दी**—राजा दिलीप की, मगधकुल में उत्पन्न तथा राजा के चित्त का अनुसरण करने वाली सुदक्षिणा नाम से प्रसिद्ध पटरानी वैसी ही थी जैसी यज्ञ की पत्नी दक्षिणा ॥२१॥

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥२२॥

**सञ्जीविनी**—वसुधाधिपः । अवरोधेऽन्तःपुरवर्गे महति सत्यपि मनस्विन्या दृढचित्तया । पतिचित्तानुवृत्त्यादिनिर्बन्धक्षमयेत्यर्थः । तया सुदक्षिणया लक्ष्म्या चात्मानं कलत्रवन्तं भार्यावन्तं मेने । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । वसुधाधिप इत्यनेन वसुधया चेति गम्यते ॥२२॥

**अन्वयः**—वसुधाधिपः, अवरोधे, महति, अपि, मनस्विन्या, तया, लक्ष्म्या, च, आत्मानं कलत्रवन्तं, मेने ।

**वाच्य०**—वसुधाधिपेन, अवरोधे महति, अपि, मनस्विन्या तया लक्ष्म्या च, आत्मा कलत्रवान् मेने ।

**व्याख्या**—वसूनि = धनानि, दधाति = धारयतीति वसुधा, वसुधाया अधिपः = स्वामी, इति वसुधाधिपः अवरोधे = अन्तःपुरवर्गे, महति = अधिके, 'सत्यपि' प्रशस्तं मन अस्या अस्तीति मनस्विनी तया मनस्विन्या = दृढचित्तया पतिचित्ता-

नुवृत्यादिगणवर्त्येत्यर्थः, तया = सुदक्षिणया, लक्ष्म्या = राज्यश्रिया, च, आत्मानं = स्वं, कलत्रमस्यास्तीति कलत्रवान् तं कलत्रवन्तं = भार्यावन्तं मेने = मन्यते स्म।

**समा०**—वसूनि दधाति इति वसुधा, अधिकं पाति इति अधिपः, वसुधायाः अधिपः वसुधाधिपः। प्रशस्तम् मनः अस्या अस्ति इति मनस्विनी, तया मनस्विन्या। कलत्रम् अस्य अस्ति इति कलत्रवान् तम् कलत्रवन्तम्।

**अभि०**—राज्ञो दिलीपस्य, अनेकाः स्त्रियः आसन्, किन्तु स स्वचित्तानुवर्तिन्या सुदक्षिणया, राज्यश्रिया च स्वं भार्यावन्तं मेने।

**हिन्दी**—चक्रवर्ती राजा दिलीप अनेक रानियों के होते हुए भी, पति की इच्छा का अनुसरण करनेवाली सुदक्षिणा और राज्यलक्ष्मी से ही अपने को स्त्री वाला मानते थे ॥३२॥

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥३३॥

**सञ्जीविनी**—स राजा। आत्मानुरूपायां तस्याम्। आत्मनो जन्म यस्यासावात्मजन्मा पुत्रः। तस्मिन्समुत्सुकः। यद्वा। आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ समुत्सुकः सन् 'आत्मा वै पुत्रनामासि' इति श्रुतेः। विलम्बितं फलं पुत्रप्राप्तिरूपं येषां तैर्मनोरथैः कदा मे पुत्रो भवेदित्याशाभिः कालं निनाय यापयामास ॥३३॥

**अन्वयः**—**स, आत्मानुरूपायां, तस्याम्, आत्मजन्मसमुत्सुकः, 'सन्' विलम्बितफलैः, मनोरथैः, कालं, निनाय।**

**वाच्य०**—तेन, आत्मानुरूपायां तस्यामात्मजन्मसमुत्सुकेन, 'सता' विलम्बितफलैः, मनोरथैः कालो निन्ये।

**व्याख्या**—सः = राजा दिलीपः, आत्मनः = स्वस्य, अनुरूपा = सदृशी तस्यामात्मानुरूपायां, तस्यां = सुदक्षिणायाम्, आत्मनः = स्वस्मात्, जन्म = उत्पत्तिः यस्यासौ, आत्मजन्मा = पुत्रः, तस्मिन् समुत्सुकः = उत्कण्ठितः, इति, आत्मजन्मसमुत्सुकः 'सन्' विलम्बितं = सञ्जातविलम्बं, फलं = पुत्रप्राप्तिरूपं येषान्ते तैः विलम्बितफलैः, मनोरथैः = आशाभिः = कदा मे पुत्रो भविष्यत्येवंरूपाभिरित्यर्थः। कालं = समयं, निनाय = यापयामास, नीतवानित्यर्थः।

**समा०**—आत्मनः अनुरूपा आत्मानुरूपा तस्याम् आत्मानुरूपायाम्। आत्मनः

जन्म यस्य असौ आत्मजन्मा आत्मजन्मनि समुत्सुकः आत्मजन्मसमुत्सुकः । विलम्बितम् फलम् येषां ते विलम्बितफलाः, तैः विलम्बितफलैः ।

अभि०—सुदक्षिणायां स्वभार्यायां पुत्रोत्पत्तिमभिलषन्, दिलीपः बहूनि दिनानि यापयामास ।

हिन्दी—राजा दिलीप ने, अपने मनोनुकूल सुदक्षिणा में पुत्रोत्पत्ति की अभिलाषा से प्रतीक्षा करते हुए बहुत समय बिताया ॥३३॥

संतानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥३४॥

सञ्जीविनी—तेन दिलीपेन । संतानोऽर्थः प्रयोजनं यस्य तस्मै संतानार्थाय विधयेऽनुष्ठानाय । स्वभुजादवतारितावरोपिता जगतो लोकस्य गुर्वी धूर्भारः सचिवेषु निचिक्षिपे निहिता ॥३४॥

अन्वयः—सन्तानार्थाय, विधये, स्वभुजादवतारिता, जगतः, गुर्वी, धूः, सचिवेषु, निचिक्षिपे ।

वाच्य०—सः, सन्तानार्थाय, विधये, स्वभुजात्, अवतारितां, जगतः गुर्वीं, धुरं सचिवेषु, निचिक्षेप ।

व्याख्या—तेन = राज्ञा दिलीपेन, सन्तानः = पुत्रः, अर्थः = योजनं यस्यासौ सन्तानार्थस्तस्मै, सन्तानार्थाय, विधये = अनुष्ठानाय, स्वस्य भुजः, स्वभुजस्तस्मात् स्वभुजात् = निजबाहोः, अवतारिता = अवरोपिता, जगतः = संसारस्य, गुर्वी = दुर्भरा, 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' । धूः = भारः, प्रजापालनरूपः कार्यभार इत्यर्थः, सचिवेषु = मन्त्रिषु, निचिक्षिपे = निहिता, स्थापितेत्यर्थः ।

समा०—सन्तानः अर्थः यस्य असौ सन्तानार्थः तस्मै सन्तानार्थाय । स्वस्य भुजः स्वभुजः तस्मात् स्वभुजात् ।

अभि०—पुत्रप्राप्त्यर्थमनुष्ठानं कर्तुं राज्ञा दिलीपेन राज्यभारोऽमात्येषु विहितः ।

हिन्दी—पुत्र की प्राप्ति के निमित्त अनुष्ठान करने के लिये राजा दिलीप ने, अपनी भुजाओं से उतारा हुआ प्रजापालनरूप राज्य भार मंत्रियों के ऊपर रख दिया, अर्थात् कार्यभार मंत्रियों को सौंप दिया ॥३४॥

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥३५॥

**सञ्जीविनी**—अथ धुरं न्यासानन्तरं पुत्रकाम्यया आत्मनः पुत्रेच्छया। 'काम्यच्च' इति पुत्रशब्दात्काम्यच्प्रत्ययः। 'अ प्रत्ययात्' इति पुत्रकाम्यधातोरकारप्रत्ययः। ततष्टाप्, तया। तौ दंपती जायापती। राजदन्तादिषु जायाशब्दस्य दमिति निपातनात्साधुः। प्रयतौ पूतौ विधातारं ब्रह्माणमभ्यर्च्य। 'स खलु पुत्रार्थिभिरुपास्यते' इति मान्त्रिकाः। गुरोः कुलगुरोर्वसिष्ठस्याश्रमं जग्मतुः। पुत्रप्राप्त्युपायापेक्षयेति शेषः ॥३५॥

**अन्वयः**—अथ, पुत्रकाम्यया, प्रयतौ तौ, दम्पती, विधातारम्, अभ्यर्च्य, गुरोः, वसिष्ठस्य, आश्रमं, जग्मतुः।

**वाच्य०**—पुत्रकाम्यया प्रयताभ्यां ताभ्याम्, विधातारमभ्यर्च्य, गुरोः वसिष्ठस्याश्रमो जग्मे।

**व्याख्या**—अथ = अनन्तरं = मंत्रिषु राज्यभारस्थापनानन्तरमित्यर्थः, आत्मनः पुत्रमिच्छतीति पुत्रकाम्यति, पुत्रकाम्यतीति पुत्रकाम्या, तया पुत्रकाम्यया = पुत्रेच्छया, प्रयतौ = पूतौ 'पवित्रः प्रयतः पूतः' इत्यमरः, स च सा चेति तौ = सुदक्षिणादिलीपौ, जाया च पतिश्चेति दम्पती = जायापती, विधातारं = ब्रह्माणम्, अभ्यर्च्य = सम्पूज्य, गुरोः = कुलगुरोः, वसिष्ठस्य = महर्षेः, आश्रमं = वासस्थानं, जग्मतुः = ययतुः। पुत्रप्राप्त्युपायज्ञानायेति भावः।

**समा०**—आत्मनः पुत्रम् इच्छति पुत्रकाम्यति, पुत्रकाम्यति इति पुत्रकाम्या तया पुत्रकाम्यया। स च सा च तौ। जाया च पतिश्च दम्पती। विदधाति इति विधाता तम् विधातारम्।

**अभि०**—पुत्रप्राप्त्युपायज्ञानाय ब्रह्माणं सम्पूज्य सुदक्षिणादिलीपौ स्वकुलगुरोः वसिष्ठस्याश्रमं जग्मतुः।

**हिन्दी**—मंत्रियों को राज्य का भार सौंपकर, राजा दिलीप तथा सुदक्षिणाने पवित्र होकर पुत्र की कामना से ब्रह्माजी की पूजा करके अपने कुलगुरु वसिष्ठजी के आश्रम की ओर प्रस्थान किया ॥३५॥

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥३६॥

**सञ्जीविनी**—स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तमेकं स्यन्दनं रथम्। प्रावृषि भवः प्रावृषेण्यः। 'प्रावृष एण्यः' इत्येण्यप्रत्ययः। तं प्रावृषेण्यं पयोवाहं

मेघं विद्युदैरावताविव । आस्थितावारूढौ । जग्मतुरिति पूर्वेण संबन्धः । इरा आपः । 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः । इरावान्समुद्रः तत्र भव ऐरावतोऽभ्रमातङ्गः । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः । 'अभ्रमातङ्गत्वाच्चाभ्रस्यरूपत्वात्' इति क्षीरस्वामी । अत एव मेघारोहणं विद्युत्साहचर्यं च घटते । किंच विद्युत ऐरावतसाहचर्यादिवैरावती संज्ञा । ऐरावतस्य स्त्र्यैरावतीति क्षीरस्वामी । तस्मात्सुष्ठूक्तं विद्युदैरावताविति । एकरथारोहणोक्त्या कार्यसिद्धिबीजं दम्पत्योरत्यन्तसौमनस्यं सूचयति ॥३६॥

**अन्वयः**—स्निग्धगम्भीरनिर्घोषम्, एकं, स्यन्दनं, प्रावृषेण्यं, पयोवाहं, विद्युदैरावतौ, इव, आस्थितौ, 'तौ जग्मतुरिति पूर्वेण संबन्धः' ।

**वाच्य०**—स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनं, प्रावृषेण्यं पयोवाहं विद्युदैरावताभ्याम् इव, आस्थिताभ्यां ताभ्यां जग्मे ।

**व्याख्या**—स्निग्धः = मधुरः, गम्भीरः = गभीरः, निर्घोषः = निर्ह्रादः ध्वनिरित्यर्थः, यस्य स तं स्निग्धगम्भीरनिर्घोषं, 'स्वाननिर्घोषनिर्ह्रादवादनिस्वाननिस्वनाः' इत्यमरः । एकं = केवलम् 'एके मुख्यान्यकेवलाः' इत्यमरः । स्यन्दनं = रथं, प्रावृषि = वर्षाकाले भव. प्रावृषेण्यस्तं प्रावृषेण्यं, पयांसि वहतीति पयोवाहस्तं पयोवाहं = मेघं, विद्युत् = तडित् च 'तडित्सौदामिनीविद्युद्' इत्यमरः। इराः = आपः, सन्त्यस्मिन्निति इरावान् = समुद्रस्तत्र भव ऐरावतः = अभ्रमातङ्गश्चेति विद्युदैरावतौ, इव = यथा, आस्थितौ = आरूढौ, सुदक्षिणादिलीपौ जग्मतुः ।

**समा०**—स्निग्धश्च असौ गम्भीरश्च स्निग्धगम्भीरः, स्निग्धगम्भीरः निर्घोषः यस्य सः स्निग्धगम्भीरनिर्घोषः तम् स्निग्धगम्भीरनिर्घोषम् । प्रावृषि भवः प्रावृषेण्यः तम् प्रावृषेण्यम् । पयांसि वहति इति पयोवाहः तम् पयोवाहम् । विशेषेण द्योतते इति विद्युत् । इराः 'जलानि' सन्ति अस्मिन् इति इरावान्, इरावत अपत्यम् ऐरावतः, विद्युत् च ऐरावतश्च विद्युदैरावतौ ।

**अभि०**—एकं रथमारूढौ सुदक्षिणादिलीपौ, वर्षाकालिकमेघारूढौ विद्युदैरावतौ यथा, वसिष्ठाश्रमं जग्मतुः ।

**हिन्दी**—मधुर एवं गंभीर घरघराहट वाले एक ही रथ पर चढ़कर सुदक्षिणादिलीप इस प्रकार चले जा रहे थे, जैसे वर्षा के बादल पर बिजली और ऐरावत 'इन्द्र का हाथी' चले जारहे हों ॥३६॥

मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥३७॥

**सञ्जीविनी**—पुनः किम्भूतौ दम्पती । आश्रमपीडा मा भून्मास्त्विति हेतोः । 'माङि लुङ्' इत्याशीरर्थे लुङ् । 'न माङ्योगे' इत्यडागमनिषेधः । परिमेयपुरःसरौ परिमितपरिचरौ । अनुभावविशेषात्तु तेजोविशेषात्सेनापरिवृताविव स्थितौ ॥

**अन्वयः**—आश्रमपीडा, मा भूत्, इति, परिमेयपुरःसरौ, अनुभावविशेषात्, तु, सेनापरिवृतौ, इव, 'स्थितौ जग्मतुः' ।

**वाच्य०**—आश्रमपीडया मा भावीति परिमेयपुरःसराभ्याम्, अनुभावविशेषात्तु, सेनापरिवृताभ्यामिव ताभ्यां जग्मे ।

**व्याख्या**—आश्रमस्य = वसिष्ठाश्रमस्य, आश्रमवासिजनस्येत्यर्थः, पीडा = बाधा, कष्टं, मा भूत् = न भवतु, इति = हेतोः, पुरः = अग्रे, सरन्ति = गच्छन्तीति पुरःसराः, परिमातुं योग्याः परिमेयाः = परिमिताः, पुरःसराः = अनुचराः, ययोस्तौ परिमेयपुरःसरौ, अनुभावस्य = प्रभावस्य, तेजस इत्यर्थः, विशेषः = अतिशयस्तस्मात्, प्रभावविशेषात्, तु = किन्तु, सेनया = सैन्येन, परिवृतौ = अन्वितौ; इति सेनापरिवृतौ, 'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः । वरूथिनी बलं सैन्यम्' इत्यमरः । इव = यथा, 'स्थितौ जग्मतुरिति' पूर्वेणान्वयः ।

**समा०**—आश्रमस्य पीडा आश्रमपीडा । पुरः सरन्ति इति पुरःसराः, परिमातुम् योग्याः परिमेयाः, परिमेयाः पुरःसराः ययोः तौ परिमेयपुरःसरौ । अनुभावस्य विशेषः अनुभावविशेषः तस्मात् अनुभावविशेषात्, परितः वृतौ परिवृतौ सेनया-परिवृतौ सेनापरिवृतौ ।

**अभि०**—सेनया सह गमने वसिष्ठाश्रमस्य पीडा भविष्यतीतिहेतोः, त्रिचतुः-सेवकान्वितावपि सुदक्षिणादिलीपौ प्रतापातिशयेन सेनाव्याप्तौ, इव ययतुः ।

**हिन्दी**—आश्रम के निवासी जनों के कार्य में बाधा न हो, इसलिये राजा दिलीप ने परिमित 'तीन चार' सेवकों को ही साथ में लिया, किन्तु अपने प्रताप व तेज से वे ऐसे जान पड़ते थे, मानो बड़ी भारी सेना से घिरे हों ।३७॥

सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥३८॥

**सञ्जीविनी**—पुनः कथंभूतौ । सुखः शीतलत्वात्प्रियः स्पर्शो येषां तैः । शाल-निर्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः । 'शालः सर्जतरुः स्मृतः' इति शाश्वतः । उत्किरन्ति विक्षिपन्तीत्युत्किराः 'इगुपध०' इत्यादिना किरतेः कप्रत्ययः । पुष्परेणूनामुत्किरास्तैराधूना मन्दमीषत्कम्पिता वनराजयो यैस्तैर्वातैः सेव्यमानौ॥

**अन्वयः**—सुखस्पर्शैः शालनिर्यासगन्धिभिः, पुष्परेणूत्किरैः, आधूतवनराजिभिः, वातैः, सेव्यमानौ, 'तौ जग्मतुः' ।

**वाच्य०**—सुखस्पर्शैः......वातैः, सेव्यमानाभ्यां ताभ्यां जग्मे ।

**व्याख्या**—सुखः = सुखप्रदः, प्रिय इत्यर्थः, स्पर्शः = स्पर्शनमालिङ्गनं येषान्ते तैः सुखस्पर्शैः, शालेभ्यः = सर्जतरुभ्यः निर्यासाः = निस्यन्दाः, तेषां गन्धः = सुरभिः अस्ति, येषु ते तैः, शालनिर्यासगन्धिभिः, उत्किरन्ति = विक्षिपन्ति, इत्युत्किराः, पुष्पाणां = कुसुमानां रेणवः = धूलयः, इति पुष्परेणवस्तेषामुत्किरास्तैः पुष्परेणूत्किरैः, आङ = ईषत्, धूताः = कम्पिताः, वनस्य = काननस्य, राजयः = पङ्क्तयो यैस्तैः, आधूतवनराजिभिः, वातैः = पवनैः सेव्यमानौ = परिचर्यमाणौ, तौ दम्पती जग्मतुरिति पूर्वेण संबन्धः ।

**समा०**—सुखः स्पर्शः येषाम् ते सुखस्पर्शाः, तैः सुखस्पर्शैः । शालेभ्यः निर्यासाः शालनिर्यासाः शालनिर्यासानाम् गन्धः शालनिर्यासगन्धः, शालनिर्यासगन्धः अस्ति येषु ते शालनिर्यासगन्धिनः, तैः शालनिर्यासगन्धिभिः । उत्किरन्ति इति उत्किराः, पुष्पाणाम् रेणवः पुष्परेणवः पुष्परेणूनाम् उत्किराः पुष्परेणूत्किराः, तैः पुष्परेणूत्किरैः। आ ईषत् धूताः इति आधूताः वनानां राजयः वनराजयः आधूताः वनराजयः यैः ते आधूतवनराजयः, तैः आधूतवनराजिभिः ।

**अभि०**—शीतलमन्दसुगन्धिभिः प्रियस्पर्शैः शुभसूचकैः पवनैः सेव्यमानौ सुदक्षिणादिलीपौ जग्मतुः ।

**हिन्दी**—प्रियस्पर्शवाले, शालके गोन्द की सुगन्धियुक्त फूलों के पराग को उड़ानेवाले और वनवृक्षों की पंक्ति को धीरे २ कंपानेवाले पवन से सेवा किये गये वे दोनों चले जा रहे थे ॥३८॥

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।**
**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥३९॥**

**सञ्जीविनी**—रथनेमिस्वनोन्मुखैः । मेघध्वनिशङ्कयोन्मुखैरित्यर्थः । शिखण्डिभिर्मयूरैर्द्विधा भिन्ना । शुद्धविकृतभेदेनाविकृतावस्थायां च्युत च्युतभेदेन वा षड्जो द्विविधः । तत्सादृश्यात्केका अपि द्विधा भिन्ना इत्युच्यन्ते । अत एवाह—षड्जसंवादिनीरिति । षड्भ्यः स्थानेभ्यो जातः षड्जः । तदुक्तम्—'नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन् । षड्भ्यः सञ्जायते यस्मात्तस्मात्षड्ज इति स्मृतः ॥' स च तन्त्रीकण्ठजन्मा स्वरविशेषः । 'निषादर्षभगान्धार-षड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥' इत्यमरः । षड्जेन संवादिनी सदृशीः । तदुक्तं मातङ्गेन—'षड्जं मयूरो वदति' इति मनोभिरामा मनसः प्रियाः । के मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरवाण्यः । 'केका वाणी मयूरस्य' इत्यमरः । ताः केकाः शृण्वन्तौ । इति श्लोकार्थः ॥३९॥

**अन्वयः**—रथनेमिस्वनोन्मुखैः, शिखण्डिभिः, द्विधा, भिन्नाः, षड्जसंवादिनीः, मनोभिरामाः, केकाः, शृण्वन्तौ, 'तौ जग्मतुः' ।

**वाच्य०**—मनोभिरामाः केकाः शृण्वद्भ्यां ताभ्यां जग्मे ।

**व्याख्या**—रथस्य = स्यन्दनस्य, नेमी = चक्रप्रान्तौ 'नेमिश्चक्रप्रान्ते स्त्रियामपीति' कोषः, तयोः, स्वनः = निनादस्तेन, उन्मुखाः = ऊर्ध्वाननाः, तैस्तथोक्तैः, शिखण्डिभिः = मयूरैः, द्विधा = शुद्धविकृतभेदेन द्विप्रकाराः, भिन्नाः = भेदमापन्नाः, षड्भ्यः स्थानेभ्यः, जातः = उत्पन्नः इति षड्जः, षड्जेन संवादिनीः = सदृशीः, इति षड्जसंवादिनीः, मनसः = चित्तस्य, अभिरामाः प्रियाः, इति मनोभिरामाः, के = मूर्धनि, कायन्ति = ध्वनन्तीति केकाः = मयूरवाण्यस्ताः केकाः, शृण्वन्तौ = आकर्णयन्तौ, तौ दम्पती जग्मतुः ।

**समा०**—रथस्य नेमी रथनेमी रथनेम्योः स्वनः रथनेमिस्वनः, उद्गतम् मुखम् येषाम् ते उन्मुखाः, रथनेमिस्वनेन उन्मुखाः रथनेमिस्वनोन्मुखाः, तैः रथनेमिस्वनोन्मुखैः । षड्भ्यः जातः षड्जः षड्जेन संवादिन्यः इति षड्जसंवादिन्यः, ताः षड्जसंवादिनीः । के कायन्ति इति केकाः, ताः केकाः ।

**अभि०**—रथचक्रप्रान्तोत्थितं निस्वनं मेघगर्जनं मत्वा, ऊर्ध्वमुखानां मयूराणां कर्णप्रियां केकां शृण्वन्तौ जग्मतुः ।

**हिन्दी**—रथ के पहिये की गड़गड़ाहट सुनकर 'मेघों के गर्जन की भ्रान्ति से' ऊपर को मुख किये हुए मोरों की, शुद्ध और विकृत भेद से दो प्रकार की,

षड्ज स्वर जैसी, मधुर मनोहर वाणी को सुनते हुए राजा दिलीप और सुदक्षिणा चले ॥३६॥

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥४०॥

**सञ्जीविनी**—विध्वनमदूरं समीपं यथा भवति तथोज्झितं वर्त्म यैस्तेषु। स्यन्दनाबद्धदृष्टिषु स्यन्दने रथ आबद्धा सञ्जिता दृष्टिर्नेत्रं येस्तेषु। 'दृग्दृष्टिनेत्र-लोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः। कौतुकवशाद्रथासक्तदृष्टि-ष्वित्यर्थः। मृग्यश्च मृगाश्च मृगाः 'पुमान्स्त्रिया' इत्येकशेषः। तेषां द्वन्द्वेषु मिथु-नेषु। 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः। परस्पराक्ष्णां सादृश्यं पश्यन्तौ। द्वन्द्व-शब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपो दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेत्येवं विवेक्तव्यम् ॥४०॥

**अन्वय**—अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु, मृगद्वन्द्वेषु, परस्पराक्षिसा-दृश्यं, पश्यन्तौ, 'तौ जग्मतुः'।

**वाच्य०**—अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसा-दृश्यं पश्यद्भ्यां, 'ताभ्यां जग्मे'।

**व्याख्या**—अदूरं = समीपं, यथा स्यात्तथा, उज्झितं = त्यक्तं, वर्त्म = मार्गो यैस्तानि, अदूरोज्झितवर्त्मानि तेषु तथोक्तेषु स्यन्दने = रथे, आसमन्तात्' बद्धाः = संलग्नाः, दृष्टयः = नेत्राणि यैस्तानि, स्यन्दनाबद्धदृष्टीनि तेषु स्यन्दनाबद्धदृष्टिषु, मृग्यः = हरिण्यश्च मृगाः = हरिणाश्चेति मृगाः, मृगाणां, द्वन्द्वानि = मिथुनानि, तेषु, मृगद्वन्द्वेषु, सदृशस्य भावः, सादृश्यम्, अक्ष्णां = नेत्राणां, सादृश्यं = सरूपता, इति, अक्षिसादृश्यं, परस्परस्य = अन्योन्यस्य, अक्षिसादृश्यं तत्, परस्पराक्षिसा-दृश्यं, 'दिलीपो मृगीषु सुदक्षिणाक्षिसादृश्यं, सुदक्षिणा च मृगेषु दिलीपाक्षिसादृश्य-मित्यर्थः, पश्यन्तौ = अवलोकयन्तौ, तौ जग्मतुः।

**समा०**—अदूरम् उज्झितम् वर्त्म यैः तानि अदूरोज्झितवर्त्मानि, तेषु अदूरो-ज्झितवर्त्मसु। स्यन्दने आसमन्तात् बद्धा दृष्टिः यैः तानि स्यन्दनाबद्धदृष्टीनि तेषु स्यन्दनाबद्धदृष्टिषु। मृग्यः च मृगाः च मृगाः, मृगाणाम् द्वन्द्वानि मृगद्वन्द्वानि, तेषु मृगद्वन्द्वेषु। सदृशस्य भावः सादृश्यम्, अक्ष्णाम् सादृश्यम् अक्षिसादृश्यम्, परस्परस्य अक्षिसादृश्यम् इति परस्पराक्षिसादृश्यम् तत् परस्पराक्षिसादृश्यम्।

अभि०—विश्वासात् रथमार्गसमीपे स्थितेषु कौतुकात् रथासक्तदृष्टिषु मृगमिथुनेषु, अन्योन्यस्य नेत्रसादृश्यं पश्यन्तौ सुदक्षिणादिलीपौ जग्मतुरिति ।

हिन्दी—रथ के मार्ग को छोड़कर पास से रथ को एक टक देखते हुए, मृगों के जोड़े में, सुदक्षिणा दिलीप, एक दूसरे के नेत्रों की समानता को देखते हुए, आश्रम को गये ॥४०॥

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥४१॥

सञ्जीविनी—श्रेणीबन्धात्पङ्क्तिबन्धनाद्धेतोरस्तम्भामाधारस्तम्भरहिताम् । तोरणं बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । तत्र या स्रग्विरच्यते तां तोरणस्रजं वितन्वद्भिः । कुर्वद्भिरिवेत्यर्थः । उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम् । कलनिर्ह्रादैरव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः करणैः । क्वचिदुन्नमिताननौ । 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः ॥४१॥

अन्वयः—श्रेणीबन्धात्, अस्तम्भां, तोरणस्रजं, वितन्वद्भिः, कलनिर्ह्रादैः, सारसैः, क्वचिद्, उन्नमिताननौ, 'तौ जग्मतुः' ।

वाच्य०—सारसैः क्वचिदुन्नमिताननाभ्यां ताभ्यां जग्मे ।

व्याख्या—श्रेण्याः=पङ्क्तेः, बन्धः=बन्धनं, तस्मात्, श्रेणीबन्धात्=हेतोः, न विद्यते स्तम्भो यस्याः सा, अस्तम्भा, ताम्, अस्तम्भाम्=आधारस्तम्भरहितां, तोरणस्य=बहिर्द्वारस्य, 'तोरणोऽस्त्री बहिर्द्वारम् इत्यमरः' या स्रक्=माला, तां तोरणस्रजं वितन्वद्भिः=कुर्वद्भिः, 'इवेति शेषः' कलः=मधुरास्फुटः निर्ह्रादः=ध्वनिः, येषान्ते तैः, कलनिर्ह्रादैः सारसैः=पक्षिविशेषैः'करणैः' क्वचित्=कुत्रचित् स्थाने, उन्नमिते=ऊर्ध्वंकृते,आनने=मुखे=याभ्यां तौ, उन्नमिताननौ 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः तौ जग्मतुः ।

समा०—श्रेण्याः बन्धः श्रेणीबन्धः तस्मात् श्रेणीबन्धात् । न विद्यते स्तम्भः यस्याः सा अस्तम्भा ताम् अस्तम्भाम् । तोरणस्य स्रक् तोरणस्रक् ताम् तोरणस्रजम् । कलः निर्ह्रादः येषाम् ते कलनिर्ह्रादाः तैः कलनिर्ह्रादैः । उन्नमिते आनने याभ्याम् तौ उन्नमिताननौ ।

**अभि०**—क्वचित् प्रदेशे आकाशे पंक्ति बद्ध्वा गच्छतः, अतएव स्तम्भरहित-बहिर्द्वारमालासदृशान्, मधुरस्वरकलहंसान् पश्यन्तौ वीक्षितुमुपरिकृताननौ सुदक्षिणादिलीपौ जग्मतुः।

**हिन्दी**—किसी स्थान में आकाश में उड़ते हुए तथा प्रिय बोलने वाले हंसों को देखने के लिये ऊपर को मुख उठाए हुए वे चले जा रहे थे, एक पांत में उड़ते हुए हंस ऐसे जान पड़ते थे मानो बिना खम्भे ( चौखट ) के ही बन्दनवार टँगी हो ॥४१॥

पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥४२॥

**सञ्जीविनी**—प्रार्थनासिद्धिशंसिनोऽनुकूलत्वादेव मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वाद् गन्तव्यदिगभिमुखत्वात्। तुरगोत्कीर्णै रजोभिरस्पृष्टा अलका देव्या वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ। 'शिरसा वेष्टनशोभिना सुतः' इति वक्ष्यति ॥४२॥

**अन्वयः**—प्रार्थनासिद्धिशंसिनः, पवनस्य, अनुकूलत्वात् तुरगोत्कीर्णैः, रजोभिः अस्पृष्टालकवेष्टनौ, 'तौ जग्मतुः'।

**वाच्य०**—प्रार्थनासिद्धिशंसिनः पवनस्यानुकूलत्वात् तुरगोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनाभ्यां ताभ्यां जग्मे।

**व्याख्या**—प्रार्थनायाः = मनोरथस्य, सिद्धिः = सफलता, इति प्रार्थनासिद्धिः, तां शंसितुं = सूचयितुं शीलं यस्य स तस्य प्रार्थनासिद्धिशंसिनः, पुनातीति पवनस्तस्य पवनस्य = वायोः, अनुकूलत्वात् = सम्मुखत्वात् गन्तव्यदिगभिमुखत्वादित्यर्थः, तुरगैः = अश्वैः, उत्कीर्णानि = उत्क्षिप्तानि तैः, तुरगोत्कीर्णैः, रजोभिः = धूलिभिः, अस्पृष्टाः = असंस्पृष्टाः, अलकाः = केशाः सुदक्षिणायाः, वेष्टनम् = उष्णीषं च दिलीपस्य, ययोस्तौ अस्पृष्टालकवेष्टनौ, तौ जग्मतुः।

**समा०**—प्रार्थनायाः सिद्धिः प्रार्थनासिद्धिः प्रार्थनासिद्धिं शंसितुम् शीलम् यस्य सः प्रार्थनासिद्धिशंसी, तस्य प्रार्थनासिद्धिशंसिनः। पुनाति इति पवनः तस्य पवनस्य, अनुकूलस्य भावः अनुकूलत्वम् तस्मात् अनुकूलत्वात्, तुरगैः उत्कीर्णानि तुरगोत्कीर्णानि तैः तुरगोत्कीर्णैः। न स्पृष्टाः अस्पृष्टाः, अस्पृष्टाः अलकाः वेष्टनम् च ययोः तौ अस्पृष्टालकवेष्टनौ।

**अभि०**—स्वाभिलषितसूचकस्य वायोः गमनदिशि अभिमुखत्वात् अश्वखुरो-त्थिता धूल्यो दिलीपस्योष्णीषे सुदक्षिणायाश्च कुटिलकेशेषु, च न संलग्नाः ।

**हिन्दी**—मनोरथ की सफलता को सूचित करनेवाले वायु के अनुकूल होने से 'सामने दिशा में चलने से' घोड़ों के खुरों से उठी धूलि सुदक्षिणा के केशों और राजा दिलीप की पगड़ी को न छू सकी ।।४२।।

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥४३॥

**सञ्जीविनी**—सरसीषु वीचिविक्षोभशीतलमूर्मिसंघट्टनेन शीतलं स्वनिः-श्वासमनुकर्तुं शीलमस्येति स्वनिःश्वासानुकारिणम् । एतेन तयोरुत्कृष्टस्त्री-पुंसजातीयत्वमुक्तम् । अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥४३॥

**अन्वयः**–सरसीषु, वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणम्, अरविन्दा-नाम्, आमोदम्, उपजिघ्रन्तौ 'तौ जग्मतुः' ।

**वाच्य०**—सरसीषु वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणमरविन्दाना-मामोदमुपजिघ्रद्भ्यां 'ताभ्यां जग्मे' ।

**व्याख्या**–सरसीषु = सरःसु तडागेष्वित्यर्थः । 'कासारः सरसी सरः' इत्यमरः । वीचीनां = तरङ्गाणां, विक्षोभः = संघट्टनं, तेन शीतलः = शीतः, 'सुषीमः शिशिरो-जडः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः' इत्यमरः । तं वीचिविक्षोभ-शीतलम्, स्वस्य = निजस्य, निःश्वासः = श्वासः, तमनुकर्तुं शीलमस्य तं स्वनिः-श्वासानुकारिणम्, अरविन्दानां = कमलानाम्, आमोदम् = अतिनिर्हारिणम्, सुग-न्धिमित्यर्थः, । 'आमोदः सोऽतिनिर्हारी' इत्यमरः, उपजिघ्रन्तौ = घ्राणेन्द्रियेण गृह्णन्तौ तौ जग्मतुः ।

**समा०**—वीचीनाम् विक्षोभः वीचिविक्षोभः वीचिविक्षोभेण शीतलः वीचिवि-क्षोभशीतलः तम् वीचिविक्षोभशीतलम्, स्वस्य निःश्वासः स्वनिःश्वासः स्वनिश्वा-सम् अनुकर्तुं शीलम् अस्य इति स्वनिःश्वासानुकारी तम् स्वनिःश्वासानुकारिणम् ।

**अभि०**—सरःसम्पर्कात् शीतलमत एव स्वनिःश्वासगन्धानुकारिणं कमलगन्धं जिघ्रन्तौ तौ ययतुः ।

**हिन्दी**—तालाबों की तरंगों में टकराने से शीतल अतएव अपने श्वास वायु का अनुकरण करने वाली कमल की सुगन्धि को सूंघते हुए वे राजा-रानी जा रहे थे।

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥४४॥

**सञ्जीविनी**—आत्मविसृष्टेषु स्वदत्तेषु । यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः । यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफला यज्वनां विधिनेष्टवताम् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । आशिषः आशीर्वादान् । अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्घ्यस्यानुपदमन्वक् । अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकुर्वन्तौ । पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः ॥४४॥

**अन्वयः**—आत्मविसृष्टेषु, यूपचिह्नेषु, ग्रामेषु, यज्वनाम्, अमोघाः, आशिषः, अर्घ्यानुपदं, प्रतिगृह्णन्तौ, 'तौ जग्मतुः' ।

**वाच्य०**—आत्मविसृष्टेषु, यूपचिह्नेषु, ग्रामेषु, यज्वनाममोघाः, आशिषः अर्घ्यानुपदं प्रतिगृह्णद्भ्यां, 'ताभ्यां जग्मे' ।

**व्याख्या**—आत्मना = स्वेन, दिलीपेनेत्यर्थः 'विसृष्टाः = दत्तास्तेषु आत्मविसृष्टेषु, यूपाः = स्तम्भाः, यज्ञार्थसंस्कृतदारुविशेषः पशुबन्धायेत्यर्थः, एव चिह्नानि = लक्षणानि, येषां ते तेषु यूपचिह्नेषु, 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः। ग्रामेषु = संवसथेषु, 'समौ संवसथग्रामौ' इत्यमरः। यज्वनां = विधिनेष्टवतां, याज्ञिकानामित्यर्थः, अमोघाः = सफलाः, आशिषः = आशीर्वादान्, पदस्य पश्चादनुपदम्, अर्घ्यस्य = पूजाविधेः, अनुपदं = पश्चात्, अनन्तरमित्यर्थः, प्रतिगृह्णन्तौ = स्वीकुर्वन्तौ, 'तौ जग्मतुः' ।

**समा०**—आत्मना विसृष्टाः आत्मविसृष्टाः तेषु आत्मविसृष्टेषु, यूपा एव चिह्नानि येषाम् ते यूपचिह्नाः, तेषु यूपचिह्नेषु, न मोघाः अमोघाः, पदस्य पश्चादनुपदम्, अर्घार्थं द्रव्यम् अर्घ्यम् अर्घ्यस्य अनुपदम् अर्घ्यानुपदम् ।

**अभि०**—आत्मना विविधेषु यज्ञेषु याज्ञिकविप्रेभ्यो दत्तेषु, यूपचिह्नितेषु ग्रामेषु तत्रत्यविप्राणां सफलाशीर्वादान् पूजाविधेरनन्तरं स्वीकुर्वन्तौ 'तौ दम्पती जग्मतुः'।

**हिन्दी**—राजा दिलीप से ब्राह्मणों को दान में दिये गए और जिनमें यज्ञ के स्तम्भ गड़े हुए थे, ऐसे गांवों में अर्घ्य भेंट करने के पश्चात् याज्ञिक ब्राह्मणों के सफल आशीर्वाद को लेते हुए, सुदक्षिणा दिलीप, चले जा रहे थे ॥४४॥

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥४५॥

**सञ्जीविनी**—ह्यस्तनगोदोहोद्भवं घृतं हैयंगवीनम् । ह्यः पूर्वेद्युर्भवम् । 'तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः । हैयंगवीनं संज्ञायाम्' इति निपातः । तत्सद्योघृतमादायोपस्थितान्घोषवृद्धान् । 'घोष आभीरपल्ली स्यात्' इत्यमरः । वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । 'दुह्याच्—'इत्यादिना पृच्छतेर्द्विकर्मकत्वम् । कुलकम् ॥४५॥

**अन्वयः**—हैयंगवीनम्, आदाय, उपस्थितान्, घोषवृद्धान्, वन्यानां, मार्गशाखिनां, नामधेयानि, पृच्छन्तौ, 'तौ जग्मतुः' ।

**वाच्य०**—हैयंगवीनमादाय, उपस्थितान् घोषवृद्धान्, वन्यानां, मार्गशाखिनां नामधेयानि पृच्छद्भ्यां 'ताभ्यां जग्मे' ।

**व्याख्या**—ह्यो गोदोहस्य विकारः, हैयंगवीनं, हैयंगवीनं = सद्योघृतं, नवनीतमित्यर्थः, आदाय = गृहीत्वा, दिलीपाय निवेदयितुमिति भावः । उपस्थितान् = समागतान्, घोषेषु = आभीरपल्लीषु, ये वृद्धाः = स्थविराः, तान् घोषवृद्धान्, वने भवा वन्यास्तेषां वन्यानां = काननोद्भवानां, मार्गस्य = पथः, शाखिनः = वृक्षास्तेषां मार्गशाखिनां, 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः । नामधेयानि = नामानि, पृच्छन्तौ = जिज्ञासमानौ, 'तौ जग्मतुरिति, द्वादशश्लोकानां कुलकं समाप्तम्' ।

**समा०**—ह्यो गोदोहस्य विकारः हैयङ्गवीनम् । घोषेषु वृद्धाः घोषवृद्धाः तान् घोषवृद्धान् । वने भवाः वन्याः तेषाम् वन्यानाम् । मार्गस्य शाखिनः तेषाम् मार्गशाखिनाम् ।

**अभि०**—राज्ञे, उपहारार्थं नवनीतमादाय समुपस्थितान्, आभीरवृद्धान् वनोत्पन्नमार्गवृक्षाणां नामानि पृच्छन्तौ सुदक्षिणादिलीपौ वसिष्ठाश्रमम्प्रति जग्मतुः ।

**हिन्दी**—भेंट देने को गौ का ताजा मक्खन लेकर आये हुए गांव के बूढे अहीरों से जंगली वृक्षों के नाम पूछते हुए, राजा तथा सुदक्षिणा जा रहे थे ॥४५॥

काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

**सञ्जीविनी**—व्रजतोर्गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयोः सुदक्षिणा-

दिलीपयोः। हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव । योगे सति काप्यनिर्वाच्याभिख्या शोभासीत् । 'अभिख्या नामशोभयोः' इत्यमरः । 'आतश्चोपसर्गे' इत्यण्प्रत्ययः । चित्रा नक्षत्रविशेषः । शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ।।४६।।

**अन्वयः**—व्रजतोः शुद्धवेषयोः, तयोः, हिमनिर्मुक्तयोः, चित्राचन्द्रमसोः, इव, योगे 'सति' कापि, अभिख्या, आसीत् ।

**वाच्य०**—व्रजतोः शुद्धवेषयोस्तयोः, हिमनिर्मुक्तयोः, चित्राचन्द्रमसोरिव, योगे 'सति' कयाऽपि, अभिख्यया, अभूयत ।

**व्याख्या**—व्रजतोः = गच्छतोः, शुद्धः = उज्वलः शुभ्रः, वेषः = नेपथ्यं ययोस्तयोः, शुद्धवेषयोः, सा च स च तौ तयोः = सुदक्षिणादिलीपयोः, हिमेन = तुषारेण 'तुषारस्तुहिनं हिमम्' इत्यमरः । निर्मुक्तौ = त्यक्तौ तयोः हिमनिर्मुक्तयोः, चित्रा = नक्षत्रविशेषः, चन्द्रमाः = चन्द्रमाश्चेति चित्राचन्द्रमसौ तयोः चित्राचन्द्रमसोः, इव = यथा, योगे = संगमे, 'सति' चैत्र्यां पूर्णिमायां चित्राचन्द्रमसोरिवेत्यर्थः, काऽपि = अनिर्वचनीया अभिख्या = शोभा, आसीत् = अभवत् ।

**समा०**—शुद्धः वेषः ययोः तौ शुद्धवेषौ तयोः शुद्धवेषयोः । सा च स च तौ तयोः तयोः । हिमेन निर्मुक्तौ हिमनिर्मुक्तौ तयोः हिमनिर्मुक्तयोः, चित्रा च चन्द्रमाः च चित्राचन्द्रमसौ तयोः चित्राचन्द्रमसोः ।

**अभि०**—यथा शिशिरावसाने चैत्रस्य पूर्णिमायां चित्रापूर्णचन्द्रयोः, योगे सति, अलौकिकी शोभा भवति, एवं शुभ्रवेषयोः सुदक्षिणादिलीपयोरतीव शोभाऽभूत् ।

**हिन्दी**—मार्ग में जाते समय सुदक्षिणा के साथ उज्वल वस्त्र पहने राजा दिलीप की वैसी ही अपूर्व शोभा हो रही थी जैसी शिशिर ऋतु के पश्चात् चैत्र की पूर्णिमा में चित्रा नक्षत्र के साथ निर्मल चन्द्र की होती है ।।४६।।

तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ।। ४७ ।।

**सञ्जीविनी**—प्रियं दर्शनं स्वकर्मकं यस्यासौ प्रियदर्शनः । योग्यदर्शनीय इत्यर्थः । भूमिपतिः पत्न्यै तत्तदद्भुतं वस्तु दर्शयंल्लङ्घितमतिवाहितमप्यध्वानं न बुबुधे न ज्ञानवान् । बुधः सौम्य उपमोपमानं यस्येति विग्रहः । इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैवास्य ज्ञातृत्वसूचनार्थम् ।।४७।।

**अन्वयः**—प्रियदर्शनः, बुधोपमः भूमिपतिः, तत्तत्, पत्न्यै, दर्शयन्, लङ्घितम् अपि, अध्वानं, न, बुबुधे ।

**वाच्य०**—प्रियदर्शनेन बुधोपमेन भूमिपतिना तत्तत् पत्न्यै दर्शयता लंघितोऽपि, अध्वा न बुबुधे ।

**व्याख्या**—प्रियं = हृद्यं, मनोहरमित्यर्थः, दर्शनम् = अवलोकनं यस्य स प्रियदर्शनः, बुधः = सौम्यः, चन्द्रपुत्र इत्यर्थः पण्डितश्च, उपमा = उपमानं यस्यासौ बुधोपमः 'उपमोपमानं स्याद्' इत्यमरः। पातीति पतिः भूमेः = पृथिव्याः पतिः = स्वामीति भूमिपतिः, राजा दिलीप इत्यर्थः तत्तत् = अद्भुतं दर्शनीयं वस्तु, पत्न्यै = भार्यायै, दर्शयन् = सन्दर्शयन्, लंघितम् = अतिवाहितम्, अतिक्रान्तमित्यर्थः, अपि, अध्वानं = मार्गं, न = नहि बुबुधे = अबोधिष्ट ज्ञातवानित्यर्थः ।

**समा०**—प्रियम् दर्शनम् यस्य सः प्रियदर्शनः। बुधः उपमा यस्य सः बुधोपमः। पाति इति पतिः भूमेः पतिः भूमिपतिः ।

**अभि०**—मनोहरवपुर्दिलीपः स्वभार्यायै पथि दर्शनीयमद्भुतं वस्तु दर्शयन्, अतिक्रान्तमपि मार्गं कियद्दूरमागतोऽस्मीति न ज्ञातवान् ।

**हिन्दी**—पण्डितों के समान बुद्धिमान्, तथा मनोहर शरीर वाले राजा दिलीप, अपनी स्त्री को मार्ग के सब दर्शनीय दृश्य दिखाते हुए, 'ऐसे रम गये कि' पीछे छूटे मार्ग को भी न जान सके ॥४७॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

**सञ्जीविनी**—दुष्प्रापयशाः। दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः। श्रान्तवाहनो दूरोपगमनात्क्लान्तयुग्यः। महिष्याः सखा महिषीसखः। 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः। सहायान्तरनिरपेक्ष इति भावः। स राजा सायं सायंकाले संयमिनो नियमवतस्तस्य महर्षेर्वसिष्ठस्याश्रमं प्रापत्प्राप। पुषादित्वादङ ॥४८॥

**अन्वयः**—दुष्प्रापयशाः, श्रान्तवाहनः, महिषीसखः, सः, सायं, संयमिनः, तस्य महर्षेः, आश्रमम्, प्रापत् ।

**वाच्य०**—दुष्प्रापयशसा श्रान्तवाहनेन महिषीसखेन तेन सायं संयमिनस्तस्य महर्षेः, आश्रमः प्रापि ।

**व्याख्या**— दुःखेन प्राप्तुं शक्यं दुष्प्रापं, दुष्प्रापम् = अन्यदुर्लभम्, यशः = कीर्तिर्यस्य स दुष्प्रापयशाः, श्रान्तानि = क्लान्तानि, दूरागमनादित्यर्थः, वाहनानि = अश्वा इत्यर्थः, यस्यासौ श्रान्तवाहनः, 'सर्वं स्याद् वाहनं यानं युग्यं पत्रं च' इत्यमरः। महिष्याः = कृताभिषेकायाः नृपस्त्रियाः, सखा = सहायः, इति महिषीसखः अन्यसहायानपेक्ष इत्यर्थः, सः = राजा दिलीपः, सायं = सायंकाले, संयमोऽस्यास्तीति संयमी तस्य संयमिनः = नियमवतः, तस्य = पूर्वोक्तस्य कुलगुरोः, महांश्चासौ ऋषिस्तस्य महर्षेः = वसिष्ठस्य, आश्रमम् = आवासं, प्रापत् = प्राप।

**समा०**—दुःखेन प्राप्तुम् शक्यम् दुष्प्रापम्, दुष्प्रापम् यशः यस्य सः दुष्प्रापयशाः। श्रान्तानि वाहनानि यस्य सः श्रान्तवाहनः। महिष्याः सखा महिषीसखः। संयमः अस्य अस्ति इति संयमी तस्य संयमिनः, महान् च असौ ऋषिः महर्षिः, तस्य महर्षेः।

**अभि०**—अन्यदुर्लभकीर्तिः सपत्नीको दिलीपः सायंकाले नियमवतः कुलगुरोर्वसिष्ठस्याश्रमं प्राप।

**हिन्दी**—अन्य मनुष्यों से दुर्लभ यशवाले और थके हैं घोड़े जिसके ऐसे राजा दिलीप अपनी पत्नी के साथ सायंकाल होते २ संयमी महर्षि वसिष्ठजी के आश्रम में पहुँच गए ॥४८॥

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥

**सञ्जीविनी**—वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृत्तैः। समिधश्च कुशांश्च फलानि चाहर्तुं शीलं येषामिति समित्कुशफलाहरास्तैः। 'आङि ताच्छील्ये' इति हरतेराङ्पूर्वादच्प्रत्ययः। अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः तैस्तपस्विभिः पूर्यमाणम्। 'प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति' इति श्रुतेः। यथाह—'कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति। एवमेतमग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन्' इति ॥४९॥

**अन्वयः**—वनान्तरात्, उपावृत्तैः, समित्कुशफलाहरैः, अदृश्याग्निप्रत्युद्यातैः, तपस्विभिः, पूर्यमाणम्, 'आश्रमं प्रापत्'।

**वाच्य०**—वनान्तरादुपावृत्तैः समित्कुशफलाहरैः, अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्यमाण आश्रमः प्रापि।

**व्याख्या**—अन्यत् वनमिति वनान्तरं=अन्यविपिनं तस्मात् वनान्तरात्, उपावृत्तैः=प्रत्यागतैः समिधः=काष्ठानि च, कुशाः=दर्भाश्च, फलानि=आम्रादिफलानि चेति समित्कुशफलानि तान्याहर्तुं शीलं येषां ते तैः समित्कुशफलाहरैः, अदृश्याः=दर्शनायोग्याः=अनवलोक्या इत्यर्थः, ये ते, अग्नयः=पावकास्तैः प्रत्युद्याताः=प्रत्युद्गतास्तैः अदृश्याग्निप्रत्युद्यातैः तपः=तपश्चरणमस्ति येषां ते तैस्तपस्विभिः=तापसैः, पूर्यमाणम्=व्याप्तम्, आश्रमं प्रापदित्यन्वयः ।

**समा०**—अन्यत् वनम् वनान्तरम् तस्मात् वनान्तरात् । समिधश्च कुशाश्च फलानि च समित्कुशफलानि, समित्कुशफलानि आहर्तुम् शीलम् येषाम् ते समित्कुशफलाहराः, तैः समित्कुशफलाहरैः । द्रष्टुम् योग्याः दृश्याः, न दृश्याः अदृश्याः, अदृश्याश्च ते अग्नयः अदृश्याग्नयः, अदृश्याग्निभिः प्रत्युद्याताः इति अदृश्याग्निप्रत्युद्याताः, तैः अदृश्याग्निप्रत्युद्यातैः । तपः अस्ति येषाम् ते तपस्विनः तैः तपस्विभिः ।

**अभि०**—वनान्तरात् समित्कुशफलान्याहाय परावृत्तैः, अदृश्यवैतानिकाग्निप्रत्युद्गतैस्तापसैर्व्याप्तमाश्रमं प्रापत् ।

**हिन्दी**—दूसरे वन से समिधा कुशा तथा फलों को लेकर लौटे हुए, तपस्वियों से वसिष्ठाश्रम भरा हुआ था, और उन आने वाले तपस्वियों को अदृश्य होकर श्रौताग्नि अगवानी कर रहा था ॥४९॥

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥

**सञ्जीविनी**—नीवाराणां भाग एव भागधेयोऽशः । 'भागरूपनामभ्यो धेयः' इति वक्तव्यसूत्रात्स्वार्थाभिधेये धेयप्रत्ययः । तस्योचितैः । अत एवोटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैर्मृगैः ऋषिपत्नीनामपत्यैरिव आकीर्णं व्याप्तम् ॥

**अन्वयः**—नीवारभागधेयोचितैः, उटजद्वाररोधिभिः, मृगैः, ऋषिपत्नीनाम्, अपत्यैः, इव आकीर्णम्, 'आश्रमं प्रापत्' ।

**वाच्य०**—नीवारभागधेयोचितैरुटजद्वाररोधिभिः, मृगैः ऋषिपत्नीनामपत्यैरिवाकीर्ण आश्रमः प्रापि ।

**व्याख्या**—भाग एवेति भागधेयः, नीवाराणां=तृणधान्यानां, 'तृणधान्यानि नीवाराः' इत्यमरः, भागधेयः=अंशः, इति नीवारभागधेयः, तस्य नीवारभागधे-

यस्य, उचिताः=योग्याः, तैः, नीवारभागधेयोचितैः, 'अतएव' उटजानां=पर्णशालानां, द्वाराणि=प्रतीहारान्, 'द्वाद्वारं प्रतीहारः' इत्यमरः। रोद्धुम् शीलं येषां ते तैः, उटजद्वाररोधिभिः, 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः। मृगैः=हरिणैः, ऋषीणां=मंत्रद्रष्टृणां, पत्न्यः=भार्याः, तासाम्, ऋषिपत्नीनाम्, अपत्यैः=पुत्रैः, इव=यथा, आकीर्णं=व्याप्तम्, आश्रमं प्रापदिति पूर्वश्लोकेनान्वयः।

**समा०**—भाग एव भागधेयः, नीवाराणाम् भागधेय इति नीवारभागधेयः, नीवारभागधेयस्य उचिताः नीवारभागधेयोचिताः, तैः नीवारभागधेयोचितैः। उटजानाम् द्वाराणि उटजद्वाराणि, उटजद्वाराणि रोद्धुम् शीलम् येषाम् ते उटजद्वाररोधिनः, तैः उटजद्वाररोधिभिः। ऋषीणाम् पत्न्यः ऋषिपत्न्यः तासाम् ऋषिपत्नीनाम्।

**अभि०**—ऋषिपत्नीनां बालका यथोटजद्वारं रुद्ध्वा अतिष्ठन्, तथैव तृणधान्यांशाहरणार्थं मृगा उटजद्वारं व्याप्य स्थिता आसन्।

**हिन्दी**—ऋषिपत्नियों के बालकों के समान तिन्नी के चावल खाने के अभ्यासी, इसी लिये पर्णकुटियों के द्वारों को छेंके खड़े हुए मृगों से वह आश्रम परिपूर्ण था ॥५०॥

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्॥ ५१ ॥

**सञ्जीविनी**—सेकान्ते वृक्षमूलसेचनावसाने मुनिकन्याभिः। सेक्त्रीभिः। आलवालेषु जलावापप्रदेशेषु यदम्बु तत्पायिनां। 'स्यादालवालमावालमावापः' इत्यमरः। विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय 'समौ विश्रम्भविश्वासौ' इत्यमरः, तत्क्षणे सेकक्षण उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम्। ह्रस्वार्थे कप्रत्ययः ॥५१॥

**अन्वयः**—सेकान्ते, मुनिकन्याभिः, आलवालाम्बुपायिनाम्, विहङ्गानाम्, विश्वासाय, तत्क्षणोज्झितवृक्षकम् 'आश्रमम् प्रापत्'।

**वाच्य०**—आलवालाम्बुपायिनाम्, विहङ्गानाम्, विश्वासाय, मुनिकन्याभिः, सेकान्ते, तत्क्षणोज्झितवृक्षकः आश्रमः प्रापि।

**व्याख्या**—सेकस्य=तरुमूलसेचनस्य, अन्तः=अवसानम्, इति सेकान्तः, तस्मिन् सेकान्ते, मुनीनां=ऋषीणां, कन्याः=सुताः, इति मुनिकन्याः, ताभिः,

मुनिकन्याभिः, आलवालेषु = आवालेषु, अम्बु = जलम्, इति, आलवालाम्बु, तत्पातुं = पानं कर्तुं शीलं येषां ते, आलवालाम्बुपायिनः, तेषाम्, आलवालाम्बुपायिनाम्, विहायसा गच्छन्तीति विहङ्गाः = पक्षिणः, तेषाम् विहङ्गानाम्, विश्वासाय = विस्रम्भाय, विश्वासं जनयितुमित्यर्थः, तत्क्षणे = तस्मिन्नेवावसरे, उज्झिता इति तत्क्षणोज्झिताः ह्रस्वा वृक्षा वृक्षकाः, तत्क्षणोज्झिता वृक्षका यस्मिन् सः, तादृशम्, 'आश्रमम्, प्रापत्' ।

समा०—सेकस्य अन्तः सेकान्तः तस्मिन् सेकान्ते । आलवालेषु यदम्बु तत्पातुं शीलं येषां ते आलवालाम्बुपायिनः, तेषाम् आलवालाम्बुपायिनाम् । स चासौ क्षणश्च तत्क्षणः, तत्क्षणे उज्झिता इति तत्क्षणोज्झिताः, ह्रस्वाः वृक्षाः वृक्षकाः, तत्क्षणोज्झिताः वृक्षका यत्र सः तत्क्षणोज्झितवृक्षकः तम् तत्क्षणोज्झितवृक्षकम् ।

अभि०—पक्षिणो निर्भयाः सन्तः पानीयं पिबन्तु, इति मनसि विचार्य यत्र मुनिकुमारिका लघुवृक्षमूलसेचनं कृत्वा तत्क्षणादेवापयान्ति तमेवाश्रमं प्रापत् ।

हिन्दी—राजा दिलीप, पक्षिगण निर्भय होकर पानी पियें इस दृष्टि से छोटे वृक्षों की जड़ों में पानी देकर मुनिबालिकायें जहाँ तुरत हट जाती हैं, उस आश्रम में पहुँचे ।।५१।।

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥

सञ्जीविनी—आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु । 'नीवारास्तृणधान्यानि' इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरभागेषु । 'पर्णशालोटजोऽस्त्रियाम्' इति । 'अङ्गनं चत्वराजिरे' इति चामरः । निषादिभिरुपविष्टैर्मृगैर्वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम् ।।५२।।

अन्वयः—आतपात्ययसंक्षिप्तनीवारासु, उटजाङ्गनभूमिषु, निषादिभिः, मृगैः, वर्तितरोमन्थम्, 'आश्रमम्, प्रापत्' ।

वाच्य०—वर्तितरोमन्थः, आश्रमः, प्रापि ।

व्याख्या—आ = समन्तात्, तापयति = संतापं जनयति, इति, आतपः, तस्य, अत्ययः = ध्वंसः इति आतपात्ययः, आतपात्यये, संक्षिप्ताः = राशीकृताः, नीवाराः

=तृणधान्यानि यासु ताः, आतपात्ययसंक्षिप्तनीवाराः, तासु आतपात्ययसंक्षिप्तनीवारासु, अङ्गनस्य अजिरस्य भूमयः=प्रदेशाः, इति, अङ्गनभूमयः,उटजानाम्=पर्णशालानाम् अङ्गनभूमयः, इति उटजाङ्गनभूमयः, तासु उटजाङ्गनभूमिषु, निषीदन्ति=तिष्ठन्ति, तच्छीलाः, निषादिनः, तैः, निषादिभिः, मृगैः=हरिणैः, वर्तितः=निष्पादितः, रोमन्थः=चर्वितस्याकृष्य पुनश्चर्वणम्, यस्मिन् तम्, 'आश्रमम्, प्रापत्' ।

**समा०**—आ समन्तात् तापयति इति आतपः, तस्य अत्ययः, आतपात्ययः, तस्मिन् संक्षिप्ताः नीवाराः यासु ताः, आतपात्ययसंक्षिप्तनीवाराः, तासु,आतपात्ययसंक्षिप्तनीवारासु । उटजानाम् अङ्गनभूमयः इति, उटजाङ्गनभूमयः, तासु उटजाङ्गनभूमिषु। वर्तितः रोमन्थः यस्मिन् सः वर्तितरोमन्थः तम् वर्तितरोमन्थम्।

**अभि०**—राजा दिलीपः, यत्र सायंकाले पर्णशालानां चत्वरप्रदेशेषु राशीकृतेषु तृणधान्येषु सुखेनोपविष्टा मृगाश्चर्वितचर्वणं कुर्वन्ति, तं मुनेराश्रमं प्रापत् ।

**हिन्दी**—राजा दिलीप सायंकाल के समय मुनि वशिष्ठ के आश्रम में पहुँचे जहाँ कि पर्णशालाओं के आंगनों में धूप के चले जाने से इकट्ठे किये नीवार नामक धान्य के ढेरों पर बैठे हुए हरिण रोमन्थ अर्थात् जुगाली कर रहे थे ।।५२।।

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥

**सञ्जीविनी**—अभ्युत्थिताः प्रज्वलिताः। होमयोग्या इत्यर्थः । 'समिद्धेऽग्नावाहुतीर्जुहोति' इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः । आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैर्धूमैराश्रमोन्मुखानतिथीन्पुनानं पवित्रीकुर्वाणम् ॥ कुलकम् ।।५३।।

**अन्वयः—अभ्युत्थिताग्निपिशुनैः, पवनोद्धूतैः, आहुतिगन्धिभिः, धूमैः, आश्रमोन्मुखान्, अतिथीन्, पुनानम्, 'आश्रमम् प्रापत्' ।**

**वाच्य०**—पुनानः, आश्रमः, प्रापि ।

**व्याख्या**—अभितः उत्थिताः=प्रज्वलिताः, इति, अभ्युत्थिताः, अभ्युत्थिताश्च, ते अग्नयः=वह्नयः, इति, अभ्युत्थिताग्नयः, अभ्युत्थिताग्नीनां पिशुनाः=सूचकाः, इति, अभ्युत्थिताग्निपिशुनाः तैः अभ्युत्थिताग्निपिशुनैः,

पवनेन=वायुना, उद्धूताः=कम्पिताः इति पवनोद्धूताः, तैः पवनोद्धूतैः, आ=समन्तात्, हवनम्=मन्त्रपूर्वकमग्नौ हविष्प्रक्षेपः, आहुतिः, आहुतेः गन्धः=सुरभिः, एषामस्तीति, आहुतिगन्धिनः, तैः, आहुतिगन्धिभिः, धूमैः, उद्गतं मुखम्=आननं येषां ते, उन्मुखाः, आश्रमस्य=मुन्यावासस्य, उन्मुखाः, इति, आश्रमोन्मुखाः, तान्, आश्रमोन्मुखान्, वसिष्ठावासं प्रति गमनोत्सुकानित्यर्थः, अतिथीन्=अभ्यागतान्, पुनानम्=पवित्रीकुर्वाणम्, 'आश्रमं प्रापत्'।

**समा०**—अभितः उत्थिताः इति अभ्युत्थिताः, अभ्युत्थिताश्च ते अग्नयः इति अभ्युत्थिताग्नयः,तेषां,पिशुना इति अभ्युत्थाग्निपिशुनाः, तैः अभ्युत्थिताग्निपिशुनैः। पवनेन, उद्धूताः इति, पवनोद्धूताः, तैः, पवनोद्धूतैः। आहुतेः गन्धः आहुतिगन्धः, सः एषाम् अस्ति इति आहुतिगन्धिनः, तैः, आहुतिगन्धिभिः। उद्गतं मुखं येषां, ते उन्मुखाः, आश्रमस्य उन्मुखाः इति आश्रमोन्मुखाः, तान् आश्रमोन्मुखान्।

**अभि०**—राजा दिलीपः, मुनिजनविहितहवनस्य गन्धेन मिश्रितैः पवनवशादितस्ततः प्रसरद्भिर्धूमैरभ्यागतजनान्पवित्रीकुर्वाणमाश्रमं प्राप।

**हिन्दी**—राजा दिलीप मुनियों से किये गये हवन की गन्ध से मिश्रित धुएँ से, जो कि हवा से आश्रम के इधर-उधर फैला हुआ था, आने वाले अतिथियों को पवित्र करने वाले मुनि वसिष्ठजी के आश्रम में पहुँचे ॥५३॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः।
तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥

**सञ्जीविनी**—अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिं धुरं वहन्तीति धुर्या युग्याः। 'धुरो यड्ढकौ' इति यत्प्रत्ययः। 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः' इत्यमरः। धुर्यान्रथाश्वान्विश्रामय विनीतश्रमान्कुर्वित्यादिश्याज्ञाप्य तां पत्नीं रथादवारोहयदवतारितवान्स्वयं चावततार। 'विश्रमय' इति ह्रस्वपाठे 'जनीजृष०' इति मित्त्वे 'मितां ह्रस्व' इति ह्रस्वः। दीर्घपाठे 'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणत्वाद्ह्रस्वाभाव इति वृत्तिकारः ॥५४॥

**अन्वयः—अथ, सः, यन्तारम्, धुर्यान्, विश्रामय, इति, आदिश्य, ताम्, पत्नीम्, रथात्, अवारोहयत्, स्वयम्, च, अवततार।**

**वाच्य०**—अथ, तेन, यन्तारम् 'त्वया', धुर्याः, विश्राम्यन्ताम्, इति, आदिश्य, सा, पत्नी, रथात्, अवारोह्यत, स्वयम्, च, अवतेरे ।

**व्याख्या**—अथ = आश्रमप्राप्त्यनन्तरम्, सः = दिलीपः, यच्छति इति यन्ता = सारथिः, तम्, यन्तारम्. धुरं वहन्तीति धुर्याः = अश्वाः, तान्, धुर्यान्, विश्रामय = विनीतश्रमान् कुरु, इति = इत्थम्, आदिश्य = आज्ञाप्य, ताम् = पूर्वोक्ताम्, पत्नीम् = भार्याम्, सुदक्षिणाम् रथात् = स्यन्दनात्, अवारोहयत् = अवतारितवान्, 'स्वयम्' च अवततार = अवारुरोह ।

**समा०**—धुरं वहन्ति, इति धुर्याः, तान् धुर्यान् ।

**अभि०**—आश्रमप्राप्त्यनन्तरं राजा, अश्वपरिश्रमदूरीकरणे सारथिमाज्ञाप्य सुदक्षिणासहितो रथादवततार ।

**हिन्दी**—आश्रम में पहुँच कर राजा सारथि को घोड़ों की थकान दूर करने का आदेश देते हुए सुदक्षिणा सहित रथ से उतरे ॥५४॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥

**सञ्जीविनी**—सभायां साधवः सभ्याः । 'सभायां यः' इति यप्रत्ययः । गुप्ततमेन्द्रिया अत्यन्तनियमितेन्द्रिया मुनयः सभार्याय गोप्त्रे रक्षकाय । नयः शास्त्रमेव चक्षुस्तत्त्वावेदकं प्रमाणं यस्य तस्मै नयचक्षुषे । अत एवार्हते प्रशस्ताय । पूज्यायेत्यर्थः । 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः । तस्मै राज्ञेऽर्हणां पूजां चक्रुः । 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः ॥५५॥

**अन्वयः**—सभ्याः, गुप्ततमेन्द्रियाः, मुनयः, सभार्याय, गोप्त्रे, नयचक्षुषे, अर्हते, तस्मै, अर्हणाम् चक्रुः ।

**वाच्य०**—सभ्यैः, गुप्ततमेन्द्रियैः, मुनिभिः, अर्हणा, चक्रे ।

**व्याख्या**—सभासु साधवः सभ्याः = सभासदः, अतिशयेन गुप्तानि गुप्ततमानि = दृढरक्षितानि, गुप्ततमानि इन्द्रियाणि = अक्षाणि, येषां ते गुप्ततमेन्द्रियाः, मुनयः = ऋषयः, भार्यया = पत्न्या सह वर्तमानः सभार्यः, तस्मै सभार्याय, सुदक्षिणासहिताय, गोप्त्रे = रक्षकाय, नयः = नीतिः एव चक्षुः = नेत्रं यस्य स नयचक्षुः तस्मै नयचक्षुषे, अर्हते = पूज्याय, तस्मै = दिलीपाय, अर्हणाम् = पूजाम्, चक्रुः = अकुर्वन् ।

**समा०**—सभासु साधवः, सभ्याः। अतिशयेन गुप्तानि गुप्ततमानि, गुप्ततमानि इन्द्रियाणि येषां ते गुप्ततमेन्द्रियाः। भार्यया सहितः सभार्यः, तस्मै सभार्याय। नयः एव चक्षुः, यस्य स नयचक्षुः, तस्मै नयचक्षुषे।

**अभि०**—वसिष्ठादेशेनाश्रमस्था मुनयो नीतिविदं, पूजार्हं रक्षकं च सुदक्षिणासहितं दिलीपमपूजयन्।

**हिन्दी**—वसिष्ठजी की आज्ञा से आश्रम में स्थित जितेन्द्रिय मुनियों ने नीतिशास्त्रज्ञ, पूजाके योग्य एवं रक्षक सुदक्षिणा सहित राजा दिलीप की पूजा की ॥५५॥

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम्।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥५६॥

**सञ्जीविनी**—स राजा सायंतनस्य सायंभवस्य। 'सायंचिरम्०' इत्यादिना ट्युल्प्रत्ययः। विधेर्जपहोमाद्यनुष्ठानस्यान्तेऽवसानेऽरुन्धत्याऽन्वासितं पश्चादुपवेशनेनोपसेवितम्। कर्मणि क्तः। उपसर्गवशात्सकर्मकत्वम्। 'अन्वास्यैनाम्' इत्यादिवदुपपद्यते। तपोनिधिं वसिष्ठम्। स्वाहया स्वाहादेव्या। 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' इत्यमरः। अन्वासितं हविर्भुजमिव। ददर्श। 'समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः। जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत्॥' इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम्। अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तं न कर्माङ्गत्वेन। विधेरन्त इति कर्मणः समाप्त्यभिधानात्॥

**अन्वयः—सः, सायन्तनस्य, विधेः, अन्ते, अरुन्धत्या, अन्वासितम्, तपोनिधिम् स्वाहया, अन्वासितम्, हविर्भुजम्, इव, ददर्श।**

**वाच्य०**—तेन, अरुन्धत्या अन्वासितः, तपोनिधिः, स्वाहया अन्वासितः हविर्भुक्, इव, ददृशे।

**व्याख्या**—सः = दिलीपः, सायं भवः सायन्तनः = सायंकालिकः, तस्य, सायन्तनस्य, विधेः = अनुष्ठानस्य, अन्ते = अवसाने, अरुन्धत्या = तन्नाम्न्या स्वपत्न्या, अन्वासितम् = उपासितम्, तपसाम् = तपश्चर्याणाम्, निधिः = आकरः, इति, तपोनिधिः, तम्, तपोनिधिम्, स्वाहया = स्वाहादेव्या 'अन्वासितम्' हविः = हवनीयं द्रव्यं भुनक्ति = खादति, इति हविर्भुक्, तं हविर्भुजम्, इव = यथा, ददर्श = अपश्यत्।

**समा०**—सायं भवः सायंतनः तस्य सायन्तनस्य। तपसां निधिः तपोनिधिः तम् तपोनिधिम्। हविः भुनक्ति इति हविर्भुक्, तम् हविर्भुजम्।

**अभि०**—दिलीपः सायंकालिकविधेरनन्तरं स्वाहादेव्या समुपासितं वह्निमिव स्थितं स्वधर्मपत्न्योपसेवितं वसिष्ठं ददर्श।

**हिन्दी**—राजा दिलीप ने सायंकालिक संध्यावन्दनादि के अनन्तर अपनी पत्नी अरुन्धती से सेवित वसिष्ठजी को बैठे हुए इस प्रकार देखा मानो अपनी पत्नी स्वाहा देवी से सेवित साक्षात् अग्निदेव हों॥५६॥

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः॥ ५७॥

**सञ्जीविनी**—मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोररुन्धतीवसिष्ठयोः पादाञ्जगृहतुः। 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। पादग्रहणमभिवादनम्। गुरुपत्नी गुरुश्च कर्तारौ। सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ। प्रीत्या हर्षेण प्रतिननन्दतुः। आशीर्वादादिभिः संभावयांचक्रतुरित्यर्थः॥५७॥

**अन्वयः—मागधी, राज्ञी, राजा, च, तयोः, पादान्, जगृहतुः, गुरुपत्नी, गुरुः, च, तौ, प्रीत्या, प्रतिननन्दतुः।**

**वाच्य०**—मागध्या, राज्ञ्या, राज्ञा, च, तयोः, पादाः, जगृहिरे, गुरुणा, गुरुपत्न्या, च प्रीत्या, तौ, प्रतिनन्दाते।

**व्याख्या**—मगधानाम् = देशविशेषाणाम्, राजा = नृपः, मागधः, मागधस्यापत्यं स्त्री मागधी, राज्ञी = महिषी सुदक्षिणा, राजा = नृपः, दिलीपश्च, सा = अरुन्धती, सः = वसिष्ठः, च, तौ, तयोः, पादान् = चरणान्, जगृहतुः = पस्पृशतुः, गुरोः = वसिष्ठस्य, पत्नी = भार्या, गुरुपत्नी अरुन्धती इत्यर्थः, गुरुः = वसिष्ठः, च, प्रीत्या = प्रेम्णा, सा = सुदक्षिणा च, सः = दिलीपश्च, तौ कर्मभूतौ, प्रतिननन्दतुः = आशीर्वचनादिभिः सम्भावयाञ्चक्रतुः।

**समा०**—मगधानां राजा मागधः, मागधस्यापत्यं स्त्री मागधी। गुरोः, पत्नी गुरुपत्नी।

**अभि०**—सुदक्षिणा दिलीपश्च गुरुं वसिष्ठं गुरुपत्नीमरुन्धतीं च नमश्चक्रतुः। ततः सपत्नीको गुरुरपि ताभ्यामाशिषं ददौ।

**हिन्दी**--सुदक्षिणा और दिलीप ने गुरु वसिष्ठ और गुरुपत्नी को नमस्कार किया। तब उन्होंने भी उन दोनों राजा-रानी को प्रेम-पूर्वक आशीर्वाद दिया॥५७॥

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥

**सञ्जीविनी**--मुनिः। अतिथ्यर्थमातिथ्यम्। 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः। आतिथ्यस्य क्रिया तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम्। राज्यमेवाश्रमस्तत्र मुनितुल्यमित्यर्थः। तं दिली राज्ये कुशलं पप्रच्छ। पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम्। यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः, तथाप्यत्र सप्ताङ्गवचनः। 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु' इत्युत्तरविरोधात्, तथाह मनुः—'स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते'॥ इति। तत्र 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥' इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद् ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसंधेयम्। अत एवोक्तम्—राज्याश्रममुनिमिति॥५८॥

**अन्वयः**---मुनिः, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्, राज्याश्रममुनिम्, तम्, राज्ये, कुशलम्, पप्रच्छ।

**वाच्य०**---मुनिना, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमः, राज्याश्रममुनिः, स पप्रच्छे।

**व्याख्या**—मन्ता = वेदशास्त्रार्थतत्त्वागन्ता, मुनिः, अभ्यागतः इत्यर्थः, न विद्यमाना तिथिर्यस्यागमने सः अतिथिः, अतिथये इदम् आतिथ्यम्, आतिथ्यस्य = अभ्यागतसत्कारस्य, क्रिया = कर्म इति आतिथ्यक्रिया, आतिथ्यक्रियया शान्तः = गतः इति आतिथ्यक्रियाशान्तः, रथस्य = स्यन्दनस्य, क्षोभः = संचलनम्, इति रथक्षोभः, रथक्षोभेण परिश्रमः = खेदः इति रथक्षोभपरिश्रमः, आतिथ्यक्रियाशान्तः रथक्षोभपरिश्रमः यस्य सः, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमः, तं तथोक्तम्, राज्ञः = नृपस्य भावः कर्म वा राज्यम् = राष्ट्रम्, राज्यमेवाश्रमः = मुन्यावासः, इति राज्याश्रमः, राज्याश्रमे मुनिः, इति राज्याश्रममुनिः, तम् राज्याश्रममुनिम्, तम् = राजानम् दिलीपम्, राज्ये = राष्ट्रमण्डले, कुशलम् = क्षेमम्, पप्रच्छ = अपृच्छत्।

**समा०**—अविद्यमाना तिथिः यस्य आगमने स अतिथिः, अतिथये इदम् आतिथ्यम्,आतिथ्यस्य क्रिया आतिथ्यक्रिया, तया शान्तः इति आतिथ्यक्रियाशान्तः, रथस्य क्षोभः इति रथक्षोभः, रथक्षोभेण परिश्रमः रथक्षोभपरिश्रमः, आतिथ्यक्रियाशान्तः रथक्षोभपरिश्रमः यस्य सः आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमः। राज्ञः भावः कर्म वा राज्यम्, राज्यम् एव आश्रम इति राज्याश्रमः, राज्याश्रमे मुनिः इति, राज्याश्रममुनिः, तम् राज्याश्रममुनिम् ।

**अभि०**—वसिष्ठो दिलीपस्य रथसंचलनखेदमातिथ्यक्रियया दूरीकृत्य तं राज्ये कुशलं पृष्टवान् ।

**हिन्दी**—वसिष्ठजी ने दिलीप के रथ के हिलने-डुलने से उत्पन्न खेद को आतिथ्य-सत्कार से दूर किया और राज्य-सम्वन्धी कुशल पूछा ॥५८॥

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥

**सञ्जीविनी**—अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां वरः श्रेष्ठः 'यतश्च निर्धारणम्' इति षष्ठी । अर्थपती राजाथर्ववेदस्य मुनेः पुरोऽग्रेऽर्थ्यामर्थादनपेताम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । वाचमाददे । वक्तुमुपक्रान्तवानित्यर्थः। अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते । यथाह कामन्दकः —'त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः । अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥' इति ॥

**अन्वयः—अथ, विजितारिपुरः, वदताम्, वरः, अर्थपतिः, अथर्वनिधेः, तस्य, पुरः, अर्थ्याम्, वाचम्, आददे ।**

**वाच्य०**—विजितारिपुरेण, वदताम् वरेण, अर्थपतिना, अर्थ्या, वाक्, आददे ।

**व्याख्या**—अथ=कुशलप्रश्नानन्तरम्, अरीणाम्=शत्रूणाम्, पुराणि=नगराणि इति अरिपुराणि, विजितानि=स्वायत्तीकृतानि अरिपुराणि येन सः विजितारिपुरः, वदताम्=वक्तॄणाम्, वरः=श्रेष्ठः अर्थस्य=विभवस्य, पतिः=स्वामी अर्थपतिः, अथर्वणः=अथर्ववेदस्य, निधिः=आकरः, इति अथर्वनिधिः तस्य अथर्वनिधेः, तस्य=वसिष्ठस्य, पुरः=अग्रे, अर्थादनपेता अर्थ्या=अर्थोपेता, ताम्, अर्थ्याम्, वाचम्=वाणीम्, आददे=जगृहे ।

**समा०**—अरीणाम् पुराणि इति अरिपुराणि, विजितानि अरिपुराणि येन सः, विजितारिपुरः। अर्थस्य पतिः अर्थपतिः। अथर्वणः निधिः अथर्वनिधिः तस्य, अथर्वनिधेः। अर्थादनपेता अर्थ्या, ताम् अर्थ्याम्।

**अभि०**—वसिष्ठकुशलप्रश्नानन्तरं चक्रवर्ती वाक्पटु राजा दिलीपः वसिष्ठं साभिप्रायमुवाच।

**हिन्दी**—वसिष्ठ जी के कुशल पूछने पर वाक्पटु चक्रवर्ती राजा दिलीप साभिप्राय वचन बोले ॥५९॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥

**सञ्जीविनी**—हे गुरो! सप्तस्वङ्गेषु स्वाम्यमात्यादिषु। 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। सप्ताङ्गानि' इत्यमरः। शिवं कुशलमुपपन्नं ननु युक्तमेव। नन्ववधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। कथमित्यत्राह—यस्य मे दैवीनां देवेभ्य आगतानां दुर्भिक्षादीनाम्। मानुषीणां मनुष्येभ्य आगतानां चोरभयादीनाम्। उभयत्रापि 'तत आगतः' इत्यण्। 'टिड्ढाणञ्०' इत्यदिना ङीप्। आपदां व्यसनानां त्वं प्रतिहर्ता वारयितासि। अत्राह कामन्दकः—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः॥ आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् ॥' इति ॥६०॥

**अन्वयः—सप्तसु, अङ्गेषु, मे, शिवम्, उपपन्नम्, ननु, यस्य, मे, दैवीनाम् मानुषीणाञ्च, आपदाम्, त्वम्, प्रतिहर्ता, असि।**

**वाच्य०**—त्वया, प्रतिहर्त्रा, भूयते।

**व्याख्या**—सप्तसु = सप्तसंख्यकेषु अङ्गेषु = स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपेषु राज्याङ्गेषु, मे = मम, शिवम् = कल्याणम्, उपपन्नम् = युक्तम्, ननु = निश्चितम्, यस्य = मे, मम दिलीपस्येत्यर्थः, देवेभ्यः = सुरेभ्यः, आगताः प्राप्ताः दैव्यः, तासां दैवीनाम्, दुर्भिक्षादीनाम्, मनुष्येभ्यः = मानवेभ्यः आगताः मानुष्यः तासाम्, मानुषीणाम् = चौर्यादीनाम्, आपदाम् = आपत्तीनाम्, प्रतिहरति इति प्रतिहर्ता = निवारकः, त्वम् = वसिष्ठः, 'असि'।

**समा०**—देवेभ्यः आगताः दैव्यः, तासाम्, दैवीनाम् । मनुष्येभ्यः आगताः, मानुष्यः, तासाम् मानुषीणाम् । प्रतिहरति इति प्रतिहर्ता ।

**अभि०**—स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपेषु राज्याङ्गेषु मे कुशलमेव, यतः मे दैवीनां मानुषीणां च विपत्तीनां त्वं निवारको विद्यसे ।

**हिन्दी**—मेरे, स्वामी अमात्य सुहृत् कोश राष्ट्र, दुर्ग तथा बल रूप राज्य के सातों अङ्गों में कुशल ही है, क्योंकि मेरी दैवी तथा मानुषी दोनों प्रकार की विपत्तियों के दूर करनेवाले आप स्वयं विद्यमान हैं ।

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥

**सञ्जीविनी**—दूरात्परोक्ष एव प्रशमितारिभिः । मन्त्रान्कृतवान्मन्त्रकृत् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् । तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्तृभिः दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव । वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा । 'प्रत्यादेशो निराकृतिः' इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः ।

**अन्वयः—दूरात्, प्रशमितारिभिः, मन्त्रकृतः, तव, मन्त्रैः, दृष्टलक्ष्यभिदः, मे, शराः, प्रत्यादिश्यन्ते, इव ।**

**वाच्य०**—प्रशमितारयः, मन्त्राः, शरान्, प्रत्यादिशन्ति ।

**व्याख्या**—दूरात् = विप्रकृष्टदेशात् परोक्ष इत्यर्थः, प्रकर्षेण शमिताः = शान्ताः इति प्रशमिताः, प्रशमिताः अरयः = शत्रवः, इति प्रशमितारयः तैः तथोक्तैः, मन्त्रान् = जप्यान्, कृतवान् = सृष्टवान्, प्रयुक्तवान्, वा मन्त्रकृत् तस्य मन्त्रकृतः, तव = वसिष्ठस्य, मन्त्रैः = जप्यैः, दृष्टम् = अवलोकितम्, च तत् लक्ष्यम् = शरव्यम् इति दृष्टलक्ष्यम्, दृष्टलक्ष्यं भिन्दति = विदारयन्ति, इति दृष्टलक्ष्यभिदः, मे = मम दिलीपस्य, शराः = बाणाः, प्रत्यादिश्यन्ते = निराक्रियन्ते, इव = यथेत्युत्प्रेक्षा ।

**समा०**—प्रकर्षेण शमिताः इति प्रशमिताः, प्रशमिताः अरयः यैः ते शमितारयः, तैः प्रशमितारिभिः । मन्त्रान्, कृतवान्, इति मन्त्रकृत्, तस्य मन्त्रकृतः । दृष्टम् च तत् लक्ष्यम् इति दृष्टलक्ष्यम्, दृष्टलक्ष्यं भिन्दन्ति इति दृष्टलक्ष्यभिदः ।

**अभि०**—हे गुरो, भवान् स्वमन्त्रप्रयोगैः परोक्ष एव मम शत्रून्विनाशयति। मम बाणास्तु तेषु पिष्टपेषणन्यायेन व्यर्था इव भवन्ति। यतस्ते प्रत्यक्षमेव शत्रून्विनाशयन्ति।

**हिन्दी**—हे गुरो, आप अपने मन्त्रों के सामर्थ्य से पहले ही परोक्ष में मेरे शत्रुओं का विनाश कर देते हैं, अतः मेरे बाण तो प्रत्यक्ष में ही शत्रुओं का विनाश करने के कारण व्यर्थ से प्रतीत होते हैं ॥६१॥

हविरावर्जितं होतस्त्वया विधिवदग्निषु।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥

**सञ्जीविनी**—हे होतः! त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादिकं कर्तृ। अवग्रहो वर्षप्रतिबन्धः। 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यप्प्रत्ययः। 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः। तेन विशोषिणां विशुष्यतां सस्यानां वृष्टिर्भवति। वृष्टिरूपेण सस्यान्युपजीवयतीति भावः। अत्र मनुः 'अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥' इति ॥६२॥

**अन्वयः**—हे, होतः, त्वया, विधिवत्, अग्निषु, आवर्जितम्, हविः, अवग्रहविशोषिणाम, सस्यानाम्, वृष्टिः, भवति।

**वाच्य०**—आवर्जितेन, हविषा, वृष्टया, भूयते।

**व्याख्या**—हे होतः = अग्निहोत्रिन्, त्वया = वसिष्ठेन, विधिवत् = यथाशास्त्रम्, अग्निषु = वह्निषु, आवर्जितम् = तर्पितम्, हविः = हवनीयं द्रव्यम्, अवग्रहणम् = वृष्टिविघातः, एव अवग्रहः, अवग्रहेण विशोषिणः इति अवग्रहविशोषिणः, तेषाम् अवग्रहविशोषिणाम्, सस्यानाम् = धान्यानाम्, वृष्टिः = वर्षणम् भवति = जायते।

**समा०**—अवग्रहेण विशोषिणः इति अवग्रहविशोषिणः, तेषाम् अवग्रहविशोषिणाम्।

**अभि०**—हे हवनकर्तः, यत्त्वमग्नौ विधिवज्जुहोषि तदेव वृष्टिप्रतिबन्धविनाशकं सस्यानां कृते वृष्टिरूपं जायते।

**हिन्दी**—हे हवन करने वाले, गुरो! आप जो विधिपूर्वक अग्नि में आहुति डालते हैं वह ही धानों के लिये अकाल को दूर करनेवाली वृष्टिरूप हो जाती है॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥

**सञ्जीविनी**—आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् । वर्षशतमित्यर्थः । 'शतायुर्वै पुरुषः' इति श्रुतेः । 'अचतुरविचतुरसुचतुर०' इत्यादिसूत्रेणाच्प्रत्ययान्तो निपातः । मदीयाः प्रजाः पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । निरातङ्का निर्भयाः । 'आतङ्को भयमाशङ्का' इति हलायुधः । निरीतयोऽतिवृष्ट्यादिरहिता इति यत्तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसंपत्तिरेव हेतुः । 'व्रताध्ययनसंपत्तिरित्येतद्ब्रह्मवर्चसम्' इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्प्रत्ययः । 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' इति कामन्दकः ॥६३॥

**अन्वयः**—मदीयाः, प्रजाः, पुरुषायुषजीविन्यः, निरातङ्काः, निरीतयः, यत् 'सन्ति' तस्य, त्वद्ब्रह्मवर्चसम्, 'एव', हेतुः ।

**वाच्य०**—मदीयाभिः, प्रजाभिः पुरुषायुषजीविनीभिः निरातङ्काभिः निरीतिभिः, 'यत् भूयते' तस्य, त्वद्ब्रह्मवर्चसेन, एव हेतुना, 'भूयते' ।

**व्याख्या**—मम = दिलीपस्य, इमाः = संबन्धिन्यः, इति, मदीयाः, प्रकर्षेण जायन्ते = भवन्ति, इति, प्रजाः = जनाः, पुरुषस्य = मनुष्यस्य, आयुः = वयः, इति पुरुषायुषम् पुरुषायुषं जीवितुं = प्राणान् धारयितुं शीलं यासां ताः, पुरुषायुषजीविन्यः, निर्गतः = निर्यातः, आतङ्कः = भयं याभ्यः, ताः, निर्गताः = निष्क्रान्ताः ईतिभ्यः = अतिवृष्ट्यादिषडुपद्रवेभ्यः, इति निरीतयः, 'यत् सन्ति', तस्य = सर्वस्य, ब्रह्मणः = व्रताध्ययनादेः, वर्चः = संपत्तिः, ब्रह्मवर्चसम्, तव = वशिष्टस्य ब्रह्मवर्चसम् त्वद्ब्रह्मवर्चसम्, हेतुः = कारणम्, 'अस्ति' ।

**समा०**—मम इमाः मदीयाः । प्रकर्षेण जायन्ते इति प्रजाः । पुरुषस्य आयुः इति पुरुषायुषम् । पुरुषायुषं जीवितुं शीलं यासां ताः पुरुषायुषजीविन्यः । निर्गतः आतङ्कः याभ्यः ताः निरातङ्काः । निर्गताः ईतिभ्यः इति निरीतयः । ब्रह्मणः वर्चः इति ब्रह्मवर्चसम्, तव ब्रह्मवर्चसम् इति त्वद्ब्रह्मवर्चसम् ।

**अभि०**—हे गुरो ! यत् मदीयाः प्रजाः शतवर्षजीविन्यः, निर्भयाः अतिवृष्ट्याद्युपद्रव शून्याश्च सन्ति तत्र तवैव व्रताध्ययनसंपत्तिर्हेतुर्नान्यः ।

**हिन्दी**—हे गुरो ! मेरा प्रजावर्ग जो सौ वरस तक जीनेवाला, निर्भय एवं अतिवृष्टि आदि उपद्रवों से रहित है, उसमें आपका व्रत, वेदपाठ आदि ही कारण है ॥६३॥

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥

**सञ्जीविनी**—ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वयैवमुक्तप्रकारेण चिन्त्यमानस्यानुध्यायमानस्य । अतएव निरापदो व्यसनहीनस्य मे सम्पदः सानुबन्धाः सानुस्यूतयः । अविच्छिन्ना इति यावत् । कथं न स्युः । स्युरेवेत्यर्थः ॥

**अन्वयः**—**ब्रह्मयोनिना, गुरुणा, त्वया, एवम्, चिन्त्यमानस्य, 'अत एव' निरापदः, मे, सम्पदः, सानुबन्धाः, कथम्, न, स्युः ।**

**वाच्य०**—सम्पद्भिः, सानुबन्धाभिः कथम् न भूयेत ।

**व्याख्या**—ब्रह्मा = विधाता, योनिः = कारणम्, यस्य स ब्रह्मयोनिः, तेन ब्रह्मयोनिना, गुरुणा = आचार्येण, त्वया = वशिष्ठेन, एवम् = इत्थम्, चिन्यते = विचार्यते, इति चिन्त्यमानः, तस्य चिन्त्यमानस्य 'अत एव' निष्क्रान्तः = निर्गतः, आपद्भ्यः = विपत्तिभ्यः, इति निरापद् तस्य निरापदः, मे = मम, दिलीपस्य, सम्पदः = सम्पत्तयः, अनुबन्धैः = प्रकृतानुवर्तनैः, सह वर्तमानाः सानुबन्धाः, अविच्छिन्ना इत्यर्थः, कथम् = केन प्रकारेण, न = नैव, स्युः = भवेयुः, अपितु स्युरेव ।

**समा०**—ब्रह्मा योनिः यस्य सः ब्रह्मयोनिः, तेन, ब्रह्मयोनिना । चिन्त्यते इति चिन्त्यमानः तस्य चिन्त्यमानस्य । निर्गतः आपद्भ्यः इति निरापद् तस्य, निरापदः । अनुबन्धैः सह वर्तमानाः सानुबन्धाः ।

**अभि०**—हे गुरो ! ब्रह्मपुत्र ! यदा भवान् मामेवं स्मरति तदा मे संपत्तयोऽविच्छिन्नाः कथं न स्युः ?

**हिन्दी**—हे ब्रह्मपुत्र, जब कि इस प्रकार आप मेरा स्मरण करते हैं तो मेरी सम्पत्तियाँ सर्वदा स्थिर क्यों न रहेंगी ॥६४॥

किंतु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥

**सञ्जीविनी**—किंतु तवैतस्यां वध्वां स्नुषायाम् । 'वधूर्जाया स्नुषा चैव' इत्यमरः । अदृष्टा सदृश्यनुरूपा प्रजा येन तं मां सद्वीपापि । रत्नानि सूयत इति

रत्नसूरपि । 'सत्सूद्विष०' इत्यादिना क्विप् । मेदिनी नावति न प्रीणाति । अव-धातूं रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने । रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्र-रत्नमेव श्लाघ्यमिति सूचितम् ॥६५॥

**अन्वयः**—किंतु, तव, एतस्याम्, वध्वाम्, अदृष्टसदृशप्रजम्, माम्, सद्वीपा, रत्नसूः, अपि, मेदनी, न, अवति ।

**वाच्य०**—अदृष्टसदृशप्रजः अहम् सद्वीपया रत्नसुवा अपि मेदिन्या, अव्ये।

**व्याख्या**—किन्तु = तथात्वेऽपि, तव = वसिष्ठस्य, एतस्याम् = अमुष्याम्, वध्वाम् = स्नुषायाम्, प्रकर्षेण जायत इति प्रजा = संततिः, न दृष्टा = आलोकिता, इति अदृष्टा, अदृष्टा सदृशी = तुल्या, प्रजा येन स अदृष्टसदृशप्रजः, तम् अदृष्टसदृश-प्रजम्, माम् = दिलीपम्, द्वीपैः = भूखण्डविशेषैः सह वर्तमाना सद्वीपा, रत्नानि = हीरकादीनि, सूयते = उत्पादयति, इति रत्नसूः, अपि, मेदिनी = पृथ्वी, न = नैव, अवति = प्रीणाति ।

**समा०**—न दृष्टा अदृष्टा, अदृष्टा सदृशी प्रजा येन सः अदृष्टसदृशप्रजः, तम् अदृष्टसदृशप्रजम् । द्वीपैः सह, वर्तमाना सद्वीपा । रत्नानि सूयते, या सा रत्नसूः ।

**अभि०**—हे गुरो ! भवत्कृपयाऽविच्छिन्नसंपत्तिमत्त्वेऽपि मम सुदक्षिणायां पुत्राभावेन अखण्डमपि साम्राज्यं न संतोषाय भवति ।

**हिन्दी**—हे गुरो ! यद्यपि आप की कृपा से मेरी समस्त सम्पत्तियाँ अवि-च्छिन्न हैं तथापि आपकी इस शिष्य-वधू सुदक्षिणा से स्वसदृश पुत्र न पाकर समस्त रत्नों को उत्पन्न करने वाली भी यह पृथ्वी मुझे संतुष्ट नहीं करती है ॥

तदेव प्रतिपादयति—

**नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।**
**न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥**

**सञ्जीविनी**—मत्तः परं मदनन्तरम् 'पञ्चम्यास्तसिल्' पिण्डविच्छेददर्शिनः पिण्डदानविच्छेदमुत्प्रेक्षमाणाः । वंशोद्भवा वंश्याः पितरः । स्वधेत्यव्ययं पितृभोज्ये वर्तते । तस्याः संग्रहे तत्परा आसक्ताः सन्तः श्राद्धे पितृकर्मणि । 'पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः' इत्यमरः । प्रकामभुजः पर्याप्तभोजिनो न भवन्ति नूनं सत्यम् । 'कामं प्रकामं पर्याप्तम्' इत्यमरः । निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः ॥६६॥

**अन्वयः**—मत्तः, परम्, पिण्डविच्छेददर्शिनः, वंश्याः, स्वधासंग्रहतत्पराः, 'सन्तः', श्राद्धे, प्रकामभुजः, नूनम्, न, 'भवन्ति' ।

**वाच्य०**—पिण्डविच्छेददर्शिभिः वंश्यैः स्वधासंग्रहतत्परैः न प्रकामभुग्भिः भूयते ।

**व्याख्या**—मत्तः = मत्सकाशात्, परम् = अनन्तरम्, पिण्डस्य, विच्छेदः = ध्वंसः इति पिण्डविच्छेदः, पिण्डविच्छेदं द्रष्टुम् = अवलोकितुं शीलं येषान्ते पिण्डविच्छेददर्शिनः, वंशे = कुले भवा वंश्याः, पितर इत्यर्थः । स्वधायाः = पितृभोज्यस्य, सङ्ग्रहः = आदानम्, इति स्वधासङ्ग्रहः स्वधासंग्रहे तत्पराः = लग्नाः इति स्वधासंग्रहतत्पराः, 'सन्तः' श्राद्धे = पितृकार्ये, प्रकामम् = अत्यन्तं पर्याप्तमित्यर्थः । भुंजन्ति = खादन्ति इति प्रकामभुजः, नूनम् = निश्चयेन, न 'भवन्ति' ।

**समा०**—पिण्डस्य विच्छेदः पिण्डविच्छेदः, पिण्डविच्छेदं द्रष्टुं शीलं येषां ते पिण्डविच्छेददर्शिनः । वंशे भवाः वंश्याः । स्वधायाः संग्रहः इति स्वधासंग्रहः, तस्मिन् तत्पराः स्वधासंग्रहतत्पराः । प्रकामम् भुञ्जन्ति इति प्रकामभुजः ।

**अभि०**—पुत्राभावान्मदनन्तरं पिण्डविच्छेदं विचारयन्तो मत्पितरः स्वधासंग्रहसंलग्नाः पर्याप्तं न खादन्ति ।

**हिन्दी**—मेरे अनन्तर पुत्र के अभाव में पिण्ड के लोप का विचार करके मेरे पूर्वज श्राद्धके अवसर पर अवश्य ही तृप्त होकर भोजन नहीं करते होंगे ।६६।

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥

**सञ्जीविनी**—मत्परं मदनन्तरम् । 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इत्यनेन पञ्चमी । दुर्लभं दुर्लभ्यं मत्वा मयावर्जितं मद्दत्तं पयः पूर्वैः पितृभिः स्वनिःश्वासैर्दुःखजैः कवोष्णमीषदुष्णं यथा तथोपभुज्यते । नूनमिति तर्के । कवोष्णमिति कुशब्दस्य कवादेशः । 'कोष्णं कवोष्णं मंदोष्णं कदुष्णं त्रिषु तद्वति' इत्यमरः ॥६७॥

**अन्वयः**—मत्परम्, दुर्लभम्, मत्वा, 'इदानीम्' मया, आवर्जितम्, पयः, पूर्वैः स्वनिश्वासैः कवोष्णम्, 'यथा तथा', उपभुज्यते, नूनम् ।

**वाच्य०**—पूर्वे, कवोष्णम्, उपभुञ्जते ।

**व्याख्या**—मत्तः = मत्सकाशात्, परम् = अग्रे, दुर्लभम् = दुष्प्रापम्, मत्वा = ज्ञात्वा, 'इदानीम्', मया = दिलीपेन, आवर्जितम् = दत्तम्, पयः = जलम्, पूर्वैः = पूर्वजैः, स्वस्य = आत्मनः, निःश्वासाः = मुखमारुताः, इति स्वनिःश्वासाः तैः स्वनिश्वासैः, कवोष्णम् = ईषदुष्णम्, यथा तथा, उपभुज्यते = पीयते, नूनम् = निश्चयेन।

**समा०**—मत्तः परम् इति मत्परम्। स्वस्य निश्वासाः इति स्वनिश्वासाः, तैः स्वनिश्वासैः।

**अभि०**—मदनन्तरं पुत्राभावादिदानीं मद्दत्तं वारि पितृजनैर्निजदुःखनिश्वासैरीषदुष्णीकृतं पीयतेऽत्र न सन्देहः।

**हिन्दी**—मेरे पश्चात् पुत्र के न होने से आज-कल मेरे दिये जल को मेरे पितृजन अपने दुःख के श्वासों से कुछ गर्म करके पीते हैं। इसमें कोई सन्देह नहीं है॥ ६७॥

P सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः॥ ६८॥

**सञ्जीविनी**—इज्या यागः। 'व्रजयजोर्भावे क्यप्' इति क्यप्प्रत्ययः। तया विशुद्धात्मा विशुद्धचेतनः। प्रजालोपेन संतत्यभावेन निमीलितः कृतनिमीलनः सोऽहम्। लोक्यत इति लोकः। नलोक्यत इत्यलोकः लोकश्चालोकश्चात्रस्त इति, लोकश्चासावलोकश्चेति वा 'लोकालोकश्चक्रवालः' इत्यमरः। प्रकाशत इति प्रकाशश्च देवर्णविमोचनात्। न प्रकाशत इत्यप्रकाशश्च पितॄणामृणाविमोचनात्। पचाद्यच्। अस्मीति शेषः। लोकालोकोऽप्यन्तः सूर्यसंपर्काद्बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम्॥६८॥

**अन्वयः**—**इज्याविशुद्धात्मा, प्रजालोपनिमीलितः, अहम्, लोकालोकः, अचलः, इव, प्रकाशः, अप्रकाशः, च, अस्मि।**

**वाच्य०**—इज्याविशुद्धात्मना, प्रजालोपनिमीलितेन, 'मया' लोकालोकेन, अचलेन, प्रकाशेन, अप्रकाशेन, च, भूयते।

**व्याख्या**—इज्या = यज्ञकरणम्, इज्यया विशुद्धः = पूतः, आत्मा = स्वम्, यस्य सः, इज्याविशुद्धात्मा, प्रकर्षेण जायते = भवति, इति प्रजा = संततिः, प्रजायाः लोपः = अभावः इति प्रजालोपः, प्रजालोपेन निमीलितः = कृतनिमीलनः, इति प्रजालोपनिमीलितः, अहम् = दिलीपः, लोक्यते = दृश्यते, इति लोकः, न लोक्यते

=दृश्यत इति, अलोकः, लोकश्चासावलोकश्च इति लोकालोकः, अचलः=पर्वतः, इव=यथा, प्रकाशते=द्योतते इति प्रकाशः देवर्णविमोचनात्, न प्रकाशते इत्यप्रकाशः पितृऋणविमोचनाभावात्, च=तथा, अस्मि=भवामि ।

**समा०**—इज्यया विशुद्धः आत्मा यस्य सः इज्याविशुद्धात्मा। प्रजायाः लोपः प्रजालोपः तेन निमीलितः इति प्रजालोपनिमीलितः। लोक्यते, इति लोकः, न लोक्यते इति अलोकः, लोकश्चासावलोकश्च इति लोकालोकः। प्रकाशते इति प्रकाशः। न प्रकाशते इति अप्रकाशः।

**अभि०**—यज्ञादिना देवर्णविमोचनात्प्रसन्नचेतास्तथा पुत्राभावेन पितृऋणाविमोचनान्मलिनचेताश्चाहं लोकालोकपर्वत इव भवामि।

**हिन्दी**—यज्ञ आदि से मैं देवऋण से मुक्त होने के कारण प्रसन्नचित्त, तथा पुत्र के अभाव से पितृऋण से मुक्त न होने के कारण मलिनचित्त हूँ, अतः मेरी स्थिति लोकालोक पर्वत के समान है, जिसके एक ओर प्रकाश तथा दूसरी ओर अँधेरा रहता है ॥६८॥

ननु तपोदानादिसंपन्नस्य किमपत्यैरित्याह—

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥६९॥

**सञ्जीविनी**—समुद्भवत्यस्मादिति समुद्भवः कारणम्। तपोदाने समुद्भवो यस्य तत्तपोदानसमुद्भवं यत्पुण्यं तल्लोकान्तरे परलोके सुखं सुखकरम्। शुद्धवंशे भवा शुद्धवंश्या संततिर्हि परत्र परलोके, इह च लोके शर्मणे सुखाय। 'शर्मशातसुखानि च' इत्यमरः। भवतीति शेषः ॥६९॥

**अन्वयः**—**तपोदानसमुद्भवम्, पुण्यम्, लोकान्तरसुखम्, 'भवति'। हि शुद्धवंश्या, सन्ततिः, इह, परत्र, च, शर्मणे, भवति।**

**वाच्य०**—तपोदानसमुद्भवेन, पुण्येन, लोकान्तरसुखेन, 'भूयते', शुद्धवंश्यया, सन्तत्या, शर्मणे, भूयते।

**व्याख्या**—तपः=तपश्चर्या कृच्छ्रचान्द्रायणव्रतादीत्यर्थः,तच्च, दानम्=त्यागः च तपोदाने, समुद्भवति=उत्पद्यतेऽस्मादिति समुद्भवः, तपोदाने समुद्भवो यस्य तत् तपोदानसमुद्भवम्, पुण्यम्=सुकृतम्, अन्यः=अपरः, लोकः=भुवनम्, इति लोकान्तरम्, लोकान्तरे, सुखम्=सुखकरम् इति लोकान्तरसुखम्, 'भवति', हि=

यतः, शुद्धः=पवित्रः च असौ वंशः=कुलम् इति शुद्धवंशः, शुद्धवंशे भवा शुद्धवंश्या सुवंशोत्पन्नेत्यर्थः, सन्ततिः=प्रजा, परत्र=परलोके, इह=अस्मिँल्लोके च शर्मणे=कल्याणाय, भवति।

**समा०**—तपश्च तत् दानञ्च इति तपोदाने, तपोदाने समुद्भवो यस्य तत् तपोदानसमुद्भवम्। अन्यः लोकः इति लोकान्तरम्, लोकान्तरे सुखम् इति लोकान्तरसुखम्। शुद्धश्चासौ वंशः इति शुद्धवंशः तस्मिन् भवा इति शुद्धवंश्या।

**अभि०**—यत्पुण्यं तपसा दानेन च सम्पद्यते तत्केवलं परलोकसुखावहमेव भवति किन्तु शुद्धवंशोत्पन्नः पुत्रस्तु परलोकेऽस्मिल्लोके च सुखावहो भवति।

**हिन्दी**—जो पुण्य तप अथवा दान से उत्पन्न होता है वह केवल परलोक में ही सुख देता है, किन्तु शुद्ध वंश में उत्पन्न पुत्र तो इस लोक में तथा परलोक में भी सुख पहुँचाता है ॥६९॥

तया हीनं विधातर्मां कथं पश्यन्न दूयसे।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥७०॥

**सञ्जीविनी**—हे विधातः! स्रष्टः! तया संतत्या हीनमनपत्यं माम्। स्नेहात्प्रेम्णा स्वयमेव सिक्तं जलसेकेन वर्धितं वन्ध्यमफलम्। 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः। आश्रमस्य वृक्षकं वृक्षपोतमिव पश्यन्कथं न दूयसे न परितप्यसे। विधातरित्यनेन समर्थोऽप्युपेक्षस इति गम्यते ॥७०॥

**अन्वयः—हे विधातः, तया, हीनम्, माम्, स्नेहात्, स्वयम्, एव, सिक्तम्, वन्ध्यम्, आश्रमवृक्षकम्, इव, पश्यन्, कथम्, न, दूयसे।**

**वाच्य०**—पश्यता, त्वया, कथम्, न, दूयते।

**व्याख्या**—हे विधातः=स्रष्टः, तया=सन्तत्या, हीनम्=रहितम्, माम्=दिलीपम्, स्नेहात्=प्रेम्णा, स्वयम्=आत्मना, एव=निश्चयेन, सिक्तम्=जलसेकेन वर्धितम्, वन्ध्यम्=निष्फलम्, ह्रस्वः, वृक्षः, वृक्षकः=तरुपोतः, आश्रमस्य=मुन्यावासस्य वृक्षकः इति आश्रमवृक्षकः तम् आश्रमवृक्षकम्, इव=यथा, पश्यन्=अवलोकयन्, कथम्=केन प्रकारेण, न=नहि, दूयसे=परितप्यसे।

**समा०**—ह्रस्वः वृक्षः वृक्षकः, आश्रमस्य वृक्षकः इति आश्रमवृक्षकः तम् आश्रमवृक्षकम्।

**अभि०**—हे विधातः, यथा जलसेकेन संवर्धितो वृक्षः फलरहितश्चेत्स्यात्तर्हि शोचनीयो भवति तथैव स्वकृपासंवर्धितमपि मां पुत्रहीनं दृष्ट्वा भवान् कथं न दुःखी भवति ?

**हिन्दी**—हे गुरो—जिस प्रकार जल से सींचकर बढ़ाये हुए वृक्ष को फलशून्य देखकर दुःखी होना उचित है उसी प्रकार स्वयं स्नेह पूर्वक बढ़ाये हुए मुझको भी पुत्र रहित देखकर आप दुःखी क्यों नहीं होते ? ॥७०॥

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥७१॥

**सञ्जीविनी**—हे भगवन् ! ममान्त्यमृणं पैतृकमृणम् । अनिर्वाणस्य मज्जनरहितस्य । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः । दन्तिनो गजस्य । अरुर्मर्म तुदतीत्यरुंतुदं मर्मस्पृक् । 'व्रणोऽस्त्रियामीर्ममरुः' इति, 'अरुंतुदं तु मर्मस्पृक्' इति, चामरः । 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः । 'अरुर्द्विषत्—' इत्यादिना मुमागमः । आलानं बन्धनस्तम्भमिव । 'आलानं बन्धनस्तम्भे' इत्यमरः । असह्या सोढुमशक्या पीडा दुःखं यस्मिंस्तदवेहि । दुःसहदुःखजनकं विद्धीत्यर्थः । 'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि' इति पालकाप्ये । 'ऋणं देवस्य यागेन ऋषीणां दानकर्मणा । संतत्या पितृलोकानां शोधयित्वा परिव्रजेत्' ॥७१॥

**अन्वयः**—हे भगवन्, मे, अन्त्यम्, ऋणम्, अनिर्वाणस्य, दन्तिनः, अरुन्तुदम्, आलानम्, इव, असह्यपीडम्, अवेहि ।

**वाच्य०**—त्वया, अवेयताम् ।

**व्याख्या**—हे भगवन् = षडैश्वर्यशालिन्, मे = मम दिलीपस्य, अन्ते = अवसाने भवम् अन्त्यम्, ऋणम् = पैतृकमृणम्, न विद्यते निर्वाणम् = गजमज्जनं यस्य सः, अनिर्वाणः, तस्य अनिर्वाणस्य, दन्तिनः = गजस्य, अरुः = मर्मस्थानम्, तुदति = पीडयति इति अरुन्तुदम्, तत् आलानम् = गजबन्धनस्तम्भम्, इव = यथा, सोढुम् = सहनं कर्तुं योग्या सह्या न सह्या असह्या असह्या, पीडा व्यथा यस्मिंस्तत् असह्यपीडम् तत्तथोक्तम् अवेहि = विद्धि ।

**समा०**—अन्ते भवम् अन्त्यम् । न विद्यते निर्वाणं यस्य सः अनिर्वाणः, तस्य अनिर्वाणस्य । अरुः तुदति इति अरुन्तुदम् । सोढुं योग्या सह्या न सह्या असह्या असह्या, पीड़ा यस्मिन् तत् असह्यपीडम् ।

**अभि०**—हे भगवन्, ममेदानीं पैतृकमृणं तथा सोढुमशक्यं वर्तते यथा स्नान-क्रियाशून्यस्य गजस्य मर्मव्यथाजनको बन्धनस्तम्भः ।

**हिन्दी**—हे भगवन्, इस समय मुझे पैतृक ऋण इस प्रकार कष्ट पहुँचा रहा है जिस प्रकार कि स्नान-क्रिया न होने से हाथी को उसके बन्धन का खूँटा ।।७१।।

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ।।७२।।

**सञ्जीविनी**—हे तात ! तस्मात्पैतृकादृणाद्यथा मुच्ये मुक्तो भवामि । कर्मणि लट् । तथा संविधातुं कर्तुमर्हसि । हि यस्मात्कारणादिक्ष्वाकूणामिक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् । दुरापे दुष्प्राप्येऽर्थे । सिद्धयस्त्वदधीनास्त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी । 'न लोक-' इत्यादिना कृद्योगे षष्ठीनिषेधात् ।।७२।।

**अन्वयः**—**हे तात, तस्मात्, यथा, मुच्ये, तथा, संविधातुम्, 'त्वम्' अर्हसि, हि, इक्ष्वाकणाम्, दुरापे, अर्थे, सिद्धयः, त्वदधीनाः ।**

**वाच्य०**—मया मुच्यते, त्वया अर्ह्यते, सिद्धिभिः त्वदधीनाभिः भूयते ।

**व्याख्या**—हे तात=पितः, तस्मात्=पैतृकादृणात्, यथा=येन प्रकारेण, मुच्ये=मुक्तो भवामि, तथा=तेन प्रकारेण, संविधातुम्=कर्तुम्, अर्हसि=योग्यो भवसि. हि=यतः, इक्ष्वाकूणाम्=इक्ष्वाकुकुलोत्पन्नानां नृपाणाम्,दुरापे=दुष्प्रापे, अर्थे=प्रयोजने, सिद्धयः=कार्यसाफल्यानि, तव=वसिष्ठस्य,अधीनाः=आयत्ताः, इति त्वदधीनाः ।

**समा०**—दुःखेन आप्यते यः सः दुरापः तस्मिन् दुरापे । तव अधीनाः इति त्वदधीनाः।

**अभि०**—हे गुरो ! तस्माद्यथाहं पैतृकादृणान्मुक्तो भवामि तथोपायं कुरु, यतः इक्ष्वाकुवंशीयानां राज्ञां दुष्कराणामपि कार्याणां सिद्धयस्त्वदायत्ताः सन्ति ।

**हिन्दी**—हे गुरो, इसलिये जिससे कि मैं पितृऋण से उन्मुक्त हो सकूं ऐसा उपाय कीजिये, क्योंकि इक्ष्वाकुवंशी राजाओं के कठिन कार्यों की सिद्धि आपके ही आधीन है ।।७२।।

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तथौ सुप्तमीन इव ह्रदः ।। ७३ ।।

**सञ्जीविनी**—इति राज्ञा विज्ञापित ऋषिर्ध्यानेन स्तिमिते लोचने यस्य ध्यानस्तिमितलोचनो निश्चलाक्षः सन्क्षणमात्रं सुप्तमीनो ह्रद इव तस्थौ ॥७३॥

**अन्वयः—इति, राज्ञा, विज्ञापितः, ऋषिः, ध्यानस्तिमितलोचनः, 'सन्' क्षणमात्रम्, सुप्तमीनः, ह्रदः, इव, तस्थौ ।**

**वाच्य०**—विज्ञापितेन, ऋषिणा, ध्यानस्तिमितलोचनेव, सता, सुप्तमीनेन, ह्रदेन, इव तस्थे ।

**व्याख्या**—इति = एवम्, राज्ञा = नृपेण, दिलीपेन, विज्ञापितः = निवेदितः, ऋषिः = मुनिर्वसिष्ठः, ध्यानेन = चिन्तनेन, स्तिमिते = निश्चले, लोचने = नेत्रे यस्य सः, ध्यानस्तिमितलोचनः, सन् क्षणमेव क्षणमात्रं = क्षणरूपकालविशेषपर्यन्तम्, सुप्ताः = निद्रिताः, मीनाः = मत्स्याः यस्य सः सुप्तमीनः, ह्रदः = सरः, इव = यथा, तस्थौ = स्थितवान् ।

**समा०**—ध्यानेन स्तिमिते लोचने यस्य सः, ध्यानस्तिमितलोचनः । सुप्ताः मीनाः यस्य स सुप्तमीनः ।

**अभि०**—दिलीपप्रार्थनानन्तरं तत्कारणं ज्ञातुं वसिष्ठो नेत्रनिमीलनेन समाधौ तथा क्षणमात्रं निश्चलो बभूव यथा सुप्तमीनतया निस्तरङ्गः सरोवरः ।

**हिन्दी**—दिलीप की प्रार्थना के अनन्तर पुत्राभाव का कारण जानने के लिये महर्षि वसिष्ठ, मछलियों के सो जाने से तरङ्गरहित तालाब के समान क्षणमात्र निश्चल होकर समाधिस्थ हो गये ॥७३॥

सोऽपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

**सञ्जीविनी**—स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य संततेः स्तम्भकारणं संतानप्रतिबन्धकारणमपश्यत् । अथानन्तरमेनं नृपं प्रत्यबोधयत् । स्वदृष्टं ज्ञापितवानित्यर्थः । एनमिति 'गतिबुद्धि–' इत्यादिनाणि कर्तुः कर्मत्वम् ॥७४॥

**अन्वयः—प्रणिधानेन, भावितात्मा, सः, भुवः, भर्तुः, सन्ततेः, स्तम्भकारणम्, अपश्यत्, अथ, एनम्, प्रत्यबोधयत् ।**

**वाच्य०**—भावितात्मना अदृश्यत, एषः प्रत्यबोध्यत ।

**व्याख्या**—प्रणिधानन=समाधिना, भावितः=शुद्धः, आत्मा=अन्तःकरणम्, यस्य सः, भावितात्मा, सः=महर्षिर्वसिष्ठः, भुवः=भूमेः, भर्तुः=स्वामिनः, दिलीपस्य सन्ततेः=सन्तानस्य, स्तम्भस्य=प्रतिबन्धस्य, कारणम्=हेतुः, इति स्तम्भकारणं तत्, अपश्यत्=अवालोकयत्, अथ=अनन्तरम्, एनम्=अमुम्, दिलीपम्, प्रत्यबोधयत्=ज्ञापितवान् ।

**समा०**—भावितः आत्मा यस्य सः भावितात्मा । स्तम्भस्य कारणम् इति स्तम्भकारणम् तत् ।

**अभि०**—वसिष्ठः समाधिना दिलीपस्य सन्तानाभावरूपं कारणं ज्ञात्वा दिलीपायावोचत् ।

**हिन्दी**—महर्षि वसिष्ठ समाधि के द्वारा दिलीप के सन्तान न होने के कारण को जान गये और दिलीप को भी बतला दिया ।

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥

**सञ्जीविनी**—पुरा पूर्वं शक्रमिन्द्रमुपस्थाय संसेव्योर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत् । तत्र स्थितेत्यर्थः ॥७५॥

**अन्वयः**—पुरा, शक्रम्, उपस्थाय, उर्वीम्, प्रति, यास्यतः, तव, पथि, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, आसीत् ।

**वाच्य०**—आश्रितया, सुरभ्या, अभूयत ।

**व्याख्या**—पुरा=पूर्वम्, शक्रम्=इन्द्रम्, उपस्थाय=संसेव्य, उर्वीम्=पृथ्वीम्, प्रति=उद्दिश्य, यास्यति=गमिष्यति, इति यास्यन्, तस्य यास्यतः तव=दिलीपस्य, पथि=मार्गे, कल्पतरोः=कल्पवृक्षस्य, छाया=अनातपः, इति कल्पतरुच्छाया ताम् कल्पतरुच्छायाम्, आश्रिता=उपविष्टा, सुरभिः=कामधेनुः, आसीत्=अभूत् ।

**समा०**—यास्यति इति यास्यन् तस्य यास्यतः । कल्पतरोः छाया इति कल्पतरुच्छाया ताम् कल्पतरुच्छायाम् ।

**अभि०**—पुरा कदाचित्त्वं शक्रभवनान्मृत्युलोकमागच्छन्नासीः, मार्गे च कल्पवृक्षस्याधः कामधेनुः स्थितासीत् ।

**हिन्दी**— हे राजन्, पहले एक समय तुम्हारे इन्द्र-भवन से भूलोक आते समय मार्ग में कल्पवृक्ष की छाया में कामधेनु बैठी हुई थी ॥७५॥

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥

**सञ्जीविनी**—ऋतुः पुष्पम् । रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्यर्त्वभिगमनलक्षणस्य लोपाद् भ्रंशाद्यद् भयं तस्मात्स्मरन्ध्यायन् । 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ॥' इतिशास्त्रात्प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं नाचरो नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः—'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति । अकरणे दोषमाह पराशरः—'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपसर्पति । बालगोघ्नापराधेन विध्यते नात्र संशयः ॥' इति ॥७६॥

**अन्वयः**—ऋतुस्नाताम्, इमाम्, राज्ञीम्, धर्मलोपभयात्, स्मरन्, प्रदक्षिणक्रियार्हायाम्, तस्याम्, त्वम्, साधु, न, आचरः ।

**वाच्य०**—स्मरता, त्वया, न, आचर्यत ।

**व्याख्या**—ऋतुना = रजसा, निमित्तेन स्नाता = कृतस्नाना, इति ऋतुस्नाता, ताम् ऋतुस्नाताम्, इमाम् = पुरोवर्तिनीम्, राज्ञीम् = महिषीं सुदक्षिणाम्, धर्मस्य = सुकृतस्य, लोपः = भ्रंशः, इति धर्मलोपः, धर्मलोपात् भयम् = भीतिः, इति धर्मलोपभयम् तस्मात् धर्मलोपभयात्, स्मरन् = अनुध्यायन्, प्रदक्षिणस्य = परिक्रमायाः, क्रिया = कर्म, इति प्रदक्षिणक्रिया, अर्हति = योग्या भवति, इति अर्हा प्रदक्षिणक्रियायाम् अर्हा इति प्रदक्षिणक्रियार्हा, तस्याम् प्रदक्षिणक्रियार्हायाम्, तस्याम् कामधेन्वाम्, त्वम् = दिलीपः, साधु = प्रदक्षिणादिसत्कारम्, न = नहि, आचरः = कृतवान् ।

**समा०**—ऋतुना स्नाता इति ऋतुस्नाता ताम् ऋतुस्नाताम् । धर्मस्य लोपः इति धर्मलोपः तस्मात् भयम् इति धर्मलोपभयम् तस्मात् धर्मलोपभयात् । प्रदक्षिणस्य क्रिया प्रदक्षिणक्रिया, अर्हति इति अर्हा, प्रदक्षिणक्रियायाम् अर्हा इति प्रदक्षिणक्रियार्हा तस्यां प्रदक्षिणक्रियार्हायाम् ।

अभि०-ऋतुगमनाभावाद्धर्मनाशो मा भूदिति राज्ञीमेव चिन्तयन् पथि स्थितामपि कामधेनुं त्वं प्रदक्षिणादिकर्मणा साधु न सत्कृतवान् ।

हिन्दी—ऋतुकाल में अभिगमन न होने से कहीं धर्मलोप न हो जाय इस भय से केवल रानी का ही चिन्तन करने के कारण तुमने मार्ग में बैठी हुई कामधेनु का प्रदक्षिणादि से सत्कार नहीं किया ॥७६॥

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥७७॥

सञ्जीविनी—यस्मात्कारणान्मामवजानासि तिरस्करोषि अतः कारणान्मत्प्रसूतिं मम संततिमनाराध्यासेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप 'शप आक्रोशे' ॥७७॥

अन्वयः—यस्मात्, 'त्वम्' माम्, अवजानासि, अतः, मत्प्रसूतिम्, अनाराध्य, ते, प्रजा, न, भविष्यति, इति, सा, त्वाम् शशाप ।

वाच्य०—यस्मात्, त्वया, अहम्, अवज्ञाये, प्रजया, न, भविष्यते, इति, तया, त्वम्, शेपिषे ।

व्याख्या—यस्मात्=यतः, कारणात्, 'त्वम्' माम्=कामधेनुम्, अवजानासि=तिरस्करोषि, अतः=अस्मात्कारणात्, मम=कामधेन्वाः, प्रसूतिः=सन्ततिः, मत्सन्ततिः, ताम्, मत्प्रसूतिम्, अनाराध्य=असेवयित्वा, ते=तव, दिलीपस्य, प्रजा=संततिः, न=नहि, भविष्यति=संपत्स्यते, इति=इत्थम् सा=कामधेनुः, त्वाम्=दिलीपम्, शशाप=शापं ददौ ।

समा०—मम प्रसूतिः इति मत्प्रसूतिः ताम् मत्प्रसूतिम् । न आराध्य अनाराध्य ।

अभि०—यतस्त्वं मां तिरस्करोष्यतस्तव सन्ततिर्मत्सन्ततेराराधनं विना न भविष्यति, इति सा तुभ्यं शापं ददौ ।

हिन्दी—क्योंकि तुम परिक्रमा आदि न करने से मेरा तिरस्कार कर रहे हो अतः मेरी सन्तान की आराधना किये बिना तुम्हें सन्तान न होगी, ऐसा उसने तुम्हें शाप दे दिया ॥७७॥

कथं तदस्माभिर्न श्रुतमित्याह—

स शापो न त्वया राजन्न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥७८॥

**सञ्जीविनी**—हे राजन् ! स शापस्त्वया न श्रुतः। सारथिना च न श्रुतः। अश्रवणे हेतुमाह—क्रीडार्थमागता उद्दामानो दाम्न उद्गता दिग्गजा यस्मिंस्तथोक्ते आकाशगङ्गाया मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥७८॥

**अन्वयः**—हे राजन्, सः, शापः, त्वया, न, श्रुतः, सारथिना, च, न, 'श्रुतः', उद्दामदिग्गजे, आकाशगङ्गायाः, स्रोतसि, नदति, 'सति'।

**वाच्य०**—हे राजन्, शापम्, त्वम्, न श्रुतवान्, सारथिः, च, न, 'श्रुतवान्'।

**व्याख्या**—हे राजन्, सः=असौ पूर्वोक्तः, शापः=आक्रोशः, त्वया=दिलीपेन, न=नहि, श्रुतः=आकर्णितः, सारथिना=सूतेन, च=तथा, न, 'श्रुतः' दाम्नः=शृङ्खलायाः उद्गताः उद्दामानः, दिशाम्=काष्ठानाम्, गजाः=हस्तिनः दिग्गजाः, उद्दामानः, दिग्गजाः यस्मिन् तत् उद्दामदिग्गजम् तस्मिन् उद्दामदिग्गजे, आकाशस्य=दिवः गङ्गा=सुरनदी आकाशगङ्गा तस्याः आकाशगङ्गायाः स्रोतसि=प्रवाहे, नदति=शब्दायमाने 'सति'।

**समा०**—दाम्नः उद्गताः उद्दामानः दिशां गजाः दिग्गजाः उद्दामानः दिग्गजाः यस्मिन् तत्, उद्दाम दिग्गजम् तस्मिन् उद्दामदिग्गजे। आकाशस्य गंगा आकाशगंगा, तस्याः आकाशगंगायाः।

अभि०—हे राजन् कामधेन्वा प्रदत्तः स शापस्त्वया तव सारथिना वा न श्रुतः, यतः सुरनद्या उत्कटे प्रवाहे मज्जतां दिङ्नागानां महान्कलकल आसीत्।

**हिन्दी**—हे राजन् कामधेनु का दिया हुआ वह शाप न तो तुमने सुना न तुम्हारे सारथि ने ही सुना, क्योंकि आकाशगङ्गा के प्रवाह में स्नान करते बन्धनमुक्त दिग्गजों का महान् कलकल शब्द हो रहा था ॥७८॥

अस्तु, प्रस्तुते किमायातमित्यत्राह—

**ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः।**
**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥७९॥**

**सञ्जीविनी**—तदवज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्याप्तुमिष्टमीप्सितं मनोरथम्। आप्नोतेः सन्नन्तात्क्तः। ईकारश्च। सार्गलं सप्रतिबन्धं विद्धि जानीहि। तथाहि पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति॥७९॥

**अन्वयः**—तदवज्ञानात्, आत्मनः ईप्सितम्, सार्गलम्, विद्धि, हि, पूज्यपूजाव्यतिक्रमः, श्रेयः, प्रतिबध्नाति।

**वाच्य०**—'त्वया' विद्यताम्. पूज्यपूजाव्यतिक्रमेण श्रेयः प्रतिबध्यते ।

**व्याख्या**—तस्याः = कामधेनोः, अवज्ञानम् = तिरस्कारः तदवज्ञानम् तस्मात् तदवज्ञानात्, आत्मनः = स्वस्य, ईप्सितम् = मनोरथम् अर्गलया शृङ्खलया सह वर्तमानम्, सार्गलम् प्रतिबन्धयुक्तमित्यर्थः, विद्धि = जानीहि, हि = यतः, पूजितुम् = अर्चितुं योग्याः पूज्याः, पूज्यानाम् पूजा = अर्चा, पूज्यपूजा, पूज्यपूजायाः व्यतिक्रमः = उल्लंघनम् इति पूज्यपूजाव्यतिक्रमः, श्रेयः = कल्याणम्, प्रतिबध्नाति = रुणद्धि ।

**समा०**—तस्याः अवज्ञानम् तदवज्ञानम् तस्मात् तदवज्ञानात् । अर्गलया सह वर्तमानम् इति सार्गलम् । पूजितुं योग्याः पूज्याः पूज्यानां पूजा इति पूज्यपूजा पूज्यपूजायाः व्यतिक्रमः पूज्यपूजाव्यतिक्रमः ।

**अभि०**—अतः कामधेनोरनादरात्तव सन्तानप्रतिबन्धो जातः, पूजार्हाणां पूजाभावः कल्याणस्य प्रतिबन्धको भवति ।

**हिन्दी**—इसलिये कामधेनु का अनादर करने से तुम्हारे सन्तान होने में बाधा पड़ गई है; क्योंकि पूज्य की पूजा के उल्लंघन से कल्याण में बाधा हो जाती है ॥७९॥

तर्हि गत्वा तामाराधयामि । स्वयं वा कथंचिदागमिष्यतीत्याशा न कर्तव्येत्याह—

> हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
> भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥

**सञ्जीविनी**—सा च सुरभिरिदानीं दीर्घं सत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजंगपिहितद्वारं भुजंगावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति । पाताले तिष्ठतीत्यर्थः । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥८०॥

**अन्वयः**—सा, च, इदानीम्, दीर्घसत्रस्य, प्रचेतसः, हविषे, भुजङ्गपिहितद्वारम्, पातालम्, अधितिष्ठति ।

**वाच्य०**—तया, अधिष्ठीयते ।

**व्याख्या**—सा = कामधेनुः, च = तथा, इदानीम् = अधुना, दीर्घम् = चिरकालसाध्यम्, सत्रम् = यागविशेषः, यस्य सः दीर्घसत्रः, तस्य दीर्घसत्रस्य, प्रचेतसः = वरुणस्य, हविषे = दध्यादिहविरर्थम्, भुजाभ्याम् = बाहुभ्याम्, गच्छन्ति

=यान्ति, इति भुजङ्गाः, सर्पाः, भुजङ्गैः, पिहितम्=अवरुद्धम्, द्वारम्=प्रवेश-मार्गः, यस्य तत् भुजङ्गपिहितद्वारम्, तत् पातालम्=रसातलम्, अधितिष्ठति =अध्यास्ते ।

**समा०**—दीर्घम् सत्रम् यस्य सः दीर्घसत्रः तस्य दीर्घसत्रस्य । भुजाभ्याम् गच्छन्ति इति भुजङ्गाः, भुजङ्गैः पिहितम् द्वारम् यस्य तत् भुजङ्गपिहितद्वारम् तत् भुजङ्गपिहितद्वारम् ।

**अभि०**—सा च कामधेनुरिदानीं चिरकालसाध्यं यागं कुर्वतो वरुणस्य भवने दध्याज्यादिहविःसंपादनाय पातालं गता आस्ते, यस्य मार्गः सर्पैरवरुद्धोऽस्ति ।

**हिन्दी** - और वह कामधेनु इस समय चिरकाल साध्य वरुण के यज्ञ में दही, आदि हविष्य के लिये सर्पो से अवरुद्धमार्ग वाले पाताल में गई हुई है ॥८०॥

तर्हि का गतिरित्यत आह—

**सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।**
**आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥**

**सञ्जीविनी**—तस्याः सुरभेरियं तदीया तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः । सह पत्न्या वर्तत इति सपत्नीकः सन् । 'नद्यृतश्च' इति कप्प्र-त्ययः । आराधय । हि यस्मात्कारणात्सा प्रीता तुष्टा सती । कामान्दोग्धीति कामदुघा भवति । 'दुहः कब्घश्च' इति कप्प्रत्ययः, घादेशश्च ॥८१॥

**अन्वयः—तदीयाम्, सुताम्, सुरभेः, प्रतिनिधिम्, कृत्वा, शुचिः, सपत्नीकः, 'सन्', आराधय, हि, सा, प्रीता, 'सती', कामदुघा, 'भवति' ।**

**वाच्य०**—तदीया सुता सुरभेः प्रतिनिधिः शुचिना सपत्नीकेन 'त्वया' आरा-ध्यताम्, तया प्रीतया कामदुघया 'भूयते' ।

**व्याख्या**—तस्याः=कमधेनोः इयम् तदीया ताम् तदीयाम्, सुताम्= दुहितरम्, सुरभेः=कामधेनोः, प्रतिनिधिम्=प्रतिच्छायाम्, कृत्वा=विधाय, शुचिः=शुद्धः, पत्न्या=भार्यया, सुदक्षिणया सह वर्तमानः सपत्नीकः, 'सन्' आराधय=सेवस्व, हि=यतः, सा=नन्दिनी, प्रीता=प्रसन्ना 'सती', कामान् मनोरथान्दोग्धि=प्रपूरयति, इति कामदुघा, 'भवति' ।

**समा०**—तस्याः इयम् तदीया ताम् तदीयाम्, पत्न्या सह वर्तमानः सप-त्नीकः, कामान्दोग्धि इति कामदुघा ।

**अभि०**—इदानीं त्वं कामधेनुसुतां नन्दिनीं तत्प्रतिनिधिं कृत्वा शुद्धो भूत्वा सभार्यः सन् संसेवस्व, यतः सा प्रसन्ना भूत्वा मनोरथदात्री भवति।

**हिन्दी**—इस समय तुम कामधेनु की पुत्री नन्दिनी को ही उसकी प्रतिनिधि मानकर शुद्ध होकर भार्या सहित पूजा करो, क्योंकि प्रसन्न होने पर वह मनोरथ पूर्ण कर देती है ॥८१॥

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥

**सञ्जीविनी**—इति वादिनो वदत एव होतुर्हवनशीलस्य । 'तृन्' इति तृन्प्रत्ययः । अस्य मुनेराहुतीनां साधनं कारणम् । नन्दयतीति व्युत्पत्त्या नन्दिनी नामानिन्द्यागर्ह्या प्रशस्ता धेनुर्वनादाववृते प्रत्यागता । 'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्' इति भावः ॥८२॥

**अन्वयः**—इति, वादिनः, एव होतुः, अस्य, आहुतिसाधनम्, नन्दिनी, नाम, अनिन्द्या, धेनुः, वनात्, आववृते ।

**वाच्य०**—आहुतिसाधनेन, नन्दिन्या, अनिन्द्यया, धेन्वा, वनात्, आववृते ।

**व्याख्या**—इति = इत्थम्, वादिनः = कथयतः, एव, होतुः = हवनशीलस्य, अस्य = मुनेः, आहुतीनाम् = हवनसामग्रीणाम्, साधनम् कारणम्, इति आहुतिसाधनम्, नन्दिनी = तन्नाम्नी कामधेनुसुता, नाम = इति प्रसिद्धौ, निन्दितुम् योग्या निन्द्या, न निन्द्या अनिन्द्या, प्रशंसनीयेत्यर्थः, धेनुः = नवप्रसूता गौः, वनात् = काननात्, आववृते = आजगाम ।

**समा०**—आहुतीनाम् साधनम् आहुतिसाधनम्, निन्दितुम् योग्या निन्द्या, न निन्द्या अनिन्द्या ।

**अभि०**—एवं कथयत एव वसिष्ठस्य यज्ञे दध्याज्यादिसाधनभूता कामधेनुसुता नन्दिनी वनात्प्रत्याजगाम ।

**हिन्दी**—वसिष्ठजी के ऐसा कहते हुए ही यज्ञ की आहुति दधि, घी आदि का साधन, कामधेनु की पुत्री नन्दिनी नाम की नई ब्याई गाय वन से लौट आई ॥

संप्रति धेनुं विशिनष्टि—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम् ॥८३॥

**सञ्जीविनी**—पल्लववत्स्निग्धा चासौ पाटला च। संध्यायामप्येतद्विशेषणं योज्यम्। ललाट उदयो यस्य स ललाटोदयः। तमाभुग्नमीषद्वक्रम्। 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः। 'ओदितश्च' इति निष्ठातस्य नत्वम्। श्वेतरोमाण्येवाङ्कस्तं बिभ्रती। नवं शशिनं बिभ्रती संध्येव स्थिता।

**अन्वयः—पल्लवस्निग्धपाटला, ललाटोदयम्, आभुग्नम्, श्वेतरोमाङ्कम् बिभ्रती, नवम्, शशिनम्, "बिभ्रती" सन्ध्या, इव "स्थिता" "वनात् आववृते"।**

**वाच्य०**—पल्लवस्निग्धपाटलया, बिभ्रत्या, सन्ध्यया, इव, "स्थितया," वनात्, "आववृते"।

**व्याख्या**—स्निग्धा = मसृणा च असौ पाटला = श्वेतरक्ता च ति स्निग्ध-पाटला, ललाटे = मस्तके, उदयः = उन्नतिः यस्य सः ललाटोदयः तम्, आ = ईषद्, भुग्नः = वक्र इति आभुग्नः तम्, श्वेतानि = धवलानि च तानि, रोमाणि = लोमानि, इति श्वेतरोमाणि, तान्येव अङ्कः, तम्, श्वेतरोमाङ्कम् बिभ्रती = धारयन्ती, नवम् = नूतनम्, शशिनम् = चन्द्रमसम् "बिभ्रती," सन्ध्या = सायंकालः, इव = यथा, "स्थिता वनात् आववृत्ते"।

**समा०**—स्निग्धा चासौ पाटला च स्निग्धपाटला, पल्लववत् स्निग्धपाटला इति पल्लवस्निग्धपाटला। ललाटे उदयः यस्य स ललाटोदयः तम् ललाटोदयम्। आ ईषद् भुग्नः आभुग्नः तम् आभुग्नम्, श्वेतानि च तानि रोमाणि श्वेतरोमाणि, श्वेतरोमाणि एव अङ्कः श्वेतरोमाङ्कः, तम् श्वेतरोमाङ्कम्।

**अभि०**—यथा नवपल्लवसदृशं चिक्कणं श्वेतरक्तं वक्रं च द्वितीयाचन्द्रं धारयन्ती सन्ध्या शोभते तथैव तादृशं ललाटस्थं श्वेतरोमाङ्कं धारयन्ती नन्दिनी वनात् प्रत्यायाता शुशुभे।

**हिन्दी**—जिस प्रकार कोमल किसलय के समान चिकने, सफेद लाल तथा कुछ टेढ़े द्वितीया के चन्द्रमा को धारण करने वाली संन्ध्या सुशोभित होतीं है, उसी प्रकार, ललाट में स्थित वैसे ही रोमचिह्न को धारण करने वाली वन से लौटीं नन्दिनी सुशोभित हुई ॥८३॥

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना॥ ८४ ॥

**सञ्जीविनी**—कोष्णेन किंचिदुष्णेन । 'कवं चोष्णे' इति चकारात्कादेशः । अवभृथादप्यवभृथस्नानादपि मेध्येन पवित्रेण, 'पूतं पवित्रं मेध्यं च' इत्यमरः। वत्सस्यालोकेन प्रदर्शनेन प्रवर्तिना प्रवहता प्रस्नवेन क्षीराभिस्यन्दनेन भुवमभिवर्षन्ती सिञ्चन्ती । कुण्डमिवोध आपीनं यस्याः सा कुण्डोध्नी । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'उधसोऽनङ्' इत्यनङादेशः । 'बहुव्रीहेरूधसो ङीष्' इति ङीष् ।

**अन्वयः**—**कोष्णेन, अवभृथात्, अपि, मेध्येन, वत्सालोकप्रवर्तिना, प्रस्नवेन, भुवम्, अभिवर्षन्ती, कुण्डोध्नी, वनात्, 'आववृते'** ।

**वाच्य०**—अभिवर्षन्त्या, कुण्डोध्न्या, वनात् आववृते ।

**व्याख्या**—कोष्णेन = किंचिदुष्णेन, अवभृथात् = यज्ञाङ्गभूतस्नानविशेषात्, अपि, मेध्येन = पवित्रेण, वत्सस्य = तर्णकस्य, आलोकः = दर्शनम्, वत्सालोकः, वत्सालोकेन, प्रवर्तते = प्रवहति, इति वत्सालोकप्रवर्ती, तेन वत्सालोकप्रवर्तिना, प्रस्नवेन = अभिष्यन्दनेन, भुवम् = भूमिम्, अभिवर्षन्ती = सिञ्चन्ती, कुण्डम् = उखा 'पिठरः स्थाल्युखा कुण्डम्' इत्यमरः, तत् इव ऊधः = आपीनम् यस्याः सा कुण्डोध्नी, 'वनात् आववृते' ।

**समा०**—ईषदुष्णं कोष्णम् तेन कोष्णेन, वत्सस्य आलोकः वत्सालोकः वत्सालोकेन प्रवर्तते इति वत्सालोकप्रवर्ती तेन वत्सालोकप्रवर्तिना, कुण्डम् इव ऊधः यस्याः सा कुण्डोध्नी ।

**अभि०**—किञ्चिदुष्णेनावभृथनामकस्य यज्ञान्तस्नानस्य जलादपि पवित्रेण, स्ववत्सं निरीक्ष्य स्वयमेव प्रच्यवता दुग्धेन भूमिं सिञ्चन्ती कुण्डतुल्यापीनधारिणी नन्दिनी वनादाववृते ।

**हिन्दी**—कुछ गरम तथा यज्ञान्तस्नानजल से भी पवित्र एवं बछड़े को देखकर स्वयं टपकनेवाले दूध से पृथ्वी को सींचती हुई स्थूल थन वाली नन्दिनी बन से लौटी ॥ ८४ ॥

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥

**सञ्जीविनी**—खुरोद्धूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चकारात्पञ्चमी । रजसां कणैः महीं क्षियत ईष्ट इति महीक्षित्तस्य । तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम् । शुद्धिमादधाना कुर्वाणा ।

एतेन वायव्यं स्नानमुक्तम्। उक्तं च मनुना—'आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम्। आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥' इति ॥८५॥

**अन्वयः**—खुरोद्धूतैः, अन्तिकात्, गात्रम्, स्पृशद्भिः रजःकणैः, महीक्षितः, तीर्थाभिषेकजाम्, शुद्धिम्, आदधाना, 'वनात् आववृते'।

**वाच्य०**—आदधानया, 'नन्दिन्या' वनात्, आववृते।

**व्याख्या**—खुरैः=शफैः, उद्धूताः=उत्थापिताः, इति खुरोद्धूताः तैः खुरोद्धूतैः, अन्तिकात्=समीपात्, गात्रम्=शरीरम्, स्पृशद्भिः=स्पर्शं कुर्वद्भिः, रजसाम्=धूलीनाम्, कणाः=लवाः, 'लवलेशकणाणवः' इत्यमरः। रजःकणाः, तैः रजःकणैः, महीम्=भूमिम्, क्षियते=ईष्टे, इति महीक्षित् तस्य महीक्षितः, तीर्थस्य=यज्ञस्य जलावतारस्य वा, अभिषेकः=अभिषिञ्चनम्, तीर्थाभिषेकः, तीर्थाभिषेकेण, जाता=उत्पन्ना, तीर्थाभिषेकजा ताम् तीर्थाभिषेकजाम्, शुद्धिम् पवित्रताम्, आदधाना=कुर्वाणा, 'नन्दिनी वनात् आववृते'।

**समा०**—खुरैः उद्धूताः खुरोद्धूताः तैः खुरोद्धूतैः। रजसाम् कणाः रजःकणाः तैः रजःकणैः। महीम् क्षियते इति महीक्षित् तस्य महीक्षितः। तीर्थस्य अभिषेकः तीर्थाभिषेकः तीर्थाभिषेकात् जाता तीर्थाभिषेकजा ताम् तीर्थाभिषेकजाम्।

**अभि०**—खुरोत्थापितैर्धूलिकणैः समीपे वर्तमानस्य राज्ञो दिलीपस्य गात्रस्पर्शं कुर्वद्भिः यथा तीर्थाभिषेकेण शुद्धिर्भवति तथैव शुद्धिं कुर्वाणा नन्दिनी वनात्प्रतिनिवृत्ता।

**हिन्दी**—समीप में स्थित राजा दिलीप के शरीर को स्पर्श करनेवाली खुरों से उठाई धूलि से तीर्थ जल में स्नान करने से उत्पन्न शुद्धि को करती हुई नन्दिनी वन से लौटी ॥८५॥

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥८६॥

**सञ्जीविनी**—निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वसिष्ठः पुण्यं दर्शनं यस्यास्तां धेनुं दृष्ट्वा। आशंसितं मनोरथः। नपुंसके भावे क्तः। तत्रावन्ध्यं सफलं प्रार्थनं यस्य स तम्। अवन्ध्यमनोरथमित्यर्थः। याजयितुं योग्यं याज्यं पार्थिवं पुनरब्रवीत्॥

**अन्वयः**—निमित्तज्ञः, तपोनिधिः, पुण्यदर्शनाम् ताम् दृष्ट्वा, आशंसितावन्ध्यप्रार्थनम्, याज्यम्, पुनः, अब्रवीत्।

**वाच्य०**—निमित्तज्ञेन, तपोनिधिना, आशंसितावन्ध्यप्रार्थनः, याज्यः, पुनः, अौच्यत ।

**व्याख्या**—निमित्तम्=शकुनम्, जानाति=वेत्ति इति निमित्तज्ञः, तपसाम्=तपश्चर्याणाम्, निधिः=आकरः इति तपोनिधिः पुण्यम्=पवित्रम्, दर्शनम्=साक्षात्कारः यस्याः सा पुण्यदर्शना ताम्, ताम्=नन्दिनीम्, दृष्ट्वा=अवलोक्य, न वन्ध्यम् विफलम् इत्यवन्ध्यम् अवन्ध्यं च तत्प्रार्थनम्=याच्ञा इति, अवन्ध्यप्रार्थनम्, आशंसिते=मनोरथे अवन्ध्यप्रार्थनम् यस्य सः आशंसितावन्ध्यप्रार्थनः तम् आशंसितावन्ध्यप्रार्थनम्, याजयितुम्=यज्ञं कारयितुम् योग्यः याज्यः तम् याज्यम् राजानं दिलीपमित्यर्थः, पुनः=भूयः, अब्रवीत्=उवाच ।

**समा०**—निमित्तम् जानाति इति निमित्तज्ञः। तपसाम् निधिः तपोनिधिः। पुण्यम् दर्शनम् यस्याः सा पुण्यदर्शना ताम् पुण्यदर्शनाम् । न वन्ध्यम् अवन्ध्यम्, अवन्ध्यम् च तत्प्रार्थनम्, अवन्ध्यप्रार्थनम्, आशंसिते अवन्ध्यप्रार्थनम् यस्य सः आशंसितावन्ध्यप्रार्थनः, तम् आशंसितावन्ध्यप्रार्थनम् । याजयितुम् योग्यः याज्यः,तम् याज्यम् ।

**अभि०**—शकुनमर्मविद्वसिष्ठो मुनिरागतां नन्दिनीं दृष्ट्वा सफलप्रार्थनावन्तं भूयोऽपि दिलीपमुवाच ।

**हिन्दी**—शकुनशास्त्र के विद्वान् वसिष्ठ मुनि आई हुई पवित्रदर्शना नन्दिनी को देखकर सफलमनोरथ होनेवाले राजा दिलीप से पुनः बोले ॥८६॥

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥८७॥

**सञ्जीविनी**—हे राजन् ! आत्मनः कार्यस्य सिद्धिमदूरवर्तिनीं शीघ्रभाविनीं विगणय विद्धि । यद्यस्मात्कारणात्कल्याणी मङ्गलमूर्तिः । 'बह्वादिभ्यश्च' इति ङीष् । इयं धेनुर्नाम्नि कीर्तिते कथिते सत्यवोपस्थिता ॥८७॥

**अन्वयः**—राजन्, आत्मनः, सिद्धिम्, अदूरवर्तिनीम्, विगणय, यत्, इयम्, कल्याणी, नाम्नि, कीर्तिते, एव उपस्थिता ।

**वाच्य०**—त्वया, आत्मनः, सिद्धिः, अदूरवर्तिनी, विगण्यताम्, यत्, अनया, कल्याण्या, उपस्थितया, अभूयत ।

**व्याख्या**—राजन्=नृप, आत्मनः=स्वस्य, सिद्धिम्=मनोरथनिष्पत्तिम्, न, दूरे=विप्रकृष्टदेशे, विलम्बे इत्यर्थः, वर्तते तच्छीला, अदूरवर्तिनी, ताम् अदूर-

वर्तिनीम्, विगणय = जानीहि, यत् = यस्मात्, इयम् = एषा, कल्याणी = मङ्गल-मूर्तिः, नाम्नि = अभिधाने, कीर्तिते = कथिते, एव, उपस्थिता = प्राप्ता ।

**समा०**—न दूरे वर्तते तच्छीला अदूरवर्तिनी ताम् अदूरवर्तिनीम् ।

**अभि०**—हे राजन्निदानीं ते मनोरथसिद्धिरविलम्बमेव भविष्यति यत एषा मङ्गलमयी नन्दिनी मया नाम्न्युच्चारिते सत्येव सम्मुखमागता।

**हिन्दी**—हे राजन्, अब आप अपनी मनोरथ सिद्धि शीघ्र ही पूर्ण हुई समझो, क्योंकि यह मङ्गलमूर्ति नन्दिनी नाम लेते ही सामने आ गई ॥८७॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥८८॥

**सञ्जीविनी**—वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन् । इमां गां शश्वत्सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्तुः अनुगमनेनानुसरणेन । अभ्यसनेनानुष्ठातुरभ्यासेन विद्यामिव । प्रसादयितुं प्रसन्नां कर्तुमर्हसि ॥

**अन्वयः**—**वन्यवृत्तिः, 'सन्', इमाम् गाम्, शश्वत्, आत्मानुगमनेन, अभ्यसनेन, विद्याम्, इव, प्रसादयितुम्, अर्हसि ।**

**वाच्य०**—वन्यवृत्तिना 'सता' इयम् गौः प्रसादयितुम् अर्ह्यते ।

**व्याख्या**—वने = अरण्ये, भवम्, वन्यम्, कन्दमूलादिकमित्यर्थः, वृत्तिः = भोजनम् यस्यासौ वन्यवृत्तिः, 'सन्' इमाम् = पुरोवर्तिनीम्, गाम् = धेनुम् नन्दिनीम्, शश्वत् = निरन्तरम्, आत्मनः = स्वस्य अनुगमनम् = पश्चाद्यानम्, इति आत्मानुगमनम् तेन आत्मानुगमनेन, अभ्यसनेन = अभ्यासेन, अनुष्ठातुरिति शेषः, विद्याम् = शास्त्रम्, इव = यथा, प्रसादयितुम् = प्रसन्नां कर्तुम्, अर्हसि = योग्यो भवसि ।

**समा०**—वने भवम् वन्यम्, वन्यम् वृत्तिः यस्यासौ वन्यवृत्तिः । आत्मनः अनुगमनम् आत्मानुगमनम् तेन आत्मानुगमनेन ।

**अभि०**—यथाऽभ्यासेन विद्या प्रसन्ना सती हृदयं गता भवति तथैव त्वमपि वनकन्दमूलादिभिरेव आहारं विधायास्या अनुसरणेनेमां यावन्मनोरथसिद्धिर्भवति तावत्प्रसादय ।

**हिन्दी**—जैसे कि अभ्यास के द्वारा विद्या प्रसन्न हो जाती है उसी प्रकार हे

राजन्, तुम भी निरन्तर इस गाय का अनुसरण कन्द, मूल, फल खाकर करते हुए इसे प्रसन्न करो ॥८८॥

गोरनुसरणप्रकारमाह—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥८९॥

**सञ्जीविनी**—अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु । तिष्ठेत्यर्थः । निषण्णायामुपविष्टायां निषीदोपविश । विध्यर्थे लोट् । पीताम्भसि सत्यामपः पिबेः पिब ॥८९॥

**अन्वयः**—**अस्याम्, प्रस्थितायाम्, प्रतिष्ठेथाः स्थितायाम्, स्थितिम्, आचरेः, निषण्णायाम्, निषीद, पीताम्भसि, अपः, पिबेः ।**

**वाच्य**—'त्वया' प्रतिष्ठीयेत, स्थितिः आचर्येत, निषद्यताम्, आपः पीयेरन् ।

**व्याख्या**—अस्याम् = एतस्यां नन्दिन्याम्, प्रस्थितायाम् = प्रचलितायाम्, 'सत्याम्' 'त्वम्' प्रतिष्ठेथाः = प्रस्थानं कुरु, स्थितायाम् = गमनान्निवृत्तायाम्, 'सत्याम्' स्थितिम् = गमनान्निवृत्तिम्, आचरेः = कुर्याः, तिष्ठेत्यर्थः, निषण्णायाम् = उपविष्टायाम्, 'सत्याम्' निषीद = उपविश, पीतम् = पानविषयीकृतम्, अम्भः = जलम्, यया सा पीताम्भाः, तस्याम् पीताम्भसि, 'सत्याम्', अपः = जलानि पिब = पानं कुरु ।

**समा०**—पीतम् अम्भः यया सा पीताम्भाः, तस्याम् पीताम्भसि ।

**अभि०**—यदेयं प्रचलति तदा त्वमपि प्रचल, यदा च तिष्ठति तदा तिष्ठ, एवं यदा निषीदति तदा निषीद तथा यदा जलं पिबति तदेव त्वमपि जलं पिबेति छायावदेनामनुसर ।

**हिन्दी**—हे राजन्, जब यह चले तब चलना, जब खड़ी हो तो खड़े होना, जब बैठे तो बैठना, जब जल पी चुके तब जल पीना, इस प्रकार छाया के अनुसार इसका अनुसरण करना ॥८९॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥९०॥

**सञ्जीविनी**—वधूर्जाया च भक्तिमती प्रयता सती गन्धादिभिरर्चितामेनां गां प्रातरा तपोवनात्। आङ् मर्यादायाम्। पदद्वयं चैतत्। अन्वेरवनुगच्छतु। सायमपि प्रत्युद्व्रजेत् प्रत्युद्गच्छेत्। विध्यर्थे लिङ् ॥९०॥

**अन्वयः—वधूः, भक्तिमती, प्रयता, च, 'सती' अर्चिताम्, एनाम्, प्रातः, आ, तपोवनात्, अन्वेतु, सायम्, अपि, प्रत्युद्व्रजेत्।**

**वाच्य०—वध्वा, भक्तिमत्या, प्रयतया, 'सत्या', अर्चिता, एषा, प्रातः, अन्वीयताम्, प्रत्युद्व्रज्येत।**

**व्याख्या**—वधूः=स्नुषा, भक्तिः=श्रद्धा अस्ति अस्याः इति भक्तिमती, प्रयता=पवित्रा, च=अपि अर्चिताम्=पूजिताम्, एनाम्=नन्दिनीम्, प्रातः=प्रातःकाले, आ तपोवनात्=तपोवनपर्यन्तम्, अन्वेतु=अनुगच्छतु, सायम्=सन्ध्यासमये, अपि=तथा, प्रत्युद्व्रजेत्=प्रत्युद्गच्छेत्।

**समा०**—भक्तिः अस्ति अस्याः इति भक्तिमती।

**अभि०**—स्नुषा सुदक्षिणाऽपि पवित्रा सती भक्त्यैनां संपूज्य प्रातस्तपोवनसीमापर्यन्तमनुगच्छतु, सायं चास्या आगमनसमये तपोवनसीमायां स्थिता स्वागतपूर्वकमेवामाश्रममानयतु।

**हिन्दी**—वधू सुदक्षिणा भी पवित्र होकर भक्तिपूर्वक इसकी पूजा करके प्रतिदिन प्रातःकाल तपोवन की सीमा तक इसे पहुँचाने जाये तथा सायंकाल के समय भी तपोवन की सीमापर पहुँचकर इसे स्वागत-पूर्वक आश्रम में लाये ॥९०॥

इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥९१॥

**सञ्जीविनी**—इत्यनेन प्रकारेण त्वमा प्रसादात्प्रसादपर्यन्तम्। 'आङ् मर्यादाभिविध्योः' इत्यत्र वैभाषिकत्वादसमासत्वम्। अस्या धेनोः परिचर्यापरः शुश्रूषापरो भव। ते तवाविघ्नं विघ्नस्याभावोऽस्तु। 'अव्ययं विभक्ति—' इत्यादिनार्थाभावेऽव्ययीभावः। पितेव पुत्रिणां सत्पुत्रवताम्। प्रशंसायामिनिप्रत्ययः। धुर्यग्रे स्थेयास्तिष्ठेः। आशीरर्थे लिङ्। 'एर्लिङि' इत्याकारस्यैकारादेशः। त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः ॥९१॥

**अन्वयः—इति, त्वम्, आप्रसादात्, अस्याः, परिचर्यापरः, भव, ते, अविघ्नम् अस्तु, पिता, इव, पुत्रिणाम्, धुरि, स्थेयाः।**

**वाच्य०**—त्वया, परिचर्यापरेण, भूयताम्, अविघ्नेन, भूयताम्, पिता, इव, स्थीयताम् ।

**व्याख्या**—इति = इत्थम्, त्वम् = दिलीपः, प्रसादम् = प्रसन्नताम्, अभिव्याप्य, इति, आप्रसादम्, वरप्रदानपर्यन्तमित्यर्थः, अस्याः = एतस्याः, नन्दिन्याः, परिचर्यायाम् = शुश्रूषायाम्, परः = संलग्नः, इति परिचर्यापरः भवः = भवेः, ते = तव, दिलीपस्य, विघ्नानाम् = प्रतिबन्धानाम्, अभावः, अविघ्नम्, अस्तु = भवतु, पिता = जनकः, इव = यथा, पुत्राः = सुताः एषां सन्ति इति पुत्रिणः, तेषाम् पुत्रिणाम्, धुरि = अग्रे, स्थेयाः = तिष्ठेः ।

**समा०**—प्रसादम् अभिव्याप्य आप्रसादम् । परिचर्यायाम् परः परिचर्यापरः । विघ्नानाम्, अभावः अविघ्नम्, प्रशस्ताः पुत्राः सन्ति एषामिति पुत्रिणः, तेषाम् पुत्रिणाम् ।

**अभि०**—मयोक्तेन विधिना त्वमस्याः प्रसादपर्यन्तं सेवां कुरु । ते विघ्ना नश्यन्तु । तव पितेव शोभनपुत्रवतां त्वं श्रेष्ठो भवेः ।

**हिन्दी**—मेरी बतलाई विधि के अनुसार प्रसन्न होने तक तुम इसकी सेवा करो। तुम्हारे विघ्न नष्ट हों। अपने पिता के समान तुम भी पुत्रवालों में श्रेष्ठ होओ ॥९१॥

तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥९२॥

**सञ्जीविनी**—देशकालज्ञः । देशोऽग्निसंनिधिः, कालोऽग्निहोत्रावसानसमयः । विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतमिति जानन् । अत एव प्रीतिमाञ्शिष्योऽन्तेवासी राजा सपरिग्रहः सपत्नीकः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । आनतो विनयनम्रः—सन् । शासितुर्गुरोरादेशमाज्ञां तथेति प्रतिजग्राह स्वीचकार ॥९२॥

**अन्वयः—देशकालज्ञः, प्रीतिमान्, शिष्यः, सपरिग्रहः, आनतः, 'सन्', शासितुः आदेशम्, तथा, इति, प्रतिजग्राह ।**

**वाच्य०**—देशकालज्ञेन, प्रीतिमता, शिष्येण, सपरिग्रहेण, आनतेन, 'सता', आदेशः, प्रतिजगृहे ।

**व्याख्या**—देशः = अग्निसन्निधिश्च, कालः = अग्निहोत्रावसानसमयश्च, देश-

कालौ, तौ जानाति=वेत्ति इति देशकालज्ञः, 'अतएव' प्रीतिः=हर्षः अस्य अस्ति इति प्रीतिमान्, शासितुम्=अनुशासनं कर्तुम्, योग्यः शिष्यः अन्तेवासी, इत्यर्थः, परिग्रहेण=भार्यया सह वर्तते इति सपरिग्रहः। आनतः अतिनम्रः 'सन्' शासितुः=शासनकर्तुः गुरोर्वसिष्ठस्येत्यर्थः, आदेशम्=आज्ञाम्, तथा=तेनैव प्रकारेण, 'अस्तु' इति=इत्थम्, प्रतिजग्राह=स्वीचकार।

**समा०**—देशश्च कालश्च देशकालौ, देशकालौ जानाति इति देशकालज्ञः, प्रीतिः अस्य अस्ति इति प्रीतिमान्, शासितुम् योग्यः शिष्यः, परिग्रहेण सह वर्तते इति सपरिग्रहः।

**अभि०**—देशकालवित्सभार्यो दिलीपः प्रसन्नः सन्, गुरोर्वसिष्ठस्याज्ञां विनयावनतो भूत्वा जग्राह।

**हिन्दी**—देश तथा काल के मर्मज्ञ राजा दिलीप ने प्रसन्न होकर सुदक्षिणा सहित बड़ी नम्रतापूर्वक गुरुवसिष्ठ के आदेश को स्वीकार किया ॥९२॥

अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम्।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ॥९३॥

**सञ्जीविनी**—अथ प्रदोषे रात्रौ दोषज्ञो विद्वान्। 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः। सूनृतवाक्सत्यप्रियवाक्। 'प्रियं सत्यं च सूनृतम्' इति हलायुधः। स्रष्टुः सूनुर्ब्रह्मपुत्रो मुनिः। अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति। ऊर्जितश्रियं विशांपतिं मनुजेश्वरम्। 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः। संवेशाय निद्रायै। 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः। विससर्जाज्ञापयामास ॥९३॥

**अन्वयः**—अथ, प्रदोषे, दोषज्ञः, सूनृतवाक्, स्रष्टुः, सूनुः, ऊर्जितश्रियम्, विशाम्, पतिम्, संवेशाय, विससर्ज।

**वाच्य०**—दोषज्ञेन, सूनृतवाचा, स्रष्टुः सूनुना, ऊर्जितश्रीः, विशांपतिः, संवेशाय, विससृजे।

**व्याख्या**—अथ=अनन्तरम्, प्रदोषे=रात्रौ, दोषान्=अवगुणान् जानाति वेत्ति इति दोषज्ञः, विद्वान्, इत्यर्थः, 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः, सूनृता=प्रिया सत्या च, 'प्रियं सत्यं च सूनृतम्' इत्यमरः, वाक्=वाणी यस्य असौ, सूनृतवाक्, सृजति=सृष्टिं करोति, इति स्रष्टा=ब्रह्मा तस्य स्रष्टुः सूनुः=पुत्रः, वसिष्ठ इत्यर्थः, ऊर्जिता=अधिका श्रीः=शोभा, यस्य असौ ऊर्जितश्रीः, तम्,

ऊर्जितश्रियम्, विशाम् = मनुजानाम्, पतिम् = स्वामिनम्, राजानं दिलीपम्, संवेशाय = स्वापाय, विससर्ज = आज्ञापयामास ।

**समा०**—दोषान् जानाति इति दोषज्ञः सूनृता वाक् यस्य सः सूनृतवाक्, सृजति इति स्रष्टा तस्य स्रष्टुः । ऊर्जिता श्रीः यस्य सः ऊर्जितश्रीः, तम् ऊर्जितश्रियम् ।

**अभि०**—अनन्तरं च रात्रौ सत्यप्रियवचनो वसिष्ठः सम्पत्तिसम्पन्नं राजानं निद्रार्थमाज्ञापितवान् ।

**हिन्दी**—तब रात्रि के समय सत्यप्रियभाषी वसिष्ठने लक्ष्मीसंपन्न राजा दिलीप को सोने के लिये आज्ञा दी ॥९३॥

सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।
कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥९४॥

**सञ्जीविनी**—कल्पविद्व्रतप्रयोगाभिज्ञो मुनिः तपःसिद्धौ सत्यामपि । तपसैव राजयोग्याहारसंपादनसामर्थ्ये सत्यपीत्यर्थः । नियमापेक्षया तदाप्रभृत्येव व्रतचर्यापेक्षया । अस्य राज्ञो वन्यामेव । संविधीयतेऽनयेति संविधाम् कुशादिशयनसामग्रीम् । 'आतश्चोपसर्गे' इति कप्रत्ययः । 'अकर्तरि च कारके संज्ञायाम्' इति कर्माद्यर्थत्वम् । कल्पयामास संपादयामास ॥९४॥

**अन्वयः**—**कल्पवित्, मुनिः, तपःसिद्धौ, सत्याम्, अपि, नियमापेक्षया, अस्य, वन्याम्, एव, संविधाम्, कल्पयामास ।**

**वाच्य०**— कल्पविदा, मुनिना, वन्या, एव, संविधा, चक्लृपे ।

**व्याख्या**— कल्पम् = व्रतप्रयोगम्, वेत्ति = जानाति इति कल्पवित्, मुनिः = वेदशास्त्रार्थतत्त्ववित्, वसिष्ठः, तपसः = तपश्चर्यायाः, सिद्धिः = निष्पत्तिः इति तपःसिद्धिः तस्याम् तपःसिद्धौ, सत्याम् विद्यमानायाम् अपि नियमस्य = व्रताचरणस्य अपेक्षा = तद्दृष्ट्या विचारणम् इति नियमापेक्षा तया नियमापेक्षया अस्य = दिलीपस्य, वने = अरण्ये भवा वन्या ताम् वन्याम् एव, संविधाम् = कुशास्तरणसामग्रीम्, कल्पयामास = रचयामास ।

**समा०**—कल्पम् वेत्ति इति कल्पवित्, तपसः सिद्धिः तपःसिद्धिः, तस्याम् तपःसिद्धौ । नियमस्य अपेक्षा तया नियमापेक्षया । वने भवा वन्या ताम् वन्याम् ।

**अभि०**—व्रतप्रयोगविदा मुनिना वसिष्ठेन तपःसिद्धया राजोचितशय्यासं-

पादनस्य सामर्थ्ये सत्यपि नन्दिनीशुश्रूषारूपव्रतकारणेन कुशादिभिरेव दिलीपस्य शय्या संपादिता ।

**हिन्दी**—व्रत प्रयोग में कुशल मुनि वसिष्ठ ने तप की सिद्धि से राजाओं के योग्य शय्या तैयार कर देने की सामर्थ्य होने पर भी दिलीप के लिये वन्दिनी-सेवा रूप व्रत का ध्यान रखते हुए कुशाओं के बिछौने का ही प्रवन्ध किया ॥९४॥

निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥९५॥

**सञ्जीविनी**—स राजा कुलपतिना मुनिकुलेश्वरेण वसिष्ठेन निर्दिष्टां पर्णशालामध्यास्याधिष्ठाय तस्यामधिष्ठानं कृत्वेत्यर्थः । 'अधिशीङ्' इत्यादिना-धारस्य कर्मत्वम् । कर्मणि द्वितीया । प्रयतो नियतः परिग्रहः पत्नी द्वितीयो यस्येति स तथोक्तः । कुशानां शयने संविष्टः सुप्तः सन् । तस्य वशिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितमवसानं यस्यास्तां निशां निनाय गमयामास । अपररात्रेऽध्ययने मनुः—'विशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्' इति गौतमश्च । प्रहर्षिणीवृत्तमेतत् । तदुक्तम्—म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥

**अन्वयः—प्रयतपरिग्रहद्वितीयः, सः, कुलपतिना, निर्दिष्टाम्, पर्णशालाम्, अध्यास्य, कुशशयने, संविष्टः, 'सन्' तच्छिष्याध्ययननिवेदितावसानाम् निशाम्, निनाय ।**

**वाच्य०**—प्रयतपरिग्रहद्वितीयेन तेन संविष्टेन तच्छिष्याध्ययननिवेदिता-वसाना निशा निन्ये ।

**व्याख्या**—प्रयतः = पवित्रः, परिग्रहः = भार्या एव द्वितीयः = अपरः, सहायक इत्यर्थः यस्य सः, प्रयतपरिग्रहद्वितीयः, सः = दिलीपः, कुलस्य = मुनिसमूहस्य पतिः = स्वामी, कुलपतिः, तेन कुलपतिना, मुनिकुलेश्वरेणेत्यर्थः, निर्दिष्टाम् = विज्ञापिताम्, पर्णानाम् = पत्राणाम्, शाला = भवनम् पर्णशाला ताम् पर्णशालाम्, अध्यास्य = अधिष्ठाय, कुशानाम् = कुशानाम्, शयनम् = शय्या, कुशशयनम्, तस्मिन्, कुशशयने, संविष्टः = सुप्तः, 'सन्' तस्य = वशिष्ठस्य, शिष्याः = छात्राः

तच्छिष्या,तच्छिष्याणाम्,अध्ययनम् = पठनम्; वेदपाठ इत्यर्थः, तच्छिष्याध्ययनम्, तच्छिष्याध्ययनेन, निवेदितम् = सूचितम्, अवसानम् = समाप्तिः यस्याः सा तच्छिष्याध्ययननिवेदितावसाना, तां तथोक्ताम्, निशाम् = रात्रिम् निनाय = अनैषीत् ।

**समा०**—प्रयतः परिग्रहः यस्य सः प्रयतपरिग्रहः । कुलस्य पतिः कुलपतिः तेन कुलपतिना । पर्णानाम् शाला पर्णशाला, ताम् पर्णशालाम् । कुशानाम् शयनम् कुशशयनम् तस्मिन् कुशशयने । तस्य शिष्याः तच्छिष्याः, तच्छिष्याणाम् अध्ययनम् तच्छिष्याध्ययनम्, तच्छिष्याध्ययनेन निवेदितम् अवसानम् यस्याः सा तच्छिष्याध्ययननिवेदितावसाना, ताम् तच्छिष्याध्ययननिवेदितावसानाम् ।

**अभि०**—राजा दिलीपः सुदक्षिणया सह कुलपतिना वसिष्ठेन सूचितां पर्णकुटीं प्रविश्य कुशास्तरणे सुप्तवान् । तच्छिष्यैः कृतेन वेदघोषेण च रात्रिर्गतेति विज्ञाय प्रबुद्धः ।

**हिन्दी**—राजा दिलीप सुदक्षिणा के साथ कुलपति वसिष्ठ जी से बताई हुई पर्णकुटी में कुशासन पर सोये तथा उनके शिष्यों द्वारा किये गये वेदघोष से यह जान कर कि रात बीत गई है, जाग गये ॥ ९५ ॥

इति श्रीशांकरिधारादत्तशास्त्रिमिश्रविरचितायां 'छात्रोपयोगिनी' व्याख्यायां रघुवंशे महाकाव्ये वसिष्ठाश्रमाभिगमनोनाम प्रथमः सर्गः ।

---

# श्रीरघुवंश-महाकाव्यम्

## द्वितीयः सर्गः

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

**सञ्जीविनी**—अथ निशानयनानन्तरं यशोधनः प्रजानामधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहयित्वा प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तां तथोक्ताम्। पीतं पानमस्यास्तीति पीतः पीतवानित्यर्थः। "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः। 'पीता गावो भुक्ता ब्राह्मणाः' इति महाभाष्ये दर्शनात्। पीतः प्रतिबद्धो वत्सो यस्यास्तामृषेर्वसिष्ठस्य धेनुं वनाय वनं प्रति गन्तुम्। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन चतुर्थी। मुमोच मुक्तवान्। जायापदसामर्थ्यात्सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयम्। यथाहि श्रुतिः—"पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः॥" इति। यशोधन इत्यनेन पुत्रवत्ताकीर्तिलोभाद्राजानर्हे गोरक्षणे प्रवृत्त इति गम्यते। अस्मिन्सर्गे वृत्तमुपजातिः—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति॥ १॥

विश्वेश्वरं सम्प्रणम्य, विद्यादिद्योतकारणम्।
धारादत्तेन क्रियते व्याख्या छात्रोपयोगिनी ॥१॥

**अन्वयः**—**अथ, यशोधनः, प्रजानाम्, अधिपः, प्रभाते, जायाप्रतिग्राहितगन्धमाल्याम्, पीतप्रतिबद्धवत्साम्, ऋषेः, धेनुम्, वनाय, मुमोच।**

**वाच्य०**—प्रजानामधिपेन ऋषेर्धेनुर्मुमुचे।

**व्याख्या**—अथ = रात्रिव्यत्ययानन्तरम्, यशः = कीर्तिरेव, धनं = वित्तं यस्य यशोधनः, प्रकर्षेण जायन्ते इति प्रजास्तासाम् प्रजानां = जनानाम्, अधिपः = स्वामी, प्रकर्षेण भाति वस्तु यस्मिन्निति प्रभातन्तस्मिन्, प्रभाते = प्रातःकाले,

गन्धश्च माल्यञ्च गन्धमाल्ये, जायया = सुदक्षिणया, प्रतिग्राहिते = स्वीकारिते गन्धमाल्ये स्रक्चन्दने यया सा तां तथोक्ताम्, आदौ पीतः = पीतवान्, पश्चात् प्रतिबद्धः = नियन्त्रितः, वत्सः = शकृत्करिर्यस्याः सा तां तथोक्ताम् 'शकृत्करिस्तु वत्सः स्याद्' इत्यमरः, ऋषः = वशिष्ठस्य, धेनुं = नन्दिनीम्, वनाय = वनं गन्तुं, मुमोच = मुक्तवान् ।

**समास**—यश एव धनं यस्य सः यशोधनः । प्रकर्षेण जायन्ते इति प्रजाः । अधि अधिकं पातीति-अधिपः, गन्धश्च माल्यं च गन्धमाल्ये, जायया प्रतिग्राहिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या, तां जायाप्रतिग्राहितगन्धमाल्याम् । (अत्र नन्दिन्याः प्रयोजककर्तृत्वं सुदक्षिणायाश्च प्रयोज्यकर्तृत्वं विवक्षितमिति 'प्रतिग्राहित' इत्यत्र णिच् कृतः, प्रकृते नन्दिन्यां प्रयोजककर्तृत्वं तूष्णीमवस्थाय गन्धमाल्यस्वीकरणमात्रेणापि निर्वहति इत्यवधातव्यम्) पीतं पानम् अस्यास्तीति पीतः, (दुग्धपानकर्तुर्वत्सस्य विशेषणम् ।) पीतः (पश्चात्) प्रतिबद्धः वत्सः यस्याः सा पीतप्रतिबद्धवत्सा, तां पीतप्रतिबद्धवत्साम् । धीयते (पीयते) वत्सैरिति धेनुः, तां धेनुम् ।

**अभि०**—प्रभाते राजा दिलीपः सुदक्षिणया कृतपूजां पीतवत्सां वशिष्ठस्य धेनुं वने विचरितुं मुक्तवान् ।

**हिन्दी**—रात बीत जाने पर प्रातःकाल, प्रजा का पालन करने वाले यश को ही धन माननेवाले राजा दिलीप ने, महारानी सुदक्षिणा ने चन्दन तथा पुष्पमाला से जिसकी अर्चना की है और दूध पी लेने के पश्चात् जिसका बछड़ा बाँध दिया गया है ऐसी ऋषि वशिष्ठ की धेनु को वन में चराने के लिये खोल दिया ॥१॥

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥

**सञ्जीविनी**—पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः । 'स्वैरिणी पांसुला' इत्यमरः । "सिध्मादिभ्यश्च" इति लच्प्रत्ययः । अपांसुलानां पतिव्रतानां धुर्यग्रे कीर्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी । खुरन्यासैः पवित्राः पांसवो यस्य तम् । 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः । तस्या धेनोर्मार्गम् । स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव । अन्व-

गच्छदनुसृतवती च । यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुर-क्षुण्णमेव मार्गमनुससारेत्यर्थः । धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात् । पांसुलपथप्रवृत्तावप्यपांसुलानामिति विरोधालंकारो ध्वन्यते ॥ २ ॥

**अन्वयः—अपांसुलानां, धुरि, कीर्त्तनीया, मनुष्येश्वरधर्मपत्नी, खुरन्यास-पवित्रपांसुं, तस्याः, मार्गम्, श्रुतेः, अर्थम्, स्मृतिः, इव, अन्वगच्छत् ।**

**वाच्य०**—मनुष्येश्वरधर्मपत्न्या तस्याः मार्गः श्रुतेरर्थः स्मृत्या इव अन्वगम्यत ।

**व्याख्या**—पांसवो = दोषाः आसां सन्तीति पांसुलाः = स्वैरिण्यः, 'स्वैरिणी पांसुला' इत्यमरः । न पांसुला इति अपांसुलास्तासामपांसुलानाम् = पतिव्रतानाम्, धुरि = अग्रे, कीर्त्तनीया = प्रशंसनीया, मनुष्याणाम् ईश्वरो मनुष्येश्वरस्तस्य धर्मार्थं पत्नी = इति मनुष्येश्वरधर्मपत्नी = सुदक्षिणा, खुराणां = शफानां न्यासाः = निक्षेपाः खुरन्यासाः, तैः पवित्राः = पूताः पांसवः धूलयो यस्य स तं खुरन्यासपवित्रपांसुम् = शफनिःक्षेपपरिपूतरजःकणम्, तस्याः = नन्दिन्याः, मार्गम् = पन्थानम्, स्मृतिः = मन्वादिः, श्रुतेः = वेदस्य, अर्थम् = अभिधेयम्, इव = यथा, अन्वगच्छत् = अन्वव्रजत् ।

**समा०**—पांसवः (दोषाः) आसां सन्तीति पांसुलाः, न पांसुलाः अपांसुलाः, तासाम् अपांसुलानाम् । मनुष्याणाम् ईश्वरः मनुष्येश्वरः, धर्मस्य पत्नी धर्म-पत्नी, मनुष्येश्वरस्य धर्मपत्नी मनुष्येश्वरधर्मपत्नी । खुराणां न्यासाः खुरन्यासाः, खुरन्यासैः पवित्राः पांसवः (धूलयः) यस्य सः खुरन्यासपवित्रपांसुः तं खुरन्या-सपवित्रपांसुम् ।

**अभि०**—पतिव्रतानामग्रगण्या सुदक्षिणा यथा, स्मृतयः श्रुतिमनुसरन्ति तथैव नन्दिनीपादनिक्षेपेण पवित्रं मार्गमनुसृतवती ।

**हिन्दी**—पतिव्रताओं में प्रथम राजा दिलीप की पत्नी सुदक्षिणा ने नन्दिनी के खुरों के रखने से पवित्र धूलि वाले मार्ग का उसी प्रकार अनुसरण किया, जिस प्रकार मन्वादि स्मृतियाँ वेदार्थ का अनुसरण करती हैं ॥ २ ॥

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

**सञ्जीविनी**—दयालुः कारुणिकः 'स्याद्दयालुः कारुणिकः' इत्यमरः। "स्पृहिगृहि" इत्यादिनालुच्प्रत्ययः। यशोभिः सुरभिर्मनोज्ञः। 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः। राजा तां दयितां निवर्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम्। धरन्तीति धराः। पचाद्यच्। पयसां धराः पयोधराः स्तनाः। 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। अपयोधराः पयोधराः संपद्यमानाः पयोधरीभूताः। अभूततद्भावे च्विः। "कुगतिप्रादयः" इति समासः। पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम्। "अनेकमन्यपदार्थे" इत्यनेकपदार्थग्रहणसामर्थ्यात् त्रिपदो बहुव्रीहिः। गोरूपधरामुर्वीमिव जुगोप ररक्ष। भूरक्षणप्रयत्नेनेव ररक्षेति भावः। धेनुपक्षे पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्ताम्। दुग्धतिरस्कृतसागरामित्यर्थः॥ ३॥

**अन्वयः**—**दयालुः, यशोभिः सुरभिः, राजा, दयितां, तां, निवर्त्य, सौरभेयीम्, पयोधरीभूतचतुःसमुद्राम्, गोरूपधराम्, उर्वीम्, इव, जुगोप।**

**वाच्य०**—दयालुना राज्ञा सौरभेयी गोरूपधरा उर्वी इव जुगुपे।

**व्याख्या**—दया अस्यास्तीति दयालुः=कारुणिकः, 'स्याद्दयालुः कारुणिकः' इत्यमरः। यशोभिः=कीर्तिभिः, सुरभिः=मनोज्ञः, 'सुरभिः स्यान्मनोज्ञेऽपीति विश्वः' राजा=दिलीपः, दयितां=प्रियां, तां=सुदक्षिणाम्, निवर्त्य=परावर्त्य, सुरभेरपत्यं स्त्री सौरभेयी ताम् सौरभेयीम्=नन्दिनीम्। धरन्तीति धराः पयसां धराः पयोधराः=स्तनाः, न पयोधरा अपयोधराः, अपयोधराः पयोधराः सम्पद्यमानाः इति पयोधरीभूताः=स्तनीभूताः, चत्वारः=चतुःसंख्यकाः, समुद्राः=सागराः, यस्याः सा तां तथोक्ताम्। धेनुपक्षे पयसा=दुग्धेन, अधरीभूताः=तिरस्कृताः, चत्वारः समुद्रा यया सा तां तथोक्ताम्। गोः रूपं गोरूपं गोरूपस्य धरा गोरूपधरा तां गोरूपधराम्=गोरूपिणीम्, उर्वीम्=पृथिवीम्, इव=यथा, जुगोप=ररक्ष।

**समा०**—सुरभेः (गोः अर्थात् कामधेनोः) अपत्यं स्त्री सौरभेयी, तां सौरभेयीम्। धरन्तीति धराः, पयसां धराः पयोधराः, अपयोधरा पयोधरा, सम्पद्यमानाः पयोधरीभूता, पयोधरीभूताः चत्वारः समुद्राः यस्याः सा पयोधरीभूतचतुःसमुद्रा, तां पयोधरीभूतचतुःसमुद्राम् (इति उर्वीपक्षे)। अनधराः (उच्चाः) अधराः सम्पद्यमानाः अधरीभूताः (नीचभूताः) पयसा (दुग्धेन) अधरीभूताः

चत्वारः समुद्राः यस्याः सा पयोधरीभूतचतुःसमुद्रा, तां पयोधरीभूतचतुःसमुद्राम् (इति तु गोपक्षे)। धरतीति धरा, गोः रूपं गोरूपम्, गोरूपस्य धरा गोरूपधरा, तां गोरूपधराम्।

**अभि०**—राजा दिलीपः सुदक्षिणां परावर्त्य पृथिवीमिव वशिष्ठधेनुं पालयाम्बभूव।

**हिन्दी**—दयायुक्त सत्कीर्तियों से सुशोभित महाराजा दिलीप अपनी पत्नी सुदक्षिणा को लौटाकर, दूध से चारों समुद्रों को तिरस्कृत कर दिया है जिसने ऐसी उस धेनु की, चार समुद्रों को चार स्तनों के रूप में धारण की हुई गौ के रूप में उपस्थित पृथ्वी के समान रक्षा करने लगा ॥३॥

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

**सञ्जीविनी**—व्रताय धेनोरनुचरेण। न तु जीवनायेति भावः। तेन दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निवर्तितः। शेषत्वं सुदक्षिणापेक्षया। कथं तर्ह्यात्मरक्षणमत आह। न चेति। तस्य दिलीपस्य शरीररक्षा चान्यतः पुरुषान्तरान्न। कुतः? हि यस्मात्कारणान्मनोः प्रसूयत इति प्रसूतिः संततिः स्ववीर्येणैव गुप्ता रक्षिता। नहि स्वनिर्वाहकस्य परापेक्षेति भावः ॥४॥

**अन्वयः—व्रताय, धेनोः, अनुचरेण, तेन, शेषः, अपि, अनुयायिवर्गः, न्यषेधि, तस्य, शरीररक्षा, अन्यतः, न, हि, मनोः, प्रसूतिः, स्ववीर्यगुप्ता, (भवति)।**

**वाच्य०**—धेनोः अनुचरः, सः, शेषमपि, अनुयायिवर्गं न्यषेधीत्। तस्य शरीररक्षया अन्यतः न (भूयते)। मनोः प्रसूत्या स्ववीर्यगुप्तया भूयते।

**व्याख्या**—व्रताय = नियमाय, व्रतं कर्तुमित्यर्थः, धेनोः = नन्दिन्याः, अनु = पश्चात् चरति = गच्छति इति अनुचरस्तेन, अनुचरेण = सेवकेन, तेन = राज्ञा दिलीपेन, शेषः = अवशिष्टः, अपि, अनु = पश्चात् यान्तीति अनुयायिनस्तेषां वर्गः = समूह इति अनुयायिवर्गः, न्यषेधि = निवर्तितः, तस्य = दिलीपस्य, शरीरस्य = देहस्य, रक्षा = पालनम्, अन्यतः = पुरुषान्तरात्, न = नहि, भवति। हि = यस्मात्कारणात्, मनोः = वैवस्वतस्य, (प्रसूयते इति प्रसूतिः) प्रसूतिः = सन्ततिः, स्वस्य = निजस्य, वीर्यं = पराक्रमः, तेन स्ववीर्येण गुप्ता = रक्षिता भवतीति शेषः।

**समा०**—अनु (पश्चात्) चरतीति अनुचरः, तेन अनुचरेण। अनु यातु (गन्तुम्) शीलं येषां ते अनुयायिनः, अनुयायिनां वर्गः अनुयायिवर्गः। शीर्यते (स्वयं विदीर्यते) इति शरीरम्, शरीरस्य रक्षा शरीररक्षा। स्वस्य वीर्यं स्ववीर्यम्, स्ववीर्येण गुप्ता स्ववीर्यगुप्ता।

**अभि०**—राज्ञा दिलीपेन सर्वोऽपि भृत्यवर्गः परावर्तितः, इक्ष्वाकुकुलोत्पन्नाः स्वशरीररक्षणे अन्यस्य साहाय्यं नाभिलषन्ति, ते स्वपराक्रमेणैव सुरक्षिता भवन्तीत्यर्थः।

**हिन्दी**—गोसेवा रूपी व्रत का पालन करने के लिये नन्दिनी के सेवक राजा दिलीपने सुदक्षिणा को लौटाने के बाद बचे हुए अनुचर समूह को भी पीछे आने से रोक दिया। राजा दिलीप की शरीररक्षा के लिये दूसरे मनुष्य की आवश्यकता नहीं थी, क्योंकि मनु के कुल में उत्पन्न राजा अपने ही पराक्रम से अपनी रक्षा कर लेते थे ॥४॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥५॥

**सञ्जीविनी**—सम्राण्मण्डलेश्वरः। 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः। स राजा आस्वादवद्भी रसवद्भिः। स्वादयुक्तैरित्यर्थः। तृणानां कवलैर्ग्रासैः। 'ग्रासस्तु कवलः पुमान्' इत्यमरः। कण्डूयनैः खर्जनैः। दंशानां वनमक्षिकाणां निवारणैः। 'दंशस्तु वनमक्षिका' इत्यमरः। अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च। तस्या धेन्वाः समाराधनतत्परः शुश्रूषासक्तोऽभूत्। तदेव परं प्रधानं यस्येति तत्परः। 'तत्परे प्रसितासक्तौ' इत्यमरः ॥५॥

**अन्वयः**—सम्राट्, सः, आस्वादवद्भिः, तृणानां, कवलैः, कण्डूयनैः, दंशनिवारणैः, अव्याहतैः, स्वैरगतैः, च, तस्याः, समाराधनतत्परः, अभूत्।

**वाच्य०**—सम्राजा तेन तस्याः समाराधनतत्परेण अभावि।

**व्याख्या**—सम्यक् राजते = प्रकाशते, इति सम्राट् = मण्डलेश्वरः, सः = राजा दिलीपः, आस्वादो विद्यते येषु ते आस्वादवन्तस्तैः आस्वादवद्भिः = रसवद्भिः, तृणानां = घासानां, कवलैः = ग्रासैः, कण्डूयनैः = खर्जनैः, दंशानां = वनमक्षिकाणाम्, निवारणानि = दूरीकरणानि तैः, दंशनिवारणैः = वनमक्षिकानिराकरणैः,

न व्याहतानि अव्याहतानि तैः, अव्याहतैः = अप्रतिहतैः, स्वैरं = स्वच्छन्दं, गतानि = गमनानि तैः स्वैरगतैः = स्वेच्छयाविचरणैः, च = अपि, तस्याः = धेनोः, सम्यगाराधनम् समाराधनम्, तदेव परं प्रधानं यस्य सः, तत्परः = नन्दिनीशुश्रूषासक्तः, अभूत् = आसीत् ।

**समा०**—आस्वादः (अभिरुचिः) एषामस्तीति आस्वादवन्तः, तैः-आस्वादवद्भिः । दंशानां निवारणानि दंशनिवारणानि, तैः दंशनिवारणैः । न व्याहतानि अव्याहतानि, तैः अव्याहतैः । स्वैराणि (स्वैरेण वा) च तानि गतानि च स्वैरगतानि । तदेव परं (प्रधानं) यस्य सः तत्परः, सम्यग् आराधने तत्परः समाराधनतत्परः ।

**अभि०**—चक्रवर्ती राजा दिलीपः निजकरोपनीतानां रसवत्सुकोमलघासानां ग्रासप्रदानेन, गात्रखर्जनेन, वनमक्षिकापसारणेन स्वच्छन्दगमनानिरोधेन च तस्याः सेवासक्तोऽभूत् ।

**हिन्दी**—चक्रवर्ती राजा दिलीप सरस कोमल-कोमल घास के ग्रासों से, शरीर के खुजलाने से, जंगली मच्छरों के उड़ाने से एवं बेरोकटोक स्वच्छन्द विचरण से उस वशिष्ठ ऋषि की धेनु की सेवा में संलग्न हुए ॥५॥

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

**सञ्जीविनी**—भूपतिस्तां गां स्थितां सतीं स्थितः सन् । स्थितिरूर्ध्वावस्थानम् । प्रयातां प्रस्थितामुच्चलितः प्रस्थितः । निषेदुषीं निषण्णाम् । उपविष्टामित्यर्थः । "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः । "उगितश्च" इति ङीप् । आसनबन्ध उपवेशने धीरः स्थितः । उपविष्टः सन्नित्यर्थः । जलमाददानां जलं पिबन्तीं जलाभिलाषी । जलं पिबन्नित्यर्थः । इत्थं छायेवान्वगच्छदनुसृतवान् ॥६॥

**अन्वयः**—भूपतिः तां, स्थितां (सतीम्) स्थितः (सन्) प्रयातां (सतीम्) उच्चलितः (सन्) निषेदुषीम् (सतीम्) आसनबन्धधीरः (सन्) जलम् आददानां (सतीम्) जलाभिलाषी (सन्) इत्थम् छाया इव अन्वगच्छत् ।

**वाच्य०**—भूपतिना सा धेनुः छायया इव अन्वगम्यत ।

**व्या०**—भुवः = पृथिव्याः, पतिः = स्वामी, इति भूपतिः, तां = धेनुम्, स्थिताम् = उर्ध्वमवस्थिताम्, सतीमिति शेषः सर्वत्र । स्थितः = उर्ध्वमवतिष्ठमानः

सन्, प्रयातां=प्रस्थानं कुर्वतीम्, उच्चलितः=प्रस्थानं कुर्वन्, निषेदुषीम्=उपविष्टाम्, आसनस्य बन्धः, आसनबन्धस्तस्मिन् धीरः, आसनबन्धधीरः=उपविष्टः सन्, जलम्=सलिलम् आदत्त इति आददाना ताम् आददानां=पिबन्तीम् । जलमभिलषति इति जलाभिलाषी=जलं पिबन् (इत्थं) छाया=प्रतिबिम्बं धेनोरिति यावत्, इव=यथा, अन्वगच्छत्=अन्वव्रजत् ।।

**समा०**—भुवः पतिः भूपतिः । आसनस्य बन्धः आसनबन्धः आसनबन्धे धीरः आसनबन्धधीरः । जलम् अभिलषितुं शीलमस्यासौ जलाभिलाषी । आदत्ते इति आददाना, ताम् आददानाम् ।

**अभि०**—धेनुसेवायां संलग्नो राजा दिलीपः, तच्छायासदृशः तदनुसरणमकरोत् ।

**हिन्दी**—पृथ्वी का स्वामी राजा दिलीप नन्दिनी के खड़े होने पर स्वयं भी खड़ा होता था और चलने पर चलता था, बैठने पर बैठता था एवं जल पीने पर प्यासे की तरह जल पीने लगता था इस प्रकार छाया की तरह उसने नन्दिनी का अनुसरण किया ।।६।।

**स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।**
**आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ।। ७ ।।**

**सञ्जीविनी**—न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेनानुमिताम् । सर्वथा राजैवायं भवेदित्यूहितां राजलक्ष्मीं दधानः स राजा । अनाविष्कृतदानराजिर्बहिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः । तथाभूतो द्विपेन्द्र इव आसीत् ।।७।।

**अन्वयः**—**न्यस्तचिह्नाम्, अपि, तेजोविशेषानुमितां, राजलक्ष्मीम्, दधानः, सः, अनाविष्कृतदानराजिः, अन्तर्मदावस्थः, द्विपेन्द्रः, इव, आसीत् ।**

**वाच्य०**—राजलक्ष्मीं दधानेन तेन, अन्तर्मदावस्थेन, द्विपेन्द्रेण, इव, अभूयत ।

**व्याख्या**—न्यस्तानि=परित्यक्तानि, चिह्नानि=छत्रचामरादीनि यस्याः सा न्यस्तचिह्ना तां न्यस्तचिह्नाम् अपि, तेजसः=प्रतापस्य विशेषः=अतिशयः, तेन, अनुमिता=तर्किता तां तेजोविशेषानुमितां, राज्ञः=नृपस्य, लक्ष्मीः=श्रीः, तां राजलक्ष्मीम्, शोभातिशयमित्यर्थः, दधानः=बिभ्राणः, सः=राजा दिलीपः,

न आविष्कृता = न प्रकटीकृता, दानस्य = मदस्य, राजिः = लेखा येन सः तथोक्तः। मदस्य = दानस्य, अवस्था = दशा मदावस्था, अन्तर्गता मदावस्था यस्य सः, अन्तर्मदावस्थः, द्वाभ्यां = मुखशुण्डाभ्यां पिबन्तीति द्विपास्तेषामिन्द्रः, द्विपेन्द्रः = गजेन्द्रः, इव = यथा, आसीत् = अभूत्।

**समा०**—न्यस्तानि चिह्नानि यस्याः सा न्यस्तचिह्ना, तां न्यस्तचिह्नाम्। तेजसः विशेषः तेजोविशेषः, तेजोविशेषेण अनुमिता तेजोविशेषानुमिता, तां तेजोविशेषानुमिताम्। राज्ञः लक्ष्मीः राजलक्ष्मीः तां राजलक्ष्मीम्। न आविष्कृता अनाविष्कृता, दानस्य राजिः दानराजिः, अनाविष्कृता दानराजिः येन सः अनाविष्कृतदानराजिः। मदस्य अवस्था मदावस्था, अन्तः (अभ्यन्तरे) मदावस्था यस्य सः अन्तर्मदावस्था। द्वाभ्यां (शुण्डतुण्डाभ्यां) पिबन्तीति द्विपाः, द्विपानाम् इन्द्रः द्विपेन्द्रः।

**अभि०**—यथा द्विपेन्द्रः, अनाविष्कृतमदः सन्नपि निजाभ्यन्तरगतां मदावस्थां स्वतेजोविशेषेण बोधयति एवं राजा दिलीपोऽपि छत्रचामरादीनि राजलक्षणानि अधारयन्नपि स्वप्रभावातिशयेन स्वकीयं चक्रवर्तित्वमनुमापयति स्म।

**हिन्दी**—यद्यपि उस समय राजा दिलीप छत्र-चामर आदि समस्त राजचिह्नों से शोभित नहीं थे, तथापि अपने प्रभावातिशय के कारण अनुमान से ज्ञात राजलक्ष्मी को धारण करते हुए उस गजराज की तरह दीख पड़ते थे जिसका मद बाहर भले ही प्रकट न हो पर जिसकी भव्य आकृति से मद का भीतर रहना स्पष्ट झलकता है ॥७॥

**लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्।**
**रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥**

**सञ्जीविनी**—लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिता ये केशास्तैरुपलक्षितः। "इत्थंभूतलक्षणे" इति तृतीया। स राजा। अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा सन्। "धनुषश्च" इत्यनङादेशः। मुनिहोमधेनो रक्षापदेशाद्रक्षणव्याजात्। वन्यान्वने भवान्दुष्टसत्त्वान्दुष्टजन्तून्। 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः। विनेष्यञ्छिक्षयिष्यन्निव दावं वनम्।

'वने च वनवह्नौ च दवो दाव इहेष्यते' इति यादवः। विचचार। वने चचारेत्यर्थः। 'देशकालाध्वगन्तव्यः कर्मसंज्ञा ह्यकर्मणाम्' इति दावस्य कर्मत्वम् ॥८॥

**अन्वयः**—लताप्रतानोद्ग्रथितैः, केशैः (उपलक्षितः), सः, अधिज्यधन्वा (सन्) मुनिहोमधेनोः, रक्षापदेशात्, वन्यान्, दुष्टसत्त्वान्, विनेष्यन्, इव, दावं, विचचार।

**वाच्य०**—तेन अधिज्यधन्वना सता दुष्ट-सत्त्वान् विनेष्यता इव दावः विचेरे।

**व्याख्या**—लतानां = वल्लीनां, प्रतानैः = कुटिलतन्तुभिः, उद्ग्रथिताः = उन्नमय्य गुम्फिता ये केशाः, तैः लताप्रतानोद्ग्रथितैः, केशैः = कचैः (उपलक्षितः)। 'कचः केशः शिरोरुहः', इत्यमरः। सः = राजा दिलीपः, अधिज्यम् = आरोपितमौर्वीकं, धनुः = कोदण्डः यस्य सः, अधिज्यधन्वा (सन्) मुनेः = वशिष्ठस्य होमधेनुः = होमार्थं पालिता गौः होमधेनुः, तस्याः, मुनिहोमधेनोः = नन्दिन्याः, रक्षायाः = पालनस्य अपदेशः = व्याजः तस्मात् रक्षापदेशात्। वने भवा वन्यास्तान् वन्यान् = जांगलिकान्, दुष्टाश्च ते सत्त्वास्तान् दुष्टसत्त्वान् = हिंसकजन्तून्, विनेष्यन् = शिक्षयिष्यन् इव = यथा, दावं = वनं, विचचार = विचरति स्म।

**समा०**—लतानां प्रतानानि लताप्रतानानि, उन्नमय्य ग्रथिताः उद्ग्रथिताः, लताप्रतानैः उद्ग्रथिताः लताप्रतानोद्ग्रथिताः, तैः लताप्रतानोद्ग्रथितैः। अधि (आरोपिता) ज्या (मौर्वी) यस्य तत् अधिज्यम्, अधिज्यं धनुः यस्य सः अधिज्यधन्वा। होमस्य धेनुः होमधनुःमुनेः होमधेनुः मुनिहोमधेनुः, तस्याः मुनिहोमधेनोः। रक्षायाः अपदेशः रक्षापदेशः, तस्मात् रक्षापदेशात्। वने भवाः वन्याः, तान् वन्यान्। दुष्टाश्च ते सत्त्वाश्च दुष्टसत्त्वाः, तान् दुष्टसत्त्वान्। विनेष्यतीति विनेष्यन्।

**अभि०**—राजा दिलीपः कुटिलतन्तुगुम्फितकेशः धनुष्पाणिः सन् वने भ्रमणं कृतवान्, तत् वशिष्ठधेनुरक्षणव्याजेन दुष्टहिंसकव्याघ्रादीनां शिक्षणार्थमिवेति भाति स्म।

**हिन्दी**—लताओं के टेढे-मेढ़े सूत के समान तृणों से बँधे हुए बालों से सुशोभित वह राजा दिलीप प्रत्यञ्चा चढ़े धनुष को लेकर वशिष्ठ के हवन की सामग्री (घृतादि) देनेवाली उस गौकी रक्षा के बहाने दुष्ट सिंहादि जन्तुओं का शासन करने के लिये मानों वन में विचरण कर रहा था ॥८॥

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥

**सञ्जीविनी**—विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य। पाशभृता वरुणेन समस्य तुल्यस्य। 'प्रचेता वरुणः पाशी' इत्यमरः। अनेनास्य महानुभावः सूचितः। तस्य राज्ञः पार्श्वयोर्द्रुमाः। उन्मदानामुत्कटमदानां वयसां खगानाम्। "खगबाल्यादिनोर्वयः' इत्यमरः। विरावैः शब्दैः। आलोकस्य शब्दं वाचकमालोकयेति शब्दम्। जयशब्दमित्यर्थः। 'आलोको जयशब्दः स्यात्' इति विश्वः। उदीरयामासुरिवावदन्निवेत्युत्प्रेक्षा ॥९॥

**अन्वयः**—**विसृष्टपार्श्वानुचरस्य, पाशभृता समस्य, तस्य, पार्श्वद्रुमाः, उन्मदानां, वयसां, विरावैः, आलोकशब्दम्, उदीरयामासुः, इव।**

**वाच्य०**—तस्य पार्श्वद्रुमैः, आलोकशब्दः, उदीरयाञ्चक्रे।

**व्याख्या**—पार्श्वयोः अनुचराः, पार्श्वानुचराः, विसृष्टाः = त्यक्ताः पार्श्वानुचराः = समीपवर्तिसेवकाः, येन सः, तस्य विसृष्टपार्श्वानुचरस्य, पाशं बिभर्तीति पाशभृत्तेन पाशभृता = वरुणेन "प्रचेता वरुणः पाशी" इत्यमरः। समस्य = तुल्यस्य, तस्य = राज्ञः, पार्श्वयोः = अन्तिकयोः, द्रुमाः = वृक्षा इति पार्श्वद्रुमाः। उद्गतः, मदो येषान्ते उन्मदास्तेषामुन्मदानाम् = उत्कटमदानां, वयसां = पक्षिणां, विरावैः = शब्दैः, आलोकस्य शब्दम् आलोकशब्दम् = जयशब्दम्, उदीरयामासुः = कथयामासुः, इव इत्युत्प्रेक्षा।

**समा०**—अनु चरन्तीति अनुचराः, पार्श्वयोः अनुचराः पार्श्वानुचराः, विसृष्टाः पार्श्वानुचराः येन सः विसृष्टपार्श्वानुचरः, तस्य विसृष्टपार्श्वानुचरस्य। पाशं बिभर्तीति पाशभृत्, तेन पाशभृता। पार्श्वयोः द्रुमाः पार्श्वद्रुमाः। उद् (उत्कृष्टः) मदः येषां तानि उन्मदानि, तेषाम् उन्मदानाम्। आलोकस्य शब्दः आलोकशब्दः, तम् आलोकशब्दम्।

**अभि०**—परित्यक्तसेवकवर्गस्यापि वरुणतुल्यप्रभावस्य तस्य राज्ञो दिलीपस्य, उभयपार्श्वस्थितेषु वृक्षेषु स्थितानां पक्षिणां कूजितं वन्दिजनभाषितजयशब्द इवाभवत्।

**हिन्दी**—समीपवर्ती सेवकों को छोड़ देने पर भी वरुण के समान प्रभावशाली राजा दिलीप के आस पास के वृक्षों ने मतवाले पक्षियों के शब्द द्वारा जय

शब्द उच्चारण किया। अर्थात् 'महाराज की जय हो' कहा, ऐसा जान पड़ता था ॥९॥

**मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।**
**अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥१०॥**

**सञ्जीविनी**—मरुत्प्रयुक्ता वायुना प्रेरिता बाललता आरात्समीपेऽभिवर्तमानम् । 'आराद्दूरसमीपयोः' इत्यमरः । मरुतो वायोः सखा मरुत्सखोऽग्निः । स इवाभातीति मरुत्सखाभम् । 'आतश्चोपसर्गे' इति कप्रत्ययः । अर्च्यं पूज्यं तं दिलीपं प्रसूनैः पुष्पैः । पौरकन्याः पौराश्च ताः कन्या आचारार्थैर्लाजैराचारलाजैरिव अवाकिरन् । तस्योपरि निक्षिप्तवत्य इत्यर्थः । सखा हि सखायमागतमुपचरतीति भावः ॥१०॥

**अन्वयः**—**मरुत्प्रयुक्ताः, बाललताः, आरात्, अभिवर्तमानम्, मरुत्सखाभम्, अर्च्यम्, तम्, प्रसूनैः, पौरकन्याः, आचारलाजैः, इव, अवाकिरन् ।**

**वाच्य०**—बाललताभिः, अर्च्यः, सः, प्रसूनैः, पौरकन्याभिरिव, अवाकीर्यत ।

**व्याख्या**—मरुता = वायुना, प्रयुक्ताः = प्रेरिताः, इति मरुत्प्रयुक्ताः, बालाश्च ताः लताः बाललताः = बालवल्लर्यः, आरात् = समीपे, अभिवर्तते इति अभिवर्तमानस्तमभिवर्तमानम् = विद्यमानम्, मरुतः = वायोः, सखा = मित्रम्, इति मरुत्सखः अग्निरित्यर्थः, तस्य, आभा, इव, आभा = कान्तिः, यस्य सः, तम् मरुत्सखाभम्, अत एव, अर्च्यं = पूज्यं, तं = दिलीपम्, प्रसूनैः = पुष्पैः, पुरे भवाः पौरास्तेषां कन्याः पौरकन्याः = नागरिकबालिकाः, आचारार्थं = मंगलार्थं लाजाः तैः, आचारलाजैः, इव = यथा, अवाकिरन् = ववृषुः ।

**समा०**—मरुता प्रयुक्ताः मरुत्प्रयुक्ताः । बालाश्च ताः लताश्च बाललताः । अभि (अभिमुखं) वर्तते इति अभिवर्तमानः, तम् अभिवर्तमानम् । मरुतः सखा मरुत्सखः, मरुत्सख इव आभाति इति मरुत्सखाभः, तं मरुत्सखाभम् । अर्चितुं योग्यः अर्च्यः, तम् अर्च्यम् । पुरे भवाः पौराः पौराश्च ताः पौराणां वा कन्याः पौरकन्याः । आचारार्थाः लाजाः आचारलाजाः ( उत्तरपदलोपः ), तैः आचारलाजैः ।

**अभि०**—वह्नितुल्यदीप्तिमन्तं राजानं दिलीपमागतं दृष्ट्वा बाललताः समीपे

वर्तमानस्य दिलीपस्योपरि पुष्पवृष्टिम् अकुर्वन्, यथा पौरकन्याः मंगलार्थं लाज-वर्षणम् कुर्वन्ति ।

**हिन्दी**--वायु से प्रेरित कोमल लताओं ने अग्नि के समान तेजस्वी एवं समीप में आये हुए पूजनीय राजा दिलीप के ऊपर उसी प्रकार फूलों की वर्षा की जिस प्रकार नगरवासियों की बालिकाएँ मंगलार्थ धान के लावों की वर्षा करती हैं ॥१०॥

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥११॥

**सञ्जीविनी**--धनुर्भृतोऽप्यस्य राज्ञः । एतेन भयसंभावना दर्शिता । तथापि विशंकैर्निर्भीकैरन्तःकरणैः कर्तृभिः । दयया कृपारसेनार्द्रो भावोऽभिप्रायो यस्य तद्दयार्द्रभावं तदाख्यातम् । दयार्द्रभावमेतदित्याख्यातमित्यर्थः । 'भावः सत्वस्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । तथाविधं वपुरालोकयन्त्यो हरिण्योऽक्ष्णां प्रकामविस्तारस्यात्यन्तविशालतायाः फलमापुः । "विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं च" इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं ददृशुरित्यर्थः ॥११॥

**अन्वयः**--धनुर्भृतः अपि, अस्य, विशङ्कैः, अन्तःकरणैः, दयार्द्रभावम्, आख्यातम्, वपुः, विलोकयन्त्यः, हरिण्यः, अक्ष्णाम्, प्रकामविस्तारफलम्, आपुः ।

**वाच्य०**--विलोकयन्तीभिः, हरिणीभिः, अक्ष्णां प्रकामविस्तारफलम्, आपे ।

**व्याख्या**--धनुर्बिभर्ति इति धनुर्भृत् तस्य धनुर्भृतः = चापधारिणः, अपि = विरोधे, अस्य = राज्ञो दिलीपस्य, विगता = नष्टा, शंका = भीतिः, येषान्तैः, विशंकैः अन्तःकरणैः = मनोभिः ( कर्तृभिः ), दयया = करुणया, आर्द्रः = पूर्णः, भावः = अभिप्रायः, यस्य तत्तथोक्तम्, आख्यातम् = प्रकटितम्, कृपापरिपूर्णमेतद्वपुरिति कथितमित्यर्थः, वपुः = शरीरम्, विलोकयन्त्यः = पश्यन्त्यः, हरिण्यः = मृग्यः, अक्ष्णाम् = नेत्राणाम्, प्रकामं = यथेष्टं विस्तारस्तस्य फलमिति प्रकाम-विस्तारफलम् = अत्यन्तविसालताफलम्, आपुः = प्रापुः ।

**समा०**--धनुः बिभर्तीति धनुर्भृत्, तस्य धनुर्भृतः । विगता शंका येभ्यस्तानि विशंकानि, तैः विशंकैः । अन्तः ( अन्तःस्थानि ) करणानि अन्तःकरणानि, तैः

अन्तःकरणैः। दयया आर्द्रः भावः यस्य तत् दयार्द्रभावम्, प्रकामं विस्तारः प्रकामविस्तारः, प्रकामविस्तारस्य फलं प्रकामविस्तारफलम्।

**अभि०**—यद्यपि राजा दिलीपः धनुर्दधानः सन् बाह्यतः भयप्रद आसीत्, किन्तु मृग्यः स्वचित्तैः राज्ञो दयार्द्रभावं विज्ञाय, भयरहिताः सत्यः निर्निमेषदृष्ट्या दिलीपशरीरं विलोकयन्त्यः निजनेत्रविस्तृतेः साफल्यं प्रापुः।

**हिन्दी**—धनुष को धारण करने पर भी राजा दिलीप का शरीर दयापूर्ण है ऐसा भयरहित अपने अन्तःकरणों के द्वारा जानकर एकटक देखती हुई हरिणियों ने अपने नेत्रों के विशाल होने का फल प्राप्त किया अर्थात् अपने अन्तःकरण के विश्वास से निश्चित होकर राजा को देखा ॥११॥

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥१२॥

**सञ्जीविनी**—स दिलीपो मारुतपूर्णरन्ध्रैः। अत एव कूजद्भिः स्वनद्भिः। कीचकैर्वेणुविशेषैः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। वंशः सुषिरवाद्यविशेषः। 'वंशादिकं तु सुषिरम्' इत्यमरः। आपादितं संपादितं वंशस्य कृत्यं कार्यं यस्मिन्कर्मणि तत्तथा। कुञ्जेषु लतागृहेषु। 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। वनदेवताभिरुद्गीयमानमुच्चैर्गीयमानं स्वं यशः शुश्राव श्रुतवान् ॥१२॥

**अन्वयः**—सः, मारुतपूर्णरन्ध्रैः, कूजद्भिः, कीचकैः, आपादितवंशकृत्यम्, कुञ्जेषु, वनदेवताभिः, उच्चैः, उद्गीयमानं, स्वं, यशः, शुश्राव।

**वाच्य०**—तेन स्वं यशः शुश्रुवे।

**व्याख्या**—सः = राजा दिलीपः, मारुतेन = वायुना, पूर्णानि = पूरितानि, रन्ध्राणि = छिद्राणि येषान्ते मारुतपूर्णरन्ध्रास्तैः, तथोक्तैः, (अतएव) कूजद्भिः = स्वनद्भिः शब्दं कुर्वद्भिरित्यर्थः, कीचकैः = वेणुविशेषैः 'वेणवः कीचकास्ते ये स्वनन्त्यनिलोद्धताः, इत्यमरः। आपादितं = सम्पादितं, वंशस्य = वेणुविशेषस्य कृत्यं = कार्यं यस्मिन् कर्मणि तत्तथा क्रियाविशेषणमेतत्, कुञ्जेषु = लतागृहेषु, वनस्य = अरण्यस्य, देवताः = अधिष्ठातृदेव्यः, ताभिः वनदेवताभिः, उच्चैः = तारस्वरेण, उद्गीयमानम् = स्तूयमानम्, स्वं = स्वकीयं, यशः = कीर्तिम्, शुश्राव = आकर्णयामास, श्रुतवानित्यर्थः।

**समा०**—मारुतेन पूर्णानि रन्ध्राणि येषां ते मारुतपूर्णरन्ध्राः, तैः मारुतपूर्णरन्ध्रैः । कूजन्तीति कूजन्तः, तैः कूजद्भिः । वंशस्य कृत्यम् वंशकृत्यम्, आपादितं वंशकृत्यं यस्मिन् कर्मणि तद्यथा भवति तथा आपादितवंशकृत्यम् । वनस्य देवताः वनदेवताः, ताभिः वनदेवताभिः । उद् (उच्चैः) गीयमानं उद्गीयमानम् ।

**अभि०**—प्रवहन्मरुदापूरणेन स्वतः शब्दायमानाः वंशाः वाद्यकृत्यं कुर्वन्ति, लतागृहेषु वनदेवता तारस्वरेण राज्ञः कीर्तिं गायन्ति, इदं राजा दिलीपः श्रुतवान् ।

**हिन्दी**—उस राजा दिलीप ने वायु से भरे छिद्रों से बजते हुए कीचक नामक बांसों के द्वारा बाँसुरी का कार्य जिस गान में हो रहा है ऐसे वन की देवियों द्वारा जोर से गाये जानेवाले अपने उस यशगान को सुना ॥१२॥

**पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।**
**तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥१३॥**

**सञ्जीविनी**—गिरिषु निर्झराणां वारिप्रवाहाणाम् 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । तुषारैः सीकरैः 'तुषारौ हिमसीकरौ' इति शाश्वतः । पृक्तः संपृक्तोऽनोकहानां वृक्षाणामाकम्पितानीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीत्याकम्पितपुष्पगन्धी । ईषत्कम्पितपुष्पगन्धवान् । एवं शीतो मन्दः सुरभिः पवनो वायुरनातपत्रं व्रतार्थं परिहृतच्छत्रम् । अत एवातपक्लान्तमाचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः॥१३॥

**अन्वयः—गिरिनिर्झराणाम्, तुषारैः, पृक्तः, अनोकहाकम्पितपुष्पगन्धी, पवनः, अनातपत्रम्, आतपक्लान्तम्, आचारपूतं तं सिषेवे ।**

**वाच्य०**—पवनेन आचारपूतः सः सिषेवे ।

**व्याख्या**—गिरिषु = पर्वतेषु, निर्झराः = वारिप्रवाहाः, तेषां गिरिनिर्झराणाम्, "वारिप्रवाहो निर्झरो झरः" इत्यमरः । तुषारैः = सीकरैः जलबिन्दुभिरित्यर्थः, "तुषारौ हिमसीकरौ" इति शाश्वतः । पृक्तः = सम्पृक्तः, अनसः = शकटस्याकं गतिं घ्नन्तीति अनोकहास्तेषामनोकहानाम् = वृक्षाणाम्, आकम्पितानि = ईषत्कम्पितानि यानि पुष्पाणि = कुसुमानि, तेषां गन्धः = सौरभम् अस्यास्तीति अनोकहाकम्पितपुष्पगन्धी, पुनातीति पवनः = वायुः, आतपात् = घर्मात्

त्रायते इति आतपत्रम्, न विद्यते–आतपत्रं यस्य सः, अनातपत्रस्तमनातपत्रम् = छत्ररहितम्, (अत एव) आतपेन = घर्मेण, औष्ण्येनेत्यर्थः, क्लान्तम् = म्लानम्, आचारेण = सदाचारेण पूतं = पवित्रं, तं = राजानं दिलीपं, सिषेवे = सेवितवान् ।

**समा०**—गिरेः निर्झराः गिरिनिर्झराः, तेषां गिरिनिर्झराणाम् । अनसः ( शकटस्य ) अकं ( गतिम् ) घ्नन्तीति अनोकहाः, आकम्पितानि च तानि पुष्पाणि च आकम्पितपुष्पाणि, अनोकहानाम् आकम्पितपुष्पाणि अनोकहाकम्पित-पुष्पाणि, अनोकहाकम्पितपुष्पाणां गन्धः अस्यास्तीति अनोकहा कम्पितपुष्प-गन्धी । आतपेन क्लान्तः आतपक्लान्तः तम् आतपक्लान्तम् । आतपात्त्रायत इति आतपत्रम्, न विद्यते आतपत्रं यस्य सः अनातपत्रः तम अनातपत्रम् । आचारैः पूतः आचारपूतः तम् आचारपूतम् ।

**अभि०**—शीतलः, मन्दः, सुरभिश्च वायुः, छत्ररहितं घर्मपीडितं सदाचारेण शुद्धं तं दिलीपं सेवितवान्, आचारपूतत्वेन स राजा पवनस्यापि सेव्य इति भावः ।

**हिन्दी**—पर्वतीय झरनों के जलकणों से युक्त अत एव शीतल तथा वृक्षों के धीरे २ हिलते हुए फूलों की गन्धवाला अर्थात् शीतल, मन्द एवं सुगन्ध युक्त वायु छत्र रहित अतएव धूप से मुरझाये हुए एवं सदाचार से पवित्र राजा दिलीप की सेवा करने लगा ॥१३॥

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने ॥१४॥

**सञ्जीविनी**—गोप्तरि तस्मिन्राज्ञि वनं गाहमाने प्रविशति सति वृष्ट्या विनापि दवाग्निर्वनाग्निः । 'दवदावौ वनानले' इति हेमः । 'दवदावौ वनारण्य-वह्नी' इति चामरः । शशाम । फलानां पुष्पाणां च वृद्धिः । विशेष्यत इति विशेषा अतिशयिताऽऽसीत् । कर्मार्थे घञ्प्रत्ययः । सत्त्वेषु जन्तुषु मध्ये । 'यतश्च निर्धारणम्' इति सप्तमी । अधिकः प्रबलो व्याघ्रादिरूनं दुर्बलं हरिणादिकं न बबाधे न पिपीड ॥१४॥

**अन्वयः**—गोप्तरि, तस्मिन्, वनं, गाहमाने, सति, वृष्ट्या, विना, अपि दवाग्निः, शशाम, फलपुष्पवृद्धिः, विशेषा, आसीत्, सत्त्वेषु (मध्ये) अधिकः, ऊनं न बबाधे ।

**वाच्य०**—दवाग्निना शेमे, फलपुष्पवृद्ध्या विशेषया अभूयत, अधिकेन ऊनः न बबाधे।

**व्याख्या**—गोपायतीति गोप्ता तस्मिन् गोप्तरि = रक्षके, वनं = काननं, गाहते असौ गाहमानः तस्मिन् गाहमाने = प्रविशति ( सति ), वृष्ट्या = वर्षणेन, विना = अन्तरेण, अपि: = विरोधे, दवस्य = वनस्य, अग्निः = वह्निः, इति दवाग्निः "दवदावौ वनानले" इति हैमः। शशाम = अशमत, फलानां = सस्यानां, पुष्पाणां = कुसुमानां, वृद्धिः = समृद्धिः, विशेषा = अधिका, आसीत् = अभवत्, सत्त्वेषु = जन्तुषु (मध्ये) अधिकः = प्रबलः व्याघ्रादिः, ऊनं = दुर्बलं हरिणादिकं, न बबाधे = न पीडयामास।

**समा०**—दवस्य अग्निः दवाग्निः। फलानि च पुष्पाणि च फलपुष्पाणि, फलपुष्पाणां वृद्धिः फलपुष्पवृद्धिः। गाहते इति गाहमानः तस्मिन्, गाहमाने।

**अभि०**—जगत्पालकस्य राज्ञो दिलीपस्य प्रभावातिशयेन वनप्रवेशक्षण एव वनाग्निः स्वयमेव शान्तोऽभूत्, फलपुष्पवृद्धिः विशिष्टा जाता, प्राणिषु च वैरत्यागः जातः।

**हिन्दी**—जगत् की रक्षा करने वाले राजा दिलीप के वन में प्रवेश करते ही वर्षा के विना भी वन की अग्नि शान्त हो गई तथा फल-पुष्पों की खूब वृद्धि हुई और जंगली जन्तुओं के बीच में प्रबल सिंहादि अपने से दुर्बल हरिणादि को नहीं सताने लगे। अर्थात् राजा के वन में प्रवेश करते ही सब उपद्रव शान्त हो गए ॥१४॥

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥१५॥

**सञ्जीविनी**—पल्लवस्य रागो वर्णः पल्लवरागः। 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति शाश्वतः। स इव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः। 'पतङ्गः पक्षिसूर्ययोः' इति शाश्वतः। मुनेर्धेनुश्च। दिगन्तराणि दिशामवकाशान्। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। संचारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय। धेनुपक्ष आलयाय च। गन्तुं प्रचक्रमे उपक्रान्तवती ॥१५॥

**अन्वय:**—पल्लवरागताम्रा, पतङ्गस्य, प्रभा, मुनेः, धेनुः, च दिगन्तराणि सञ्चारपूतानि, कृत्वा, दिनान्ते, निलयाय, गन्तुम् प्रचक्रमे।

**वाच्य०**—पल्लवरागताम्रया पतंगस्य प्रभया मुनेः धेन्वा च गन्तुं प्रचक्रमे।

**व्याख्या**—पल्लवस्य=किसलयस्य, नवपत्रस्येत्यर्थः, रागः=वर्णः, इति पल्लवरागः स इव ताम्रा=अरुणा इति पल्लवरागताम्रा, पतङ्गस्य=सूर्यस्य "पतंगः पक्षिसूर्ययोः" इति शाश्वतः। प्रभा=कान्तिः, मुनेः=महर्षिवशिष्ठस्य, धेनुः=नन्दिनी, चः=समुच्चये, दिशां=काष्ठानाम्, अन्तराणि=मध्यमार्गान् इति दिगन्तराणि, सञ्चारेण=गमनेन, पूतानि=पवित्राणि, कृत्वा=विधाय, दिनस्य=दिवसस्य, अन्तः=अवसानम्, तस्मिन् दिनान्ते=सायंकाले, निलयाय=(प्रभापक्षे) अस्तमयाय (धेनुपक्षे) गृहाय, गन्तुं=यातुं, प्रचक्रमे=उपक्रमं चकार।

**समा०**—पल्लवस्य रागः पल्लवरागः, पल्लवराग इव ताम्रा पल्लवरागताम्रा। दिशाम्, अन्तराणि दिगन्तराणि तानि दिगन्तराणि। दिनस्य अन्तः दिनान्तः, तस्मिन् दिनान्ते।

**अभि०**—यथा सायंकाले सूर्यप्रभा अस्तमयाय उपक्रमं करोति तथैव वशिष्ठधेनुरपि सायं वशिष्ठाश्रमं गन्तुमुद्यता अभूत्।

**हिन्दी**—पल्लववर्ण के समान लाल वर्ण वाली सूर्य की प्रभा तथा वशिष्ठ जी की धेनु ये दोनों, दिशाओं के मध्यभाग को अपने २ गमन से पवित्र करके दिन के अन्त में, प्रभा अस्त होने के लिये और धेनु अपने आश्रम में पहुँचने के लिये तैयार हो गईं॥१५॥

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना॥१६॥

**सञ्जीविनी**—मध्यमलोकपालो भूपालः। देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजन यस्यास्तां धेनुमन्वगनुपदं ययौ। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः। सतां मतेन सद्भिर्मान्येन। "गतिबुद्धि" इत्यादिना वर्तमाने क्तः। "क्तस्य च वर्तमाने" इति षष्ठी। तेन राज्ञोपपन्ना युक्ता सा धेनुः। सतां मतेन विधिनानुष्ठानेनोपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धास्तिक्यबुद्धिरिव बभौ च॥१६॥

**अन्वयः**—मध्यमलोकपालः, देवतापित्रतिथिक्रियार्थां, ताम्, अन्वक्, ययौ, सतां, मतेन, तेन, उपपन्ना, सा (सतां मतेन) विधिना (उपपन्ना) साक्षात्, श्रद्धा, इव, बभौ ।

**वाच्य०**—मध्यमलोकपालेन, सा, अन्वग्, यये, उपपन्नया तया साक्षात्, श्रद्धया, इव बभे ।

**व्याख्या**—मध्ये भवः मध्यमः, मध्यमश्चासौ लोक इति मध्यमलोकः, तम्पालयतीति मध्यमलोकपालः = भूलोकरक्षकः । देवताः = देवाश्च, पितरः = परलोकगताश्च, अतिथयः = पाघुणिकाश्च, इति देवतापित्रतिथयः, तेषां क्रिया = यज्ञश्राद्धदानानि ता एवार्थः प्रयोजनं यस्याः सा तां तथोक्ताम्, तां = नन्दिनीम्, वनात्परावर्तमानामिति यावत् । अन्वग् = अनुपदम् , ययौ = जगाम । सतां = सज्जनानां, मतेन = पूजितेन, तेन = राज्ञा दिलीपेन, उपपन्ना = युक्ता, सा = धेनुः, सतां मतेन = साधुजनाचरितेन, विधिना = विधानेन, उपपन्ना = युक्ता, साक्षात् = प्रत्यक्षा, श्रद्धा = आस्तिक्यबुद्धिः, इव = यथा, बभौ = शुशुभे ।

**समा०**—मध्ये भवः मध्यमः मध्यमश्चासौ लोकश्च मध्यमलोकः, मध्यमलोकं पालयतीति मध्यमलोकपालः । देवताश्च पितरश्च अतिथयश्च देवतापित्रतिथयः, देवतापित्रतिथीनां क्रियैव अर्थः यस्याः सा देवतापित्रतिथिक्रियार्था, तां देवतापित्रतिथिक्रियार्थाम् ।

**अभि०**—राजा दिलीपः यज्ञादिसाधिकां तां धेनुमनुगच्छन् सन् ययौ, साधुजनपूजितेन तेन युक्ता सती सा धेनुरपि साक्षात् विधिना युक्ता आस्तिक्यबुद्धिरिव शुशुभे ।

**हिन्दी**—मृत्युलोक की रक्षा करने वाले राजा दिलीप, देव, पितर एवं अतिथियों के कार्य यज्ञ, श्राद्ध तथा भोजन को सिद्ध करनेवाली उस गौ के पीछे-पीछे चले, और सज्जनों से पूजित राजा से युक्त वह गौ भी सज्जनों द्वारा किये गये अनुष्ठान से युक्त श्रद्धा जैसी सुशोभित होती है उसी प्रकार सुशोभित होने लगी ॥१६॥

**स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।**
**ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥**

**सञ्जीविनी**—स राजा । पल्वलेभ्योऽल्पजलाशयेभ्य उत्तीर्णानि निर्गतानि

वराहाणां यूथानि कुलानि येषु तानि। बर्हाण्येषां सन्तीति बर्हिणा मयूराः। 'मयूरो बर्हिणो बर्ही' इत्यमरः। फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः। आवासवृक्षाणामुन्मुखा बर्हिणा येषु तानि, श्यामायमानानि वराहबर्हिणादिमलिनिम्ना श्यामानि। श्यामानि भवन्तीति श्यामायमानानि। "लोहितादिडाज्भ्यः क्यष्" इति क्यष्प्रत्ययः। "वा क्यषः" इत्यात्मनेपदे शानच्। मृगैरध्यासिता अधिष्ठिताः शाद्वला येषु तानि। शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। 'शाद्वलः शादहरिते' इत्यमरः। 'शादः कर्दमशष्पयोः' इति विश्वः। "नडशादाड्ड्वलच्" इति ड्वलच्प्रत्ययः। वनानि पश्यन्ययौ।

**अन्वयः**—सः, पल्वलोत्तीर्णवराहयूथानि, आवासवृक्षोन्मुखबर्हिणानि, मृगाध्यासितशाद्वलानि, श्यामायमानानि वनानि, पश्यन् (सन्) ययौ।

**वाच्य०**—तेन वनानि पश्यता सता ययें।

**व्याख्या**—सः=राजा दिलीपः, पल्वलेभ्यः=अल्पजलाशयेभ्यः, उत्तीर्णानि=निर्गतानि, वराहाणां=शूकराणां, यूथानि=समूहाः=कुलानि येषु तानि तथोक्तानि, आवासस्य=निवासस्य, वृक्षाः=पादपाः इति, आवास वृक्षास्तेषामुन्मुखाः=अभिमुखाः, आवासवृक्षोन्मुखाः, बर्हिणाः=मयूराः सन्ति येषु तानि तथोक्तानि, मृगैः=हरिणैः, अध्यासिताः=अधिष्ठिताः, शाद्वलाः=शादहरिताः=हरिततृणप्रदेशाः, येषु तानि तथोक्तानि, न श्यामानि अश्यामानि अश्यामानि श्यामानि भवन्तीति श्यामायमानानि=कृष्णीभूतानि, वनानि=काननानि, पश्यन्=अवलोकयन् (सन्) ययौ=जगाम।

**समा०**—वराहाणां यूथानि वराहयूथानि, पल्वलेभ्यः उत्तीर्णानि वराहयूथानि येषु तानि पल्वलोत्तीर्णवराहयूथानि तानि पल्वलोत्तीर्णवराहयूथानि। आवासस्य वृक्षाः आवासवृक्षाः, उद्गतं मुखं येषां ते उन्मखाः, उन्मुखाश्च ते बर्हिणाश्च उन्मुखबर्हिणाः, आवासवृक्षाणां उन्मुखबर्हिणाः येषां तानि आवासवृक्षोन्मुखबर्हिणानि तानि आवासवृक्षोन्मुखबर्हिणानि। शादः एषां अस्तीति शाद्वलाः, मृगैः अध्यासिताः शाद्वलाः येषां तानि मृगाध्यासितशाद्वलानि तानि मृगाध्यासितशाद्वलानि। अश्यामानि श्यामानि भवन्तीति श्यामायमानानि, तानि श्यामायमानानि।

**अभि०**—स राजा दिलीपः, येषु स्वल्पजलाशयेभ्यः शूकरकुलानि निःसरन्ति,

येषु च निजनिवासवृक्षान् प्रति मयूरा उन्मुखाः सन्ति, येषु च मृगाः हरितघासेषु उपविशन्ति, तानि श्यामीभूतानि वनानि पश्यन् वशिष्ठाश्रमं प्रति जगाम।

**हिन्दी**—वह राजा दिलीप छोटे २ तालावों से निकले जंगली शूकरों के झुण्डवाले, अपने निवासवृक्षों पर ऊपर की ओर देखते हुए मोरों वाले और मृग जिनपर बैठे हैं ऐसे हरी घासों से युक्त प्रदेश वाले, अतः सर्वत्र श्यामायमान वनों को देखता हुआ जाने लगा ॥१७॥

आपीनभारोद्वहनप्रयत्नाद् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥१८॥

**सञ्जीविनी**—गृष्टिः सकृत्प्रसूता गौः। 'गृष्टिः सकृत्प्रसूता गौः' इति हलायुधः। नरेन्द्रश्च उभौ यथाक्रमम्। आपीनमूधः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। आपीनस्य भारोद्वहने प्रयत्नात्प्रयासात्। वपुषो देहस्य गुरुत्वादाधिक्याच्च। अञ्चिताभ्यां चारुभ्यां गताभ्यां गमनाभ्यां तपोवनादावृत्तेः पन्थास्तं तपोवनावृत्तिपथम्। "ऋक्पूरब्धूः पथामानक्षे" इत्यनेन समासान्तोऽच्प्रत्ययः। अलंचक्रतुर्भूषितवन्तौ ॥१८॥

**अन्वयः**—गृष्टिः, नरेन्द्रः (च) उभौ, आपीनभारोद्वहनप्रयत्नात्, वपुषः, गुरुत्वात् अञ्चिताभ्यां, गताभ्यां, तपोवनावृत्तिपथम्, अलञ्चक्रतुः॥

**वाच्य०**—गृष्टया, नरेन्द्रेण चोभाभ्यां तपोवनावृत्तिपथः, अलञ्चक्रे।

**व्याख्या**—गृष्टिः = सकृत्प्रसूता गौः, नरेषु इन्द्र इति नरेन्द्रः = दिलीपः (च) उभौ = यथाक्रमम्, नन्दिनीदिलीपौ, आपीनस्य = ऊधसः, भारः, तस्य उद्वहनं = धारणं, तत्र प्रयत्नः = प्रयासः, तस्मात्, आपीनभारोद्वहनप्रयत्नात् वपुषः = शरीरस्य, गुरोर्भावः गुरुत्वं तस्मात् गुरुत्वात् = आधिक्यात्, अञ्चिताभ्यां = सुन्दराभ्यां, गताभ्यां = गमनाभ्यां, तपसः = तपस्यायाः, वनं = काननम्, इति तपोवनम्, तपोवनात्, आवृत्तेः = आगमनस्य, पन्थाः = मार्गः, तं तथोक्तम्, अलंचक्रतुः = शोभितवन्तौ।

**समा०**—आपीनस्य भारः आपीनभारः, आपीनभारस्य उद्वहनम् आपीनभारोद्वहनम्, आपीनभारोद्वहने प्रयत्नः आपीनभारोद्वहनप्रयत्नः, तस्मात् आपीनभारोद्वहनप्रयत्नात्। गुरुणः भावः गुरुत्वम्, तस्मात् गुरुत्वात्। नरेषु इन्द्रः नरेन्द्रः। तपसः वनं तपोवनम्, आवृत्तेः पन्थाः आवृत्तिपथः, तपोवनात् आवृत्तिपथः तपोवनावृत्तिपथः, तं तपोववावृत्तिपथम्।

**अभि०**—नन्दिनी, आपीनभारवहनप्रयासात् दिलीपश्च निजदेहस्य स्थौल्यात्, द्वावप्येतौ सुन्दरगमनाभ्यां तपोवनात् प्रत्यागमनमार्गं शोभितवन्तौ ।

**हिन्दी**—प्रथम बार ब्याई हुई नन्दिनी ने स्तनों के भार वहन करने में परिश्रम के कारण और राजा दिलीप ने शरीर की मोटाई के कारण, अपने २ सुन्दर मन्द गमन से तपोवन से लौटने के मार्ग को सुशोभित किया ॥

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥१९॥

**सञ्जीविनी**—वसिष्ठधेनोरनुयायिनमनुचरं वनान्तादावर्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषेष्वलसा मन्दा पक्ष्मणां पङ्क्तिर्यस्याः सा। निर्निमेषा सतीत्यर्थः। लोचनाभ्यां करणाभ्याम्। उपोषिताभ्यामिव उपवासो भोजननिवृत्तिः तद्वद्भ्यामिव। वसतेः कर्त्तरि क्तः। पपौ। यथोपोषितोऽतितृष्णया जलमधिकं पिबति तद्वदतितृष्णयाधिकं व्यलोकयदित्यर्थः ॥१९॥

**अन्वयः**—**वशिष्ठधेनोः, अनुयायिनम्, वनान्तात्, आवर्तमानम्, तम्, वनिता निमेषालसपक्ष्मपङ्क्तिः (सती) लोचनाभ्याम्, उपोषिताभ्याम्, इव, पपौ ।**

**वाच्य०**—अनुयायी, वनान्तात् आवर्तमानः, सः, वनितया, पपे ।

**व्याख्या**—वशिष्ठस्य = महर्षेः, धेनुः = नन्दिनी, तस्याः वशिष्ठधेनोः। अनुयायिनम् = अनुचरं = सेवकमित्यर्थः। वनस्य = अरण्यस्य, अन्तः = प्रान्तः, तस्मात् वनान्तात् = वनैकदेशात्। आवर्तते असौ आवर्तमानस्तमावर्तमानम् = प्रत्यागतम्, तम् = राजानं दिलीपम्। वनिता = सुदक्षिणा निमेषेषु अलसा निमेषालसा। पक्ष्मणां पङ्क्तिः, इति पक्ष्मपङ्क्तिः, निमेषालसा पक्ष्मपङ्क्तिर्यस्याः सा तथोक्ता निर्निमेषा सती। लोच्यते आभ्यामिति लोचने ताभ्यां लोचनाभ्याम् = नेत्राभ्याम्, करणाभ्यामिति यावत्। उपोषिताभ्याम् = कृतोपवासाभ्याम्, इव = यथा, पपौ = पीतवती, अतितृष्णया ददर्शेत्यर्थः।

**समा०**—वसिष्ठस्य धेनुः वसिष्ठधेनुः, तस्याः वसिष्ठधेनोः। अनु यातीति अनुयायी, तम् अनुयायिनम्। वनस्य अन्तः वनान्तः, तस्मात् वनान्तात्। आवर्तते इति आवर्तमानः, तम् आवर्तमानम्। पक्ष्मणां पङ्क्तिः पक्ष्मपङ्क्तिः, निमेषेषु अलसा पक्ष्मपङ्क्तिः यस्याः सा निमेषालसपक्ष्मपङ्क्तिः।

**अभि०**—यथा कश्चित् कृतोरवासः,अतितृष्णया मुहुः जलं पीत्वापि तृप्तिं नाधिगच्छति तथैव सुदक्षिणा वनात् प्रत्यागच्छन्तं राजानं दिलीपमतितृष्णया नेत्राभ्यां निर्निमेषाभ्यां ददर्श ।

**हिन्दी**—महर्षि वशिष्ठजी की धेनु के सेवक, वन से लौटते हुए राजा दिलीप को उनकी पत्नी सुदक्षिणा ने प्यासे की तरह एकटक नेत्रों से इस प्रकार देखा जिसमें पलकें भी न झपकने पायें ॥१९॥

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥२०॥**

**सञ्जीविनी**—वर्त्मनि पार्थिवेन पृथिव्या ईश्वरेण । "तस्येश्वरः" इत्यञ्प्रत्ययः । पुरस्कृताग्रतः कृता धर्मस्य पत्नी धर्मपत्नी । धर्मार्थं पत्नीत्यर्थः । अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । पार्थिवस्य धर्मपत्न्या प्रत्युद्गता सा धेनुस्तदन्तरे तयोर्दम्पत्योर्मध्ये । दिनक्षपयोर्दिनरात्र्योर्मध्यगता संध्येव रराज ॥२०॥

**अन्वयः**—**वर्त्मनि, पार्थिवेन, पुरस्कृता, पार्थिवधर्मपत्न्या, प्रत्युद्गता, सा, धेनुः, तदन्तरे, दिनक्षपामध्यगता, सन्ध्या, इव विरराज ।**

**वाच्य०**—पुरस्कृतया, प्रत्युद्गतया, तया, धेन्वा, सन्ध्यया, इव, विरेजे ।

**व्याख्या**—वर्त्मनि = मार्गे । पृथिव्याः ईश्वरः पार्थिवस्तेन, पार्थिवेन = राज्ञा दिलीपेन । पुरस्कृता = अग्रतः कृता । पार्थिवस्य = दिलीपस्य, धर्मपत्नी = सुदक्षिणा, इति पार्थिवधर्मपत्नी, तया, प्रत्युद्गता = अभ्युद्गता (स्वागतार्थमिति भावः)सा धेनुः = नन्दिनी । तयोः = सुदक्षिणादिलीपयोः, अन्तरे = मध्ये, स्थिता, दिनं = दिवसश्च, क्षपा = रात्रिश्चेति दिनक्षपे, तयोर्मध्यमिति दिनक्षपामध्यम्, दिनक्षपामध्यं गता = प्राप्ता, तथोक्ता, सन्ध्या = सायंकालः, इव = यथा, विरराज = शुशुभे ।

**समा०**—पृथिव्याः ईश्वरः पार्थिवः, तेन पार्थिवेन । धर्मस्य पत्नी धर्मपत्नी, पार्थिवस्य धर्मपत्नी, पार्थिवधर्मपत्नी,तया पार्थिवधर्मपत्न्या। तयोः अन्तरं तदन्तरम्, तस्मिन् तदन्तरे । दिनञ्च क्षपा च दिनक्षपे, तयोर्मध्यङ्गता दिनक्षपामध्यगता ।

**अभि०**—यदा नन्दिनीमग्रतः कृत्वा, दिलीपो वशिष्ठाश्रमं प्रापत्, तदा—दिलीपानुगम्यमानां तां धेनुमानेतुं सुदक्षिणाप्रत्युद्ययौ, तस्मिन् काले च सुदक्षिणादिलीपयोर्मध्यगता नन्दिनी, ईषद्रक्तवर्णतया, दिनक्षपामध्यगता सन्ध्या इव शुशुभे ।

**हिन्दी**—मार्ग में राजा दिलीप नन्दिनी को आगे करके स्वयं उसके पीछे २ आ रहे थे तथा महारानी सुदक्षिणा अगवानी के लिये उसके आगे से गई, वह नन्दिनी सुदक्षिणा और दिलीप के बीचमें खड़ी दिन और रात के बीचमें स्थित सन्ध्या की तरह सुशोभित हुई ॥२०॥

**प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।**
**प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥२१॥**

**सञ्जीविनी**—अक्षतानां पात्रेण सह वर्तेते इति साक्षतपात्रौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनीं प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च तस्या धेन्वा विशालं शृङ्गान्तरं शृङ्गमध्यम् अर्थसिद्धेः कार्यसिद्धेर्द्वारं प्रवेशमार्गमिव। आनर्चार्चयामास। अर्चतेर्भौवादिकाल्लिट् ॥२१॥

**अन्वयः—साक्षतपात्रहस्ता, सुदक्षिणा, तां, पयस्विनीं, प्रदक्षिणीकृत्य, प्रणम्य, च, अस्याः विशालं, शृङ्गान्तरम्, अर्थसिद्धेः, द्वारम्, इव, आनर्च ।**

**वाच्य०**—सुदक्षिणया शृङ्गान्तरम् आनर्चे ।

**व्याख्या**—अक्षतानां = तण्डुलानाम्, पात्रम् = भाजनम्, इति अक्षतपात्रम्, तेन सह वर्तेते, इति साक्षतपात्रौ, हस्तौ = करौ, यस्याः सा, साक्षतपात्रहस्ता, सुदक्षिणा = दिलीपभार्या, प्रशस्तं पयोऽस्या अस्तीति पयस्विनी, तां, पयस्विनीं = प्रशस्तक्षीराम्, ताम्, धेनुम्, प्रदक्षिणं कृत्वा, प्रदक्षिणीकृत्य = परिक्रम्य, प्रणम्य = नमस्कृत्य च, अस्या. नन्दिन्याः, विशालं = विस्तीर्णम्, शृंगयोः = विषाणयोः, अन्तरं = मध्यम्, अर्थस्य = कार्यस्य, सिद्धिः = सफलता, तस्याः। अर्थसिद्धेः, = सन्तानरूपकार्यसिद्धेरिति भावः, द्वारं = प्रवेशमार्गम्, इव = यथा, आनर्च = पूजयामास।

**समा०**—अक्षतानां पात्रम् अक्षतपात्रम्, अक्षतपात्रेण सह वर्तेते इति साक्षतपात्रौ, साक्षतपात्रौ हस्तौ यस्याः सा साक्षतपात्रहस्ता। प्रशस्तं पयः अस्त्यस्याः इति पयस्विनी, तां पयस्विनीम्। प्रगतो दक्षिणं प्रदक्षिणम्, अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वेति प्रदक्षिणीकृत्य। शृङ्गयोः अन्तरं शृङ्गान्तरम्, तत् शृङ्गान्तरम्। अर्थस्य सिद्धिः अर्थसिद्धिः, तस्याः अर्थसिद्धेः।

**अभि०**—सुदक्षिणा, वनादागतां वशिष्ठधेनुं सम्पूज्य परिक्रम्य, प्रणम्य च, पुष्पाक्षतैस्तस्याः शृङ्गान्तरं, पुत्रप्राप्तिरूपस्वाभीष्टसिद्धेः, द्वारमिव, पूजयामास।

**हिन्दी**—अक्षतों के पात्र को हाथ में लिये रानी सुदक्षिणा ने प्रशस्त दूधवाली उस नन्दिनी की प्रदक्षिणा एवं प्रणाम करके, उसके विशाल सींगो के मध्य भाग का, सन्तानप्राप्ति रूप कार्य सिद्धि के द्वार की तरह पूजन किया ॥२१॥

**वत्सोत्सुकाऽपि स्तिमिता सपर्य्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥२२॥**

**सञ्जीविनी**—सा धेनुर्वत्सोत्सुकापि वत्स उत्कण्ठितापि स्तिमिता निश्चला सती सपर्यां पूजां प्रत्यग्रहीदिति हेतोस्तौ दंपती ननन्दतुः । पूजास्वीकारस्यानन्दहेतुत्वमाह । भक्त्येति । पूज्येष्वनुरागो भक्तिः तयोपपन्नेषु विषये तद्विधानाम् । तस्याः धेन्वाः विधेव विधा प्रकारो येषां तेषाम् । महतामित्यर्थः । प्रसादस्य चिह्नानि लिङ्गानि पूजास्वीकारादीनि पुरःफलानि पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यत इत्यर्थः ॥२२॥

**अन्वयः—सा, वत्सोत्सुका, अपि, स्तिमिता, "सती" सपर्याम्, प्रत्यग्रहीत्, इति, तौ, ननन्दतुः, भक्त्या, उपपन्नेषु, तद्विधानां, प्रसादचिह्नानि, पुरःफलानि हि ।**

**वाच्य०**—तया स्तिमितया, सत्या, सपर्या, प्रत्यग्राहि इति ताभ्यां ननन्दे, प्रसादचिह्नैः पुरःफलैः भूयते, इति शेषः ।

**व्याख्या**—सा = धेनुः, वत्से = शिशौ, उत्सुका = उत्कण्ठिता, अपि, स्तिमिता = निश्चला, "सती" सपर्यां = पूजां, प्रत्यग्रहीत् = स्वीचकार, इति = हेतोः, तौ = सुदक्षिणादिलीपौ, ननन्दतुः = मुमुदाते, = आनन्दं प्रापतुरित्यर्थः । भक्त्या = श्रद्धया, उपपन्नेषु = युक्तेषु, पूज्यानुरागयुक्तेष्वित्यर्थः । तस्याः-धेन्वाः, विधा इव विधा = प्रकारः येषां ते, तेषां तद्विधानाम् = महताम् प्रसादस्य = प्रसन्नतायाः, चिह्नानि, लक्षणानि, इति, प्रसादचिह्नानि = पूजास्वीकारादीनि, पुरोगतानि = प्रत्यासन्नानि, फलानि = लाभाः, येषां तानि, पुरःफलानि, हि निश्चयः ।

**समा०**—वत्से उत्सुका वत्सोत्सुका । सा च स च तौ । तस्याः विधेव विधा येषां ते तद्विधाः, तेषां तद्विधानाम् । प्रसादस्य चिह्नानि प्रसादचिह्नानि । पुरः फलं येषां तानि पुरःफलानि ।

**अभि०**—वत्सोत्कण्ठितापि वशिष्ठधेनुः यत् निश्चला सती पूजां स्वीकृतवती, अतः सद्योभाविनीं स्वाभीष्टसिद्धिं मत्वा सुदक्षिणादिलीपौ, ननन्दतुः ।

**हिन्दी**—अपने बछड़े को देखने के लिये उत्कण्ठित होते हुए भी निश्चल होकर जो नन्दिनी ने सुदक्षिणा के द्वारा की गई पूजा को स्वीकार किया, इससे राजा रानी प्रसन्न हुए। क्योंकि अपने अनुरागी जनों के विषय में, नन्दिनी सदृश महानुभावों की प्रसन्नता के लक्षण, शीघ्र मनोरथ पूर्ण होने का निश्चय प्रकट करते हैं॥२२॥

**गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च विधिं दिलीपः।**
**दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम्॥२३॥**

**सञ्जीविनी**– भुजोच्छिन्नरिपुर्दिलीपः। सदारस्य दारैररुन्धत्या सह वर्तमानस्य गुरोः। उभयोरपीत्यर्थः। 'भार्या जायाथ पुंभूम्नि दाराः' इत्यमरः। पादौ निपीड्याभिवन्द्य। सान्ध्यं संध्यायां विहितं विधिमनुष्ठानं च समाप्य। दोहावसाने निषण्णामासीनां दोग्ध्रीं दोहनशीलाम्। ''तृन्' इति तृन्प्रत्ययः। धेनुमेव पुनर्भेजे सेवितवान्। दोग्ध्रीमिति निरुपपदप्रयोगात्कामधेनुत्वं गम्यते॥२३॥

**अन्वयः**—**भुजोच्छिन्नरिपुः, दिलीपः, सदारस्य, गुरोः, पादौ, निपीड्य, सान्ध्यं, विधिं, च, समाप्य, दोहावसाने, निषण्णां, दोग्ध्रीम्, एव, पुनः, भेजे।**

**वाच्य०**—भुजोच्छिन्नरिपुणा दिलीपेन, निषण्णा दोग्ध्री पुनः, भेजे।

**व्याख्या**—भुजाभ्यां = बाहुभ्याम्, उच्छिन्नाः = विनाशिताः, रिपवः = शत्रवो येन सः, भुजोच्छिन्नरिपुः। दिलीपः = राजा, दारैः = अरुन्धत्या, सह वर्तमानः, तस्य सदारस्य, पादौ = चरणौ, निपीड्य = संवाह्य (अभिवन्द्येत्यर्थः), सन्ध्यायां भवं सान्ध्यं सन्ध्याकालिकं, विधिम् = अनुष्ठानं च, समाप्य = विधाय (कृत्वेत्यर्थः), दोहस्य = दोहनस्य, अवसानम् = अन्तस्तस्मिन्, दोहावसाने, निषण्णाम् = उपविष्टाम्, दोग्ध्री = दोहनशीलां धेनुम्, एव (अवधारणे) पुनः = भूयोऽपि, भेजे = सेवितवान्। धेनुमेव सिषेवे, इति भावः।

**समा०**—भुजाभ्याम् उच्छिन्नाः रिपवः येन सः भुजोच्छिन्नरिपुः। दारैः सह वर्तते इति सदारः, तस्य सदारस्य। गृणाति (तत्त्वं कथयति) इति गुरुः तस्य गुरोः। सन्ध्यायां भवः सान्ध्यः, तं सान्ध्यम्। दोहस्य अवसानं दोहावसानम्, तस्मिन् दोहावसाने।

**अभि०**—सपत्नी को राजा दिलीपः, सदारस्य वशिष्ठस्य चरणसंवाहनं कृत्वा, सायन्तनीं विधिं च विधाय, पुनरपि नन्दिनीमेव सेवितवान्।

**हिन्दी**—निज बाहुबल से शत्रुओं को नष्ट करने वाले राजा दिलीप ने अरुन्धती और वशिष्ठजी की चरण सेवा करने के बाद और सायं सन्ध्या से निवृत्त होकर दूध दुहने के पश्चात् सानन्द बैठी हुई नन्दिनी की सेवा पुनः शुरू कर दी ।।२३।।

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनुसंविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ।।२४।।

**सञ्जीविनी**—गोप्ता रक्षको गृहिणीसहायः पत्नीद्वितीयः सन् । उभावपीत्यर्थः । अन्तिके न्यस्ता बलयः प्रदीपाश्च यस्यास्तां तथोक्तां तां पूर्वोक्तां निषण्णां धेनुमन्वास्यानूपविश्य क्रमेण सुप्तामन्वनन्तरं संविवेश सुष्वाप । प्रातः सुप्तोत्थितामनूदतिष्ठदुत्थितवान् । अत्रानुशब्देन धेनुराजव्यापारयोः पौर्वापर्यमुच्यते । क्रमशब्देन धेनुव्यापाराणामेव । इत्यपौनरुक्त्यम् । "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया ।।२४।।

**अन्वयः**—गोप्ता, गृहणीसहायः 'सन्' अन्तिकन्यस्तबलिप्रदीपां, ताम्, अन्वास्य, क्रमेण, सुप्ताम्, अनुसंविवेश, प्रातः, सुप्तोत्थिताम्, अनूदतिष्ठत् ।

**वाच्य०**—गोप्त्रा, गृहिणीसहायेन 'सता' सुप्ता, अनुसंविविशे, उदस्थीयत ।

**व्याख्या**—गोप्ता = रक्षकः दिलीपः, गृहिणी = भार्या सहाया = द्वितीया यस्य सः, गृहिणीसहायः सन् ( द्वावपीत्यर्थः ), अन्तिके = समीपे, न्यस्ताः = स्थापिताः, बलयः = उपहाराः प्रदीपाः = दीपाश्च, यस्याः सा तां तथोक्ताम्, तां = निषण्णां धेनुम्, अन्वास्य = अनूपविश्य, क्रमेण = क्रमशः, सुप्तां = निद्रिताम्, अनु = पश्चात्, संविवेश = शिश्ये, प्रातः = प्रभाते, आदौ सुप्ता = शयिता, पश्चात्, उत्थिता = विनिद्रिता ताम्, सुप्तोत्थिताम्, अनु = पश्चात्, उदतिष्ठत् = उत्तस्थौ ।

**समा०**—गृहिणी सहाया यस्य सः गृहिणीसहायः । बलयश्च (बलेर्वा) प्रदीपाश्च बलिप्रदीपाः, अन्तिके न्यस्ताः बलिप्रदीपाः यस्याः सा अन्तिकन्यस्तबलिप्रदीपा, ताम् अन्तिकन्यस्तबलिप्रदीपाम् । सुप्ता चासौ (पश्चात्) उत्थिता च सुप्तोत्थिता, तां सुप्तोत्थिताम् ।

**अभि०**—सुदक्षिणासहितः राजा दिलीपः समीपस्थापितबलिप्रदीपायाः

नन्दिन्याः पृष्ठभागे समुपविश्य, नन्दिन्यां सुप्तायां सत्यां पश्चात् स्वयं सपत्नीकः सुष्वाप, प्रभाते च उत्थितायां तस्यामनूदतिष्ठत् ।

**हिन्दी**—रक्षा करने वाले सपत्नीक राजा दिलीप, पास में रखा है उपहार दीपक जिसके ऐसी बैठी हुई उस धेनु के पीछे बैठकर क्रमसे नन्दिनी के सोने पर सोये, और प्रातःकाल जगते ही स्वयं भी जग गये ।।२४।।

इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ।।२५।।

**सञ्जीविनी**—इत्थमनेन प्रकारेण प्रजार्थं संतानाय महिष्या सममभिषिक्तपत्न्या सह । 'कृताभिषेका महिषी' इत्यमरः । व्रतं धारयतः महनीया पूज्या कीर्तिर्यस्य तस्य । दीनानामुद्धरणं दैन्यविमोचनं तत्रोचितस्य तस्य । नृपस्य । त्रयो गुणा आवृत्तयो येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्त दिनान्येकविंशतिदिनानि व्यतीयुर्व्यतिक्रान्तानि ।।२५।।

**अन्वयः**—इत्थम्, प्रजार्थं, महिष्या समं, व्रतं, धारयतः, महनीयकीर्तेः, दीनोद्धरणोचितस्य, तस्य, त्रिगुणानि, सप्त दिनानि, व्यतीयुः ।

**वाच्य०**—इत्थं व्रतं धारयतः महनीयकीर्तेः त्रिगुणैः सप्तभिः दिनैः व्यतीये ।

**व्याख्या**—इत्थम् = अनेन प्रकारेण, प्रजा = सन्तानः, एव, अर्थः = प्रयोजनं यस्य तत्तथोक्तम् सन्तानायेत्यर्थः, महिष्या = कृताभिषेकया सुदक्षिणया, समं = सह, व्रतं = नियमम्, धारयतः = दधतः कुर्वत इति यावत् । महनीया = पूज्या, कीर्तिः = यशो यस्य, तस्य, महनीयकीर्तेः । दीनानां = दैन्ययुक्तानाम्, उद्धरणं = रक्षणम्, तत्र, उचितः = परिचितः, इति दीनोद्धरणोचितस्तस्य तथोक्तस्य, तस्य = दिलीपस्य, त्रयो गुणा आवृत्तयो येषां तानि, त्रिगुणानि = त्रिरावृत्तानि, सप्त = सप्तसंख्यकानि, दिनानि = दिवसाः, एकविंशतिदिनानीति भावः, व्यतीयुः = व्यतिचक्रमुः ।

**समा०**—प्रजा एव अर्थः यस्य तत् प्रजार्थम्—अथवा प्रजायै इति प्रजार्थम् (अस्वपदविग्रहः), तत् प्रजार्थम् । महनीया कीर्तिः यस्य सः महनीयकीर्तिः, तस्य महनीयकीर्तेः । दीनानाम् उद्धरणम् दीनोद्धरणम्, दीनोद्धरणे उचितः दीनोद्धरणोचितः, तस्य दीनोद्धरणोचितस्य । त्रयो गुणाः येषां तानि त्रिगुणानि ।

**अभि०**—एवं पूर्वोक्तप्रकारेण सुदक्षिणया सह नन्दिनीसेवारूपं व्रतं कुर्वतो उदारकीर्तेः, दीनोद्धरणपरस्य दिलीपस्य, एकविंशतिदिवसाः व्यतीताः ।

**हिन्दी**—इस प्रकार पुत्रके लिये महारानी सुदक्षिणा के साथ व्रत को धारण करते हुए, प्रशंसनीय कीर्तिवाले, दु:खियों, के उद्धारक महाराज दिलीप के इक्कीस दिन बीत गये ॥२५॥

अन्येद्युरात्माऽनुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥२६॥

**सञ्जीविनी**—अन्येद्युरन्यस्मिन्दिने द्वाविंशे दिने । "सद्यः परुत्परारि" इत्यादिना निपातनादव्ययत्वम् । "अद्यात्राह्नाय पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् । तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ।" इत्यमरः । मुनिहोमधेनुः आत्मानुचरस्य भावमभिप्रायं दृढभक्तित्वम् । 'भावोऽभिप्राय आशयः' इति यादवः । जिज्ञासमाना ज्ञातुमिच्छन्ती । "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदे शानच् । प्रपतत्यस्मिन्निति प्रपातः पतनप्रदेशः गङ्गायाः प्रपातस्तस्यान्ते समीपे विरूढानि जातानि शष्पाणि बालतृणानि यस्मिंस्तत् । 'शष्पं बालतृणं घासः' इत्यमरः । गौरीगुरोः पार्वतीपितुर्गह्वरं गुहामाविवेश ॥२६॥

**अन्वयः**—**अन्येद्युः मुनिहोमधेनुः, आत्मानुचरस्य, तस्य, भावं, जिज्ञासमाना, गंगाप्रपातान्तविरूढशष्पं, गौरीगुरोः, गह्वरम्, आविवेश ।**

**वाच्य०**—**मुनिहोमधेन्वा जिज्ञासमानया, गह्वरमाविविशे ।**

**व्याख्या**—अन्येद्युः = अन्यस्मिन् दिने = द्वाविंशे दिने, इत्यर्थः, होमस्य धेनुः, होमधेनुः, मुनेः = वशिष्ठस्य, होमधेनुः = यज्ञसाधनभूता नन्दिनी, आत्मनः = स्वस्य, अनुचरः = सेवकः, तस्यात्मानुचरस्य दिलीपस्येति यावत्, भावम् = अभिप्रायं = दृढभक्तिमित्यर्थः, जिज्ञासते इति, जिज्ञासमाना = ज्ञातुमिच्छन्ती, प्रपतति अस्मिन्निति प्रपातः, गङ्गायाः = भागीरथ्याः प्रपातः = पतनप्रदेशः, तस्य अन्तः = समीपम्, तस्मिन् विरूढानि = उत्पन्नानि = जातानि शष्पाणि = बालतृणानि, यस्मिन् तत्तथोक्तम्, गौर्याः = पार्वत्याः, गुरुः = पिता = हिमाचलस्तस्य गौरीगुरोः, गह्वरं = गुहाम्, आविवेश = प्रविष्टवतीत्यर्थः ।

**समा०**—होमस्य धेनुः होमधेनुः, मुनेः होमधेनुः मुनिहोमधेनुः। आत्मनः अनुचरः आत्मानुचरः, तस्य आत्मानुचरस्य । ज्ञातुमिच्छति जिज्ञासते, जिज्ञासते इति

जिज्ञासमाना। गङ्गायाः प्रपातः गङ्गाप्रपातः, गङ्गाप्रपातस्य अन्ते विरूढानि शष्पाणि यस्य तत् गङ्गाप्रपातान्तविरूढशष्पम्, तत् गङ्गाप्रपातान्तविरूढशष्पम्। गौर्याः गुरुः गौरीगुरुः, तस्य गौरीगुरोः।

**अभि०**—द्वाविंशे दिने नन्दिनी दिलीपस्य भक्तिपरीक्षार्थं गङ्गाप्रपातसमीपवर्तित्वेन प्रचुरतृणमय्यां हिमालयस्य गुहायां प्रविष्टा।

**हिन्दी**—बाईसवें दिन नन्दिनी, अपने सेवक राजा दिलीप के 'मुझ में इसकी दृढ़ भक्ति है कि नहीं' इस, भाव को जानने की अभिलाषा से गंगाजी के प्रपात के पास जमी हरी २ घास से युक्त हिमालय की गुफा में घुस गई ॥२६॥

सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥२७॥

**सञ्जीविनी**—सा धेनुर्हिंस्रैर्व्याघ्रादिभिर्मनसापि दुष्प्रधर्षा दुर्धर्षेति हेतोरद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना नृपेणालक्षितमभ्युत्पतनमाभिमुख्येनोत्पतनं यस्य स सिंहस्तां धेनुं प्रसह्य हठात्। 'प्रसह्य तु हठार्थकम्' इत्यमरः। चकर्ष। किलेत्यलीकेऽव्ययम् ॥२७॥

**अन्वयः**—सा, हिंस्रैः, मनसा, अपि, दुष्प्रधर्षा, इति, अद्रिशोभाप्रहितेक्षणेन, नृपेण, अलक्षिताभ्युत्पतनः सिंहः, ताम्, प्रसह्य, चकर्ष, किल।

**वाच्य०**—तया दुष्प्रधर्षया, भूयते। सिंहेन सा चकृषे।

**व्याख्या**—सा = धेनुः, हिंस्रैः = व्याघ्रादिभिः, मनसा = चित्तेन, अपि का कथा शरीरेण दुष्प्रधर्षा = दुर्धर्षा, इति = हेतोः, अद्रेः = हिमालयस्य, शोभा = छविः, इति अद्रिशोभा, तस्यां, प्रहिते = दत्ते, ईक्षणे = नेत्रे, येन सः = तथोक्तस्तेन अद्रिशोभाप्रहितेक्षणेन, नॄन् = जनान् पाति = रक्षतीति नृपस्तेन, नृपेण = राज्ञा = दिलीपेन, न लक्षितं = न ज्ञातम्, अभ्युत्पतनम् = आक्रमणं यस्य स तथोक्तः, सिंहः = केशरी, ताम् = गाम्, प्रसह्य = हठात्, चकर्ष = कृष्टवान्, किलेति = अलीके। तदुपरि, आक्रमणमकरोदिति भावः।

**समा०**—दुःखेन प्रधृष्यते असौ इति दुष्प्रधर्षा. अद्रेः शोभा अद्रिशोभा, अद्रिशोभायां प्रहिते ईक्षणे येन सः अद्रिशोभाप्रहितेक्षणः, तेन अद्रिशोभाप्रहितेक्षणेन। न लक्षितम् अलक्षितम्, अलक्षितम् अभ्युत्पतनं यस्य सः अलक्षिताभ्युत्पतनः।

**अभि०**—व्याघ्रादयो हिंस्राः पशवः मनसापि नैनामभिभवितुं प्रभविष्यन्तीति निश्चयवति दिलीपे पर्वतरामणीयकासक्तनेत्रे अलक्षिताक्रमणः सिंहः ताम् अकाक्षीत् ।

**हिन्दी**—हिंसक दुष्ट व्याघ्रादि जन्तु इसपर आक्रमण करने की बात भी नहीं सोच सकते, आक्रमण तो दूर रहा, इस कारण निश्चिन्त होकर हिमालय की शोभा देखने में आँखें लगाये हुए राजा दिलीप से जिसका झपटना नहीं देखा गया ऐसे सिंह ने, जबरदस्ती नन्दिनी को अपनी ओर खींचा ॥२७॥

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥२८॥

**सञ्जीविनी**—गुहानिबद्धेन प्रतिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घम् । तस्या इदं तदीयम् । आक्रन्दितमार्तघोषणम् । आर्तेष्वापन्नेषु साधोर्हितकारिणो नृपस्य, नगेन्द्रसक्तां दृष्टिम् । रश्मिषु प्रग्रहेषु 'किरणप्रग्रहौ रश्मी' इत्यमरः । आदायेव-गृहीत्वेव निवर्तयामास ॥२८॥

**अन्वयः**—**गुहानिबद्धप्रतिशब्ददीर्घम्, तदीयम्, आक्रन्दितम्, आर्तसाधोः नृपस्य, नगेन्द्रसक्तां दृष्टिं, रश्मिषु, आदाय, इव, निवर्तयामास ।**

**वाच्य०**—तदीयेन, आक्रन्दितेन नगेन्द्रसक्ता दृष्टिः निवर्त्तयाञ्चक्रे ।

**व्याख्या**—गुहायां = गह्वरे, निबद्धः = प्रतिहतः, इति गुहानिबद्धः स चासौ प्रतिशब्दः = प्रतिध्वनिः, तेन दीर्घम् = आयतम्, तथोक्तम्, तस्याः = नन्दिन्याः इदं तदीयम्, आक्रन्दितम् = उच्चैः रुदितम्, आर्त्तेषु = पीडितेषु, साधुः = हित-कारी, तस्य, आर्त्तसाधोः नृपस्य = राज्ञो दिलीपस्य, नगेन्द्रे = हिमालये, सक्ता = संलग्ना, इति नगेन्द्रसक्ता तां तथोक्ताम्, दृष्टि = नेत्रं, रश्मिषु = प्रग्रहेषु, आदाय = गृहीत्वा, इव = यथा, निवर्तयामास = न्यवर्तयत् ।

**समा०**—गुहायां विबद्धः गुहानिबद्धः, गुहानिबद्धश्चासौ प्रतिशब्दश्च गुहा निबद्धप्रतिशब्दः, गुहानिबद्धप्रतिशब्देन दीर्घं गुहानिबद्धप्रतिशब्ददीर्घम् । तस्याः इदं तदीयम् । आर्तेषु साधुः आर्तसाधुः, तस्य आर्तसाधोः । नॄन् पातीति नृपः, तस्य नृपस्य । नगेषु इन्द्रः नगेन्द्रः, नगेन्द्रे सक्ता नगेन्द्रसक्ता, तां नगेन्द्रसक्ताम् ।

**अभि०**—सिंहाक्रान्ताया धेनोः, गुहायां प्रतिहतेन, प्रतिध्वनिना दीर्घमाक्र-

न्दनं हिमालयशोभादर्शने संलग्नां दिलीपदृष्टिं तथा निवर्तयामास यथा सारथिः रश्मिं गृहीत्वा हयादीन् निवर्तयति ।

**हिन्दी**—गुफा में टकराए हुए प्रतिशब्द से दुगुने हुए नन्दिनी के आर्तनाद ने दुःखियों के रक्षक राजा दिलीप की हिमालय की सुन्दरता देखने में लगी हुई दृष्टि को इस प्रकार अपनी ओर फेर लिया जिस प्रकार लगाम पकड़ कर सारथि घोड़े आदि को फेर लेते हैं ॥२८॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥२९॥

**सञ्जीविनी**—धनुर्धरः स नृपः पाटलायां, रक्तवर्णायां गवि तस्थिवांसं स्थितम्, "क्वसुश्च" इति क्वसुप्रत्ययः । केसरिणं सिंहम् । सानुमतोऽद्रेः । धातोर्गैरिकस्य विकारो धातुमयी । तस्यामधित्यकायामूर्ध्वभूमौ । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । प्रफुल्लो विकसितस्तम् । "फुल्ल विकसने" इति धातोः पचाद्यच् । 'प्रफुल्तम्' इति तकारपाठे 'ञिफला विशरणे' इति धातोः कर्तरि क्तः, "उत्परस्यातः" इत्युकारादेशः । लोध्राख्यं द्रुममिव ददर्श ॥२९॥

**अन्वयः**—**धनुर्धरः, सः, पाटलायां, गवि, तस्थिवांसं, केसरिणं, सानुमतः, धातुमय्यां, अधित्यकायां, प्रफुल्लम्, लोध्रद्रुमम्, इव, ददर्श ।**

**वाच्य०**—धनुर्धरेण, तेन, केसरी, लोध्रद्रुमः, इव, ददृशे ।

**व्याख्या**—धनुषः धर इति धनुर्धरः = चापधरः, सः = राजा = दिलीपः, पाटलायाम् = श्वेतरक्तवर्णायाम् 'श्वेतरक्तस्तु पाटलः ।' इत्यमरः । गवि = धेनौ, तस्थिवांसं = स्थितम्, केसरिणम् = सिंहं, सानूनि, सन्ति, अस्यासौ सानुमान्, तस्य सानुमतः = अद्रेः पर्वतस्येत्यर्थः, धातोः = गैरिकस्य विकारः धातुमयी तस्यां, धातुमय्यां = गैरिकवत्याम्, अधित्यकायाम् = ऊर्ध्वभूमौ, प्रफुल्लं = विकसितं, लोध्रश्चासौ द्रुमश्च इति लोध्रद्रुमस्तं लोध्रद्रुमं लोध्रवृक्षम्, इव = यथा, ददर्श = अपश्यत् ।

**समा०**—**धरतीति धरः, धनुषः धरः धनुर्धरः । केसरः अस्यास्तीति केसरी, तं केसरिणम् । सानवः अस्य सन्तीति सानुमान्, तस्य सानुमतः । धातोः विकारः धातुमयी, तस्यां धातुमय्याम् । लोध्रस्य द्रुमः लोध्रद्रुमः, तं लोध्रद्रुमम् ।**

**अभि०**—राजा दिलीपः श्वेतरक्तवर्णायां गवि, आक्रम्य स्थितं केसरिणम्, पर्वतस्य गैरिकधातुमय्यामूर्ध्वभूमौ विकसितं लोध्रद्रुममिवापश्यत् ।

**हिन्दी**—धनुषधारी उस राजा दिलीप ने श्वेतयुक्तलालवर्णवाली नन्दिनी के ऊपर बैठे हुए सिंह को पर्वत की गेरूवाली अधित्यका ( ऊपर की भूमि ) में विकसित लोध्र नामक वृक्ष की भांति देखा ॥२९॥

**ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।**
**जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥३०॥**

**सञ्जीविनी**—ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी । 'शरणं गृहरक्षित्रोः' इत्यमरः । 'शरणं रक्षणे गृहे' इति यादवः । शरणे साधुः शरण्यः । "तत्र साधुः" इति यत्प्रत्ययः । प्रसभेन बलात्कारेणोद्धृता अरयो येन स नृपती राजा जाताभिषङ्गो जातपराभवः सन् । 'अभिषङ्गः पराभवः' इत्यमरः । वध्यस्य वधार्हस्य । "दण्डादिभ्यो यः" इति यप्रत्ययः । मृगेन्द्रस्य वधाय निषङ्गात्तूणीरात् । तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । शरमुद्धर्तुमैच्छत् ॥३०॥

**अन्वयः**—ततः, मृगेन्द्रगामी, शरण्यः, प्रसभोद्धृतारिः, नृपतिः, जाताभिषङ्गः, (सन्), वध्यस्य, मृगेन्द्रस्य वधाय, निषङ्गात्, शरम्, उद्धर्तुम् ऐच्छत् ।

**वाच्य०**—नृपतिना जाताभिषंगेण "सता" शरम्, उद्धर्तुमैष्यत ।

**व्याख्या**—ततः = सिंहदर्शनानन्तरम्, मृगेन्द्रः = सिंहः, स, इव, गच्छति = यातीति मृगेन्द्रगामी = सिंहगामी, शरणे साधुः शरण्यः = शरणागतपालकः, प्रसभेन = बलात्कारेण, उद्धृताः = विनाशिताः, अरयः = शत्रवो येन सः, तथोक्तः नृपतिः = राजा दिलीपः, जातः = उत्पन्नः, अभिषङ्गः = पराभवः, यस्य सः जाताभिषङ्गः "सन्" वधमर्हतीति वध्यस्तस्य वध्यस्य = वधार्हस्य, मृगेन्द्रस्य = सिंहस्य, वधाय = नाशाय, निषंगात् = तूणीरात्, शरं = बाणम्, उद्धर्तुम् = उत्क्षेप्तुम्–निष्कासयितुमित्यर्थः, ऐच्छत् = इयेष ।

**समा०**—मृगेषु इन्द्रः मृगेन्द्रः, मृगेन्द्र इव गच्छतीति मृगेन्द्रगामी । शरणे साधुः शरण्यः । प्रसभेन उद्धृताः प्रसभोद्धृताः, प्रसभोद्धृताः अरयो येन सः प्रसभोद्धृतारिः । नृणां पतिः नृपतिः । जातः अभिषङ्गः यस्य सः जाताभिषङ्गः । वधम् अर्हतीति वध्यः ।

**अभि०**—शत्रूणां समूलमुन्मूलयिता राजा दिलीपः सिंहाक्रान्तां नन्दिनीं विलोक्य तद्रक्षकस्यात्मनः पराभवं च मत्वा तत्क्षण एव सिंहवधाय तूणीरात् शरं निष्कासितुमैच्छत् ।

**हिन्दी**—सिंह को देखने के पश्चात्, मृगेन्द्र की तरह चलनेवाले एवं शरणागतों की रक्षा करने में निपुण, बलपूर्वक शत्रुओं को उच्छिन्न करनेवाले, अपमान पाये हुए राजा दिलीप ने, दुष्ट सिंह को मारने के लिये तरकश से बाण को निकालने की इच्छा की ॥३०॥

**वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।**
**सक्तांगुलिः सायकपुंख एव चित्रार्पितारम्भ इवावतस्थे ॥३१॥**

**सञ्जीविनी**—प्रहर्तुस्तस्य वामेतरो दक्षिणः करः । नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन् । 'कङ्कः पक्षिविशेषे स्याद् गुप्ताकारे युधिष्ठिरे' इति विश्वः । 'कङ्कस्तु कर्कटः' इति यादवः । सायकस्य पुंख एव कर्तर्याख्ये मूलप्रदेशे । 'कर्तरी पुंखे' इति यादवः । सक्ताङ्गुलिः सन् । चित्रार्पितारम्भश्चित्रलिखितशरोद्धरणोद्योग इव अवतस्थे ॥३१॥

**अन्वयः**—**प्रहर्तुः, तस्य, वामेतरः, करः, नखप्रभाभूषितकङ्कपत्रे, सायकपुंखे, एव सक्तांगुलिः 'सन्' चित्रार्पितारम्भः, इव, अवतस्थे ।**

**वाच्य०**—वामेतरेण करेण सक्तांगुलिना "सता" चित्रार्पितारम्भेण, इवावतस्थे ।

**व्याख्या**—प्रहर्तुः=ताडयितुः, तस्य=राज्ञो दिलीपस्य, वामात्, इतरः, वामेतरः=दक्षिणः, करः=हस्तः, नखानां=कररुहाणां, प्रभाः=कान्तयः, नखप्रभास्ताभिः भूषितानि=विच्छुरितानि=सुशोभितानि, कङ्कस्य=पक्षिविशेषस्य, पत्राणि=पक्षा यस्य सः, नखप्रभाभूषितकङ्कपत्रः, तस्मिन् तथोक्ते, सायकस्य=बाणस्य, पुङ्खः=मूलम्, तस्मिन् सायकपुङ्खे एव, सक्ताः=संलग्नाः, अंगुलयः=करशाखाः यस्य सः, तथोक्तः "सन्", चित्रे=आलेख्ये, अर्पितः=लिखितः, आरम्भः=बाणनिष्कासनोद्योगः, यस्य स तथोक्तः, इव=यथा, अवतस्थे=अवस्थितोऽभूत् ।

**समा०**—वामाद् इतरः वामेतरः, नखानां प्रभाः नखप्रभाः, नखप्रभाभिः भूषितानि नखप्रभाभूषितानि, कङ्कस्य पत्राणि कङ्कपत्राणि, नखप्रभाभूषितानि कङ्क-

पत्राणि यस्य सः नखप्रभाभूषितकङ्कपत्र:,तस्मिन् नखप्रभाभूषितकङ्कपत्रे। सायकस्य पुङ्ख: सायकपुङ्खः, तस्मिन् सायकपुङ्खे। सक्ताः अङ्गुलयो यस्य सः सक्ताङ्गुलिः। चित्रे अर्पितः चित्रार्पित:, चित्रार्पितः आरम्भो यस्य सः चित्रार्पितारम्भः।

**अर्थ०**—प्रहर्तुमिच्छया निषङ्गात् शरोद्धर्तुकामस्य राज्ञो दक्षिणकरः बाणमूले एव सक्ताङ्गुलिः अभवत्, अतः चित्रपटे लिखितं वस्तु यथा निश्चेष्टं दृश्यते तथैवायमपि तदानीं स्थितोऽवलोक्यते स्म।

**हिन्दी**—सिंह के ऊपर प्रहार करने की इच्छा रखनेवाले राजा दिलीप का दाहिना हाथ, अपने नख की कान्ति से भूषित, कंकपक्षी के पंख जिसमें लगे हुए हैं ऐसे बाण के मूल में ही अंगुलियाँ सटजाने से चित्र में लिखित बाण निकालने के उद्योग में लगे हुए के समान हो गया॥३१॥

**बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः।**
**राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः॥३२॥**

**सञ्जीविनी**—बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन। 'प्रतिबन्धः प्रतिष्टम्भः' इत्यमरः। विवृद्धमन्युः प्रवृद्धरोषो राजा। मन्त्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिर्भोगी सर्प इव। 'भोगी राजभुजङ्गयोः' इति शाश्वतः। अभ्यर्णमन्तिकम्। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः। आगस्कृतमपराधकारिणमस्पृशद्भिः स्वैतेजोभिरन्तरदह्यत। 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि' इति यादवः॥३२॥

**अन्वयः—बाहुप्रतिष्टम्भविवृद्धमन्युः, राजा, मन्त्रौषधिरुद्धवीर्यः, भोगी, इव, अभ्यर्णम्, आगस्कृतम्, अस्पृशद्भिः, स्वतेजोभिः अन्तर्, अदह्यत।**

**वाच्य०**—राजानम्, मन्त्रौषधिरुद्धवीर्यं भोगिनमिव अभ्यर्णमागस्कृतमस्पृशन्ति स्वतेजांसि, अन्तरदहन्।

**व्याख्या**—बाह्वोः=भुजयोः, प्रतिष्टम्भः=प्रतिबन्धः, तेन विवृद्धः= प्रवृद्धः, मन्युः=क्रोधो यस्यासौ, बाहुप्रतिष्टम्भविवृद्धमन्युः, राजा=दिलीपः, मंत्रश्च=सर्पविषनिवारकमंत्रः, ओषधिः=भेषज्यं चेति मंत्रौषधी, ताभ्यां रुद्धं= प्रतिबद्धं, वीर्यं=बलं यस्यासौ मंत्रौषधिरुद्धवीर्यः, 'वीर्यं बले प्रभावे च' इत्यमरः। भोगः=फणा, अस्यास्तीति भोगी=सर्पः, इव=यथा, अभ्यर्णम्=उपकण्ठम् =समीपमित्यर्थः, आगः=अपराधं करोतीति आगस्कृत् तम् आगस्कृतम्

अस्पृशद्भिः = न स्पृशद्भिः, स्वस्य = आत्मनः, तेजांसि = प्रभावाः, तैः स्वतेजोभिः, अन्तर् = मध्ये, अदह्यत = अतप्यत ।

**समा०**—बाह्वोः प्रतिष्टम्भः बाहुप्रतिष्टम्भः, बाहुप्रतिष्टम्भेन विवृद्धः मन्युः यस्य सः बाहुप्रतिष्टम्भविवृद्धमन्युः । मन्त्रश्च औषधिश्च मन्त्रौषधी, मन्त्रौषधिभ्यां रुद्धं वीर्यं यस्य सः मन्त्रौषधिरुद्धवीर्यः । भोगः अस्यास्तीति भोगी । आगः करोतीति आगस्कृत्, तम् आगस्कृतम् । न स्पृशन्तीति अस्पशन्ति, तैः अस्पृशद्भिः । स्वस्य तेजांसि स्वतेजांसि, तैः स्वतेजोभिः ।

**अभि०**—भुजस्तम्भेन प्रवृद्धमन्युः राजा दिलीपः समीपस्थमपि, अपराधकारिणं सिंहं हन्तुमसमर्थः सन्, मंत्रौषधिरुद्धप्रभावः सर्प इव स्वतेजसा, अतप्यत ।

**हिन्दी**—हाथ के रुक जाने से अत्यन्त क्रुद्ध राजा दिलीप, मंत्र तथा औषधि से बाँध दिया गया है प्रभाव जिसका ऐसे विषधर सांप की भांति, पास में खड़े अपराधी सिंह को न छू सकने वाले अपने तेज से भीतर ही भीतर जलने लगा ॥३२॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥३३॥

**सञ्जीविनी**—निगृहीता पीडिता धेनुर्येन स सिंहः । आर्याणां सतां गृह्यं पक्ष्यम् "पदास्वैरिबाह्यापक्ष्येषु च" इति क्यप् । मनुवंशस्य केतुं चिह्नं केतुवद्व्यावर्तकम् । सिंह इवोरुसत्त्वो महाबलस्तम् । आत्मनो वृत्तौ बाहुस्तम्भरूपे व्यापारेऽभूतपूर्वत्वाद्विस्मितम् । कर्तरि क्तः । तं दिलीपं मनुष्यवाचा करणेन पुनर्विस्माययन्विस्मयमाश्चर्यं प्रापयन्निजगाद । 'स्मिङ ईषद्धसने' इति धातोर्णिचि वृद्धावायादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम् । 'विस्मापयन्' इति पाठे पुगागममात्रं वक्तव्यम् । तच्च "नित्यं स्मयतेः" इति हेतुभयविवक्षायामेवेति "भीस्म्योर्हेतुभये" इत्यात्मनेपदे विस्मापयमान इति स्यात् । तस्मान्मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् । करणविवक्षायां न कश्चिद्दोषः ॥

**अन्वयः**—**निगृहीतधेनुः, सिंहः, आर्यगृह्यं, मनुवंशकेतुं, सिंहोरुसत्त्वम्, आत्मवृत्तौ, विस्मितं, तं, मनुष्यवाचा, विस्माययन्, निजगाद ।**

**वाच्य०**—निगृहीतधेनुना सिंहेन, आर्यगृह्यः, मनुवंशकेतुः, सिंहोरुसत्त्वः विस्मितः स विस्माययता, निजगदे ।

**व्याख्या**—निगृहीता = पीडिता, धेनुः = नन्दिनी येन स निगृहीतधेनुः, सिंहः = केसरी, आर्याणां = सज्जनानां, गृह्यं = पक्ष्यं = पक्षपातयोग्यमित्यर्थः, मनुवंशस्य = मनुकुलस्य, केतुः = चिह्नमिति मनुवंशकेतुस्तं तथोक्तम्, सिंहस्य = केसरिण इव, उरु = विपुलं, सत्त्वं = बलं यस्य स तं सिंहोरुसत्त्वम्, आत्मनः = स्वस्य, वृत्तिः = बाहुस्तम्भरूपा, तस्यामात्मवृत्तौ, विस्मितम् = आश्चर्यान्वितं तं दिलीपं, मनुष्यस्य = नरस्य, वाक् = वाणी, तया, मनुष्यवाचा, (करणेन) "भूयः" विस्माययन् = विस्मितं कुर्वन्, निजगाद = अवोचत् ।

**समा०**—निगृहीता धेनुः येन सः निगृहीतधेनुः । आर्याणां गृह्यः आर्यगृह्यः, तम् आर्यगृह्यम् । मनोः वंशः मनुवंशः, मनुवंशस्य केतुः मनुवंशकेतुः, तं मनुवंशकेतुम् । सिंहस्य इव उरु सत्त्वं यस्य सः सिंहोरुसत्त्वः, तं सिंहोरुसत्त्वम् । आत्मनः वृत्तिः आत्मवृत्तिः, तस्याम् आत्मवृत्तौ । मनुष्यस्य वाक् मनुष्यवाक्, तया मनुष्यवाचा ।

**अभि०**—सिंहः बाहुस्तम्भनरूपव्यापारे, अतीवाश्चर्ययुतं राजानं मनुष्यवाण्या भूयोऽपि, अधिकं विस्माययन्, उवाच ।

**हिन्दी**—धेनु को पीड़ित करने वाला सिंह सज्जनों के पक्ष में रहने वाले मनुवंश के शिरोमणि, सिंह के समान पराक्रमी, अपने बाहुस्तम्भन रूप व्यापार से आश्चर्य युक्त उस राजा दिलीप को फिर चकित करता हुआ मनुष्यवाणी से बोला ॥३३॥

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥३४॥

**सञ्जीविनी**—हे महीपाल ! तव श्रमेणालम् । साध्याभावाच्छ्रमो न कर्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तृतीया । उक्तं च न्यासोद्द्योते—"न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य । अपि तर्हि गम्यमानापि" इति । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । इतोऽस्मिन्मयि । सार्वविभक्तिकस्तसिः । प्रयुक्तमप्यस्त्रं वृथा स्यात् । तथा हि ।

पादपोन्मूलने शक्तिर्यस्य तत्तथोक्तं मारुतस्य रंहो वेगः शिलोच्चये पर्वते न मूर्छति न प्रसरति ।।३४।।

**अन्वयः**—महीपाल, तव, श्रमेण, अलम्, इतः, मयि, प्रयुक्तम्, अपि, अस्त्रं, वृथा, स्यात्, पादपोन्मूलनशक्ति, मारुतस्य, रंहः, शिलोच्चये, न मूर्च्छति ।

**वाच्य०**—प्रयुक्तेनाप्यस्त्रेण वृथा भूयेत, मारुतस्य रंहसा, शिलोच्चये, न मूर्च्छर्यते ।

**व्याख्या**—महीं = पृथिवीं पालयतीति, तत्संबुद्धौ, हे महीपाल = पृथिवीपाल! तव = भवतः, श्रमेण = प्रयासेन, अलम् = साध्यं नास्ति वृथेत्यर्थः, "कुतः" इतः = अस्मिन् मयि, प्रयुक्तम् = प्रेरितं = क्षिप्तम्, अपि अस्त्रम् = आयुधं, वृथा = व्यर्थं, स्यात् = भवेत्, "यतः" पादैः पिबन्तीति पादपास्तेषां पादपानां = वृक्षाणाम्, उन्मूलनम् = उत्पाटनं, तस्मिन् शक्तिः = सामर्थ्यं यस्य तत् पादपोन्मूलनशक्ति, मारुतस्य = वायोः, रंहः = वेगः, शिलानामुच्चयस्तस्मिन् शिलोच्चये = पर्वते, न = नहि, मूर्च्छति = प्रसरति ।

**समा०**—महीं पालयतीति महीपालः, तत्सम्बुद्धौ महीपाल, पादैः (मूलैः) पिबन्तीति पादपाः, पादपानाम् उन्मूलने शक्तिः यस्य तत् पादपोन्मूलनशक्ति । शिलाभिरुच्चीयते इति शिलोच्चयः, तस्मिन् शिलोच्चये ।

**अभि०**—हे राजन् ! मयि बाणमोचनं तव श्रमेणापि साध्यं, नास्ति त्वया प्रयुक्तमपि आयुधं तथैव वृथा भविष्यति यथा वृक्षोत्पाटने समर्थोऽपि वायुवेगः पर्वते विफलो भवति ।

**हिन्दी**—हे पृथिवी के रक्षक दिलीप ! तुम मुझे मारने का प्रयत्न मत करो, क्योंकि मेरे ऊपर चलाया हुआ अस्त्र उसी प्रकार व्यर्थ होगा, जिस प्रकार कि वृक्षों को उखाड़ने की शक्ति रखनेवाला वायु का वेग पर्वत को उखाड़ने में विफल होता है ॥३४॥

**कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।**
**अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥३५॥**

**सञ्जीविनी**—कैलास इव गौरः शुभ्रस्तम् । 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः' इति शाश्वतः । वृषं वृषभमारुरुक्षोरारोढुमिच्छोः । स्वस्योपरि पदं निक्षिप्य वृषमारोहतीत्यर्थः । अष्टौ मूर्तयो यस्य स तस्याष्टमूर्तेः शिवस्य

पादार्पणं पादन्यासस्तदेवानुग्रहः प्रसादस्तेन पूतं पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किंकरं मामवेहि विद्धि। "पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः॥" इति यादवः॥३५॥

**अन्वयः**—कैलासगौरं, वृषम्, आरुरुक्षोः, अष्टमूर्तेः, पादार्पणानुग्रहपूतपृष्ठं, निकुम्भमित्रं, कुम्भोदरं, नाम, किंकरं, माम्, अवेहि।

**वाच्य०**—"त्वया" अहम्, कुम्भोदरः किंकरः, अवेये।

**व्याख्या**—कैलासः = पर्वतविशेषः इव, गौरः = श्वेतः, ति तम्, कैलासगौरं, वृषं = वृषभम्, आरोढुमिच्छतीति आरुरुक्षुस्तस्यारुरुक्षोः, आरोहणं कर्तुमिच्छोः, अष्टौ = अष्टसंख्यकाः, मूर्तयः = पृथिवीसलिलादयः यस्यासौ, तस्याष्टमूर्तेः = शिवस्य, पादयोः = चरणयोः, अर्पणं = न्यासः, पादार्पणं, तदेव अनुग्रहः = प्रसादः, तेन पूतं = शुद्धं, पृष्ठं = पृष्ठभागो यस्य सः, तं तथोक्तम्, निकुम्भस्य = निकुम्भनामकगणस्य, मित्रं = सुहृत्, तं निकुम्भमित्रम्, कुम्भोदरं = कुम्भोदरनामकं, किंकरं = सेवकं गणमिति यावत्, माम् = सिंहम्, अवेहि = जानीहि।

**समा०**—कैलास इव गौरः कैलासगौरः, तं कैलासगौरम्। आरोढुमिच्छतीति आरुरुक्षुः, तस्य आरुरुक्षोः। अष्टौ मूर्तयो यस्य सः अष्टमूर्तिः, तस्य अष्टमूर्तेः। पादयोः अर्पणं पादार्पणम्, पादार्पणम् एव अनुग्रहः पादार्पणानुग्रहः, पादार्पणानुग्रहेण पूतं पृष्ठं यस्य सः पादार्पणानुग्रहपूतपृष्ठः, तं पदार्पणानुग्रहपूतपृष्ठम्। निकुम्भस्य मित्रं निकुम्भमित्रम्, तत् निकुम्भमित्रम्।

**अभि०**—नन्दिनमारोढुमिच्छोः शिवस्य चरणदानेन शुद्धपृष्ठभागं निकुम्भमित्रं कुम्भोदरं नाम शिवसेवकं मां विद्धि।

**हिन्दी**—कैलास पर्वत के समान सफेद बैल पर चढ़ने की इच्छा रखनेवाले, आठ (भूमि जल तेज पवन आकाश सूर्य चन्द्र सोमयाजी) हैं मूर्ति जिनकी ऐसे शिव भगवान् का मेरे ऊपर जो चरण रखना, तद्रूप अनुग्रह से पवित्र पीठ वाले, निकुम्भ के मित्र मुझको कुम्भोदर नाम से विख्यात शिवका गण समझो ३५

**अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।**
**यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥३६॥**

**सञ्जीविनी**—पुरोऽग्रतोऽमुं देवदारुं पश्यसि। इति काकुः। असौ देवदारुः। वृषभो ध्वजे यस्य स तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः। अभूततद्भावे च्विः।

यो देवदारुः स्कन्दस्य मातुर्गौर्या हेम्नः कुम्भ एव स्तनः तस्मान्निःसृतानां पयसामम्बूनां रसज्ञः स्वादज्ञः, स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः, पयसां क्षीराणाम् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । स्कन्दसमानप्रेमास्पदमिति भावः ।।३६।।

**अन्वयः**—पुरः, अमुम्, देवदारुं, पश्यसि, असौ, वृषभध्वजेन, पुत्रीकृतः, यः, स्कन्दस्य, मातुः, हेमकुम्भस्तननिःसृतानां, पयसां, रसज्ञः, अस्तीति शेषः ।

**वाच्य०**—त्वया, असौ देवदारुः दृश्यते, अमुं, वृषभध्वजः पुत्रीकृतवान्, येन-रसज्ञेन भूयते ।

**व्याख्या**—पुरः = अग्रे, अमुं = दृश्यमानं, देवदारुं = देवदारुनामकं वृक्षं, पश्यसि = अवलोकयसि, असौ = देवदारुः, वृषभो ध्वजे यस्य स तेन वृषभध्वजेन = शिवेन, अपुत्रः पुत्रः कृत इति पुत्रीकृतः = पुत्रत्वेन स्वीकृतः, यः = देवदारुः, स्कन्दस्य = कार्तिकेयस्य, मातुः = पार्वत्याः, हेम्नः = सुवर्णस्य, कुम्भः = घटः, हेमकुम्भ एव स्तनः = कुचः, तस्मात्, निःसृतानि = निर्गतानि, तेषान्तथोक्तानाम्, पयसां = जलानां, स्कन्दपक्षे—हेमकुम्भ इव स्तनः तस्मात् निःसृतानाम्, पयसां = क्षीराणां = दुग्धानामित्यर्थः, रसं = स्वादं जानातीति रसज्ञः = स्वादज्ञः, अस्तीति शेषः ।

**समा०**—अपुत्रः पुत्रः सम्पद्यमानः कृतः पुत्रीकृतः । वृषभो ध्वजे यस्य सः वृषभध्वजः, तेन वृषभध्वजेन । हेम्नः कुम्भः हेमकुम्भः; हेमकुम्भ एव स्तनौ हेमकुम्भस्तनौ (इति देवदारुवृक्षपक्षे), हेमकुम्भ इव स्तनौ हेमकुम्भस्तनौ (इति स्कन्दपक्षे), हेमकुम्भस्तनाभ्यां निस्सृतानि हेमकुम्भस्तननिस्सृतानि, तेषां हेमकुम्भस्तननिस्सृतानाम् । रसं जानातीति रसज्ञः ।

**अभि०**—हे राजन्, असौ पुरोवर्ती देवदारुवृक्षः पार्वत्या स्वहस्तेन सेचितः, अतोऽयं पार्वतीपरमेश्वरयोः, स्कन्दतुल्यं प्रेमपात्रमस्तीति ।

**हिन्दी**—हे राजन् तुम, सामने खड़े इस देवदारु को देख रहे हो । शिवजी ने इसे अपना पुत्र माना है । यह देवदारु कार्तिकेय की माता पार्वती जी के सोने के घटरूपी स्तनों से निकले हुए जल के स्वाद का जानने वाला है । स्कन्द पक्ष में सोने के घट के समान स्तनों से निकले हुए दूध के स्वाद का जानने वाला है ।।३६।।

**कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।**
**अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ।।३७।।**

**सञ्जीविनी**—कदाचित्कटं कपोलं कण्डूयमानेन घर्षयता । 'कण्ड्वादिभ्य इति यक् । ततः शानच् । वन्यद्विपेनास्य देवदारोस्त्वगुन्मथिता । अथाद्रेस गौरी । असुरास्त्रैरालीढं क्षतम् । सेनां नयतीति सेनानीः स्कन्दः । 'पार्वती स्कन्दः सेनानीः' इत्यमरः । "सत्सूद्विष" इत्यादिना क्विप् । तमिव एनं शुशोच ॥३७॥

**अन्वयः—कदाचित्, कटं, कण्डूयमानेन, वन्यद्विपेन, अस्य, त्वग्, उन्म अथ, अद्रेः, तनया, असुरास्त्रैः, आलीढं, सेनान्यम्, इव, एनं, शुशोच ।**

**वाच्य०**—कण्डूयमानो वन्यद्विपः, अस्य, त्वचमुन्मथितवान्, अथ अद्रे यया सेनानीरिव एषः शुशुचे ।

**व्याख्या**—कदाचित् = जातु कस्मिंश्चित्समये, कटं = कपोलं, कण्डू = घर्षयता, वन्यद्विपेन = वनगजेन अस्य = देवदारोः, त्वग् = वल्कलम्, थिता = उत्पाटिता, अथ = पश्चात्, अद्रेः = हिमालयस्य, तनया = सुता- असुरास्त्रैः = दैत्यायुधैः, आलीढं = क्षतम्, सेनां नयतीति सेनानीः = स्कन्दः एनं = वृक्षम्, शुशोच = शोचितवती ।

**समा०**—वने भवः वन्यः, वन्यश्चासौ द्विपश्च वन्यद्विपः, तेन वन्य असुराणाम् अस्त्राणि असुरास्त्राणि, तैः असुरास्त्रैः ।

**अभि०**—एकदा केनापि वन्यगजेन स्वगात्रं कण्डूयता अस्य देवदा वल्कलमुत्पाटितं, तद्दृष्ट्वा पार्वती दैत्यास्त्रैः क्षतं स्वपुत्रं स्कन्दं यथा तथैव एनमपि शुशोच ।

**हिन्दी**—किसी समय, कपोल को रगड़ते हुए किसी जंगली हाथी देवदारु की छाल को छील दिया तो पार्वतीजी ने अपने पुत्र कार्तिकेय के अ से घायल होनेपर जैसा शोक किया था वैसा ही शोक इसके लिये भी किया

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥३

**सञ्जीविनी**—तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत्तथा तद वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन अङ्कं समीपमागताः प्राप्ता प्राणिनो वृत्तिर्यस्मिंस्तत् । 'अङ्कः समीप उत्सङ्गे चिन्हे स्थानापराध केशवः । सिंहत्वं विधाय अस्मिन्नद्रिकुक्षौ गुहायामहं व्यापारितो नियुक्तः

**अन्वयः—तदाप्रभृति, एव, वनद्विपानां, त्रासार्थं, शूलभृता, अङ्कागतसत्त्ववृत्ति, सिंहत्वं, विधाय, अस्मिन्, अद्रिकुक्षौ, अहं, व्यापारितः।**

**वाच्य०**—शूलभृत् मां व्यापारितवान्।

**व्याख्या**—तदाप्रभृति तत्कालादारभ्य एव, वनद्विपानां = वनगजानां, त्रासार्थं = भयार्थम्, शूलभृता = शिवेन, अङ्कं = समीपम्, आगताः = प्राप्ताः, ये सत्त्वाः = प्राणिन एव वृत्तिः = भोजनं यस्मिन् तत्, सिंहस्य भावः सिंहत्वं = केसरित्वं, विधाय = कृत्वा, अस्मिन् = पुरोवर्तिनि, अद्रेः = पर्वतस्य, कुक्षिः = गुहा, तस्मिन् अद्रिकुक्षौ, अहं = सिंहः, व्यापारितः = नियुक्तः।

**समा०**—तदा प्रभृतिः ( स काल आदिः ) यस्मिन् कर्मणि तद् यथा भवति तथा तदाप्रभृति (क्रियाविशेषणम्)। वनस्य द्विपाः वनद्विपाः, तेषां वनद्विपानाम्। त्रासाय इति त्रासार्थम् ( अस्वपदविग्रहः )। शूलं बिभर्ति इति शूलभृत् तेन शूलभृता। अङ्कम् आगताः सत्त्वा एव वृत्तिः यस्मिन् तत् अङ्कागतसत्त्ववृत्ति, तत् अङ्कागतसत्त्ववृत्ति। अद्रेः कुक्षिः अद्रिकुक्षिः, तस्मिन् अद्रिकुक्षौ।

**अभि०**—देवदारुवल्कलोत्पाटनकालादारभ्यैव शिवः वन्यगजभयार्थम् अस्यां गुहायां मम समीपागतजन्तुर्भोजनमिति निर्धार्य मां सिंहरूपिणं कृत्वा नियुक्तवान्।

**हिन्दी**—तभी से जंगली हाथियों को डराने के लिये त्रिशूलधारी शिवने, पास में आए हुए जीवों पर निर्वाह करनेवाली सिंह की आकृति देकर मुझे इस गुफा में नियुक्त कर दिया है ॥३८॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥३९॥

**सञ्जीविनी**—परमेश्वरेण प्रदिष्टो निर्दिष्टः कालो भोजनवेला यस्याः सोपस्थिता प्राप्तैषा गोरूपा शोणितपारणा शोणितस्य रुधिरस्य पारणा व्रतान्तभोजनम्। सुरद्विषो राहोः चन्द्रमस इयं चान्द्रमसी सुधेव। क्षुधितस्य बुभुक्षितस्य तस्याङ्कागतसत्ववृत्तेर्मे मम सिंहस्य तृप्त्या अलं पर्याप्ता। "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन चतुर्थी ॥३९॥

**अन्वयः—परमेश्वरेण, प्रदिष्टकाला, उपस्थिता, एषा, शोणितपारणा, सुरद्विषः, चान्द्रमसी, सुधा, इव, क्षुधितस्य, तस्य, मे, तृप्त्यै, अलम्।**

**वाच्य०**—एतया, शोणितपारणया, सुरद्विषः, चान्द्रमस्या सुधया इव क्षुधितस्य मे तृप्त्यै अलं भूयते।

**व्याख्या**—परमेश्वरेण = महादेवेन, प्रदिष्टः = निर्दिष्टः, कालः = समयो भोजनवेला यस्याः सा प्रदिष्टकाला, उपस्थिता = प्राप्ता, एषा = गोरूपा, शोणितस्य = रुधिरस्य, पारणा = व्रतान्तभोजनम्, सुरान् = देवान्, द्वेष्टीति सुरद्विट्, तस्य, सुरद्विषः = राहोः, चन्द्रमसः इयं चान्द्रमसी = ऐन्दवी, चन्द्रसम्बन्धिनीत्यर्थः, सुधा = अमृतम्, इव = यथा, क्षुधितस्य = बुभुक्षितस्य, तस्य = समीपागतप्राणिवृत्तेः, मे = मम सिंहस्य, तृप्त्यै = उदरपूर्त्यै, अलं = पर्याप्तम्।

**समा०**—परा मा (शोभा) यस्य सः परमः, परमश्चासौ ईश्वरश्च परमेश्वरः, तेन परमेश्वरेण। प्रदिष्टः कालः यस्याः सा प्रदिष्टकाला। शोणितस्य पारणा-शोणितम् एव पारणा वा शोणितपारणा।

**अभि०**—उपोषितस्येव बह्वोः कालात् क्षुधितस्य मे क्षुधानिवृत्तये शिवेन निर्दिष्टसमया इव स्वयमत्रागता धेनुरूपा पारणा, राहोश्चन्द्रसम्बन्धिपीयूषमिव तृप्त्यै पर्याप्तं भविष्यति।

**हिन्दी**—शिवजी के बताये हुए भोजन के समय स्वयं प्राप्त यह गोरूप रुधिर भोजन (व्रत की समाप्ति का) राहुके लिये चन्द्रमण्डल में स्थित अमृत की तरह भूखे मुझ सिंह की तृप्ति के लिये पर्याप्त है ॥३९॥

**स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः।**
**शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥४०॥**

**सञ्जीविनी**—स एवमुपायशून्यस्त्वं लज्जां विहाय निवर्तस्व। भवांस्त्वं गुरोर्दर्शिता प्रकाशिता शिष्यस्य कर्तव्या भक्तिर्येन स तथोक्तोऽस्ति। ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह। शस्त्रेणेति। यद्रक्ष्यं धनं शस्त्रेणायुधेन। 'शस्त्रमायुधलोहयोः' इत्यमरः। अशक्या रक्षा यस्य तदशक्यरक्षम्। रक्षितुमशक्यमित्यर्थः। तद्रक्ष्यं नष्टमपि शस्त्रभृतां यशो न क्षिणोति न हिनस्ति। अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः ॥४०॥

**अन्वयः—सः, त्वं, लज्जां, विहाय, निवर्तस्व, भवान्, गुरोः, दर्शितशिष्यभक्तिः "अस्ति" यद्, रक्ष्यं, शस्त्रेण, अशक्यरक्षं, तद्, शस्त्रभृतां, यशः, न क्षिणोति।**

**वाच्य०**—तेन त्वया निवृत्यतां, भवता, गुरोर्दर्शितशिष्यभक्तिना "भूयते" येन रक्ष्येण शस्त्रेण अशक्यरक्षेण "भूयते" तेन शस्त्रभृतां यशो न क्षीयते।

**व्याख्या**—सः=एवमुपायशून्यः, बाहुस्तम्भेनेत्यर्थः, त्वं, दिलीपः, लज्जां=त्रपां, विहाय=त्यक्त्वा, निवर्तस्व=परावर्तस्व, निवृत्तो भव इति यावत्, भवान्=दिलीपः, गुरोः=वशिष्ठस्य दर्शिता=प्रकाशिता, शिष्यभक्तिः=छात्रानुरागो येन स तथोक्तः, अस्तीति शेषः, यत्=किंचित्, रक्ष्यं=रक्षणीयं=पालनीयं, धनादिकमित्यर्थः, शस्त्रेण=आयुधेन, अशक्यरक्षम्=अशक्यपालनम्, तद्=रक्ष्यं वस्तु, शस्त्रभृतां=चापधारिणां, यशः=कीर्तिं न=नहि, क्षिणोति=हिनस्ति।

**समा०**—शिष्यस्य भक्तिः शिष्यभक्तिः, दर्शिता शिष्यभक्तिः येन सः दर्शितशिष्यभक्तिः। रक्षितुं योग्यं रक्ष्यम्। न शक्या अशक्या, अशक्या रक्षा यस्य तद् अशक्यरक्षम्। शस्त्राणि बिभ्रतीति शस्त्रभृतः, तेषां शस्त्रभृताम्।

**अभि०**—हे राजन्, करावरोधेन मम मारणेऽसमर्थस्त्वं लज्जां विहाय स्वाश्रमं गच्छ, यतः यत् पालनीयं वस्तु शस्त्रेण रक्षणयोग्यं न भवति तद् रक्ष्यं वस्तु नष्टमपि शस्त्रभृतां यशः न नाशयति, अतस्तव परावर्तने न कोऽपि दोषः।

**हिन्दी**—उपायशून्य हुए तुम लज्जा को छोड़कर लौट जाओ, तुमने गुरु की शिष्यों के योग्य भक्ति दिखला दी, जो रक्षणीय वस्तु शस्त्र से रक्षा करने के योग्य ही नहीं होती वह वस्तु नष्ट होती हुई भी शस्त्रधारी की कीर्ति को नष्ट नहीं करती है ॥४०॥

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥४१॥

**सञ्जीविनी**—पुरुषाणामधिराजो नृप इति प्रगल्भं मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्येश्वरस्य प्रभावात्प्रत्याहतास्त्रः कुण्ठितास्त्रः सन्नात्मनि विषयेऽवज्ञामपमानं शिथिलीचकार। तत्याजेत्यर्थः। अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः। समानेषु हि क्षत्रियाणामभिमानः। न सर्वेश्वरं प्रतीति भावः ॥४१॥

**अन्वयः—पुरुषाधिराजः, इति, प्रगल्भं, मृगाधिराजस्य, वचः, निशम्य, गिरिशप्रभावात्, प्रत्याहतास्त्रः, "सन्" आत्मनि, अवज्ञां, शिथिलीचकार।**

**वाच्य०**—पुरुषाधिराजेन, प्रत्याहृतास्त्रेण "सता" आत्मन्यवज्ञा शिथिलीचक्रे ।

**व्याख्या**—पुरुषाधिराजः = नृपः, इति = पूर्वोक्तप्रकारकम्, प्रगल्भं = धृष्टं, मृगाधिराजस्य = मृगेन्द्रस्य सिंहस्य, वचः = वचनं, निशम्य = श्रुत्वा, गिरिशस्य = शिवस्य, प्रभावः = तेजस्तस्मात्, गिरिशप्रभावात्, प्रत्याहृतं = कुण्ठितम्, अस्त्रम् = आयुधं यस्य सः, प्रत्याहृतास्त्रः "सन्" आत्मनि = स्वस्मिन्, अवज्ञाम् = अवहेलनम्, शिथिलीचकार = तत्याज ।

**समा०**—अधि (अधिकः) राजा अधिराजः, पुरुषाणाम् अधिराजः पुरुषाधिराजः । मृगाणाम् अधिराजः मृगाधिराजः, तस्य मृगाधिराजस्य । गिरौ शेते इति गिरिशः, गिरिशस्य प्रभावः गिरिशप्रभावः, तस्माद् गिरिशप्रभावात् । प्रत्याहृतम् अस्त्रं यस्य सः प्रत्याहृतास्त्रः । अशिथिलां शिथिलां कृतवान् शिथिलीचकार ।

**अभि०**—सिंहवाक्यं श्रुत्वा राजा दिलीपः, भगवतः शिवस्य प्रतापात् स्वकीयास्त्रस्य कुण्ठततां ज्ञात्वा तज्जनितापमानं त्यक्तवान् ।

**हिन्दी**—राजा दिलीप ने इस प्रकार से ढीठ सिंह की बात सुनकर भगवान् शिवके प्रभाव से मेरे अस्त्र की गति रुकी है यह जानकर आत्मग्लानि को कम कर दिया । अपना अपमान नहीं समझा ।।४१।।

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ।।४२।।

**सञ्जीविनी**—स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नो विफलप्रयासः । अत एव वज्रं कुलिशं मुमुक्षन्मोक्तुमिच्छन् । अम्बकं लोचनम् । 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः । त्रीण्यम्बकानि यस्य स त्र्यम्बको हरः । तस्य वीक्षणेन जडीकृतो निष्पन्दीकृतः । वज्रं पाणौ यस्य स वज्रपाणिरिन्द्रः । (प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्) इति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स इव स्थितो नृप एनं सिंहं प्रत्यब्रवीच्च । "बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः" इति महाभारते ।।४२।।

**अन्वयः—तत्पूर्वभङ्गे, इषुप्रयोगे, वितथप्रयत्नः, 'अतएव' वज्रं, मुमुक्षन्, त्र्यम्बकवीक्षणेन, जडीकृतः, वज्रपाणिः, इव, "स्थितो राजा" एनं, प्रत्यब्रवीत् च ।**

**वाच्य०**—वितथप्रयत्नेन, वज्रं मुमुक्षता, जड़ीकृतेन, वज्रपाणिना, इव, एषः प्रत्यौच्यत ।

**व्याख्या**—स = बाहुस्तम्भरूपः, एव पूर्वः = प्रथमः, भङ्गः = प्रतिबन्धो यस्य स तस्मिन्, तत्पूर्वभङ्गे, इषोः = बाणस्य, प्रयोगः = प्रयुक्तिः, तस्मिन्, इषुप्रयोगे, वितथः = विफलः, प्रयत्नः = प्रयासः, उद्योगो यस्य सः, वितथप्रयत्नः, "अत एव" वज्रं = कुलिशं, मुमुक्षन् = मोक्तुं = त्यक्तुम् इच्छन्, त्र्यम्बकस्य = त्रिनयनस्य शिवस्य, वीक्षणेन = अवलोकनेन, जड़ीकृतः = निश्चेष्टीकृतः, वज्रं पाणौ यस्य सः, वज्रपाणि = इन्द्रः, इव "स्थितो राजा" इति शेषः, एनं = सिंहम्, प्रत्यब्रवीत = प्रत्युक्तवान् ।

**समा०**—स एव पूर्वः भङ्गः यस्य सः तत्पूर्वभङ्गः, तस्मिन् तत्पूर्वभङ्गे । इषोः प्रयोगः इषुप्रयोगः, तस्मिन् इषुप्रयोगे । वितथः प्रयत्नः यस्य सः वितथप्रयत्नः । न जड़ः अजड़ः, अजड़ः जड़ः सम्पद्यमानः कृतः जडीकृतः । त्रीणि अम्बकानि ( नयनानि ) यस्य सः त्र्यम्बकः, त्र्यम्बकस्य वीक्षणं त्र्यम्बकवीक्षणम्, तेन त्र्यम्बकवीक्षणेन । मोक्तुम् इच्छन् मुमक्षन् । वज्रं पाणौ यस्य सः वज्रपाणिः ।

**अभि०**—बाणप्रयोगे व्यर्थप्रयासः, महेश्वरावलोकनेन जड़ीकृतः वज्रं प्रहर्तुमिच्छन् देवराज इव स्थितो राजा दिलीपः सिंहं प्रत्युवाच ।

**हिन्दी**—शंकर जी पर वज्र प्रहार करने के इच्छुक, किन्तु उनकी दृष्टि मात्र से स्तम्भित, वज्रपाणि इन्द्र की तरह निश्चेष्ट हुए राजा दिलीप बाण-प्रयोग में अपनी पहिले पहल उस विफलता को देखकर सिंह को उत्तर देने लगे ॥४२॥

**संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं विवक्षुः ।**
**अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥४३॥**

**सञ्जीविनी**—हे मृगेन्द्र ! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयम्, यद्वचः 'स त्वं मदीयेन' इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह । अन्तरिति । हि यतो भवान्प्राणभृतामन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति "विदो लटो वा" इति णलादेशः । अतोऽहमभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म संबध्यते । अन्ये त्वीदृग्वचन-

माकर्ण्यासंभावितार्थमेतदित्युपहसन्ति । अतस्तु मौनमेव भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ॥४३॥

**अन्वयः**—"हे !" **मृगेन्द्र ! संरुद्धचेष्टस्य, 'मम' तद् वचः, कामं, हास्यम्, "अस्ति" यद् "वचः" अहं, विवक्षुः "अस्मि" हि, भवान्, प्राणभृताम्, अन्तर्गतं, सर्वं, भावं, वेद, अतः अभिधास्ये ।**

**वाच्य०**—तेन, वचसा, हास्येन, "भूयते" मया विवक्षुणा "भूयते" अन्तर्गतः, भावो भवता, विद्यते, अतः, अभिधास्यते ।

**व्याख्या**—मृगेन्द्र = हे सिंह ! संरुद्धा = प्रतिरुद्धा, चेष्टा = हस्तसंचालनादिव्यापारो यस्य तस्य संरुद्धचेष्टस्य, मम = दिलीपस्य, तद् = उच्यमानं वचः = वाक्यम्, कामं = यथेष्टम्, हसितुं योग्यं हास्यं = परिहासयोग्यम्, अस्तीति शेषः, यद् = वचः, अहं = दिलीपः, विवक्षुः = कथयितुमिच्छुः, अस्मीति शेषः, हि = यतः, भवान् = दिलीपः, प्राणभृतां = जीवानाम्, अन्तर्गतं = हृद्गतं, भावम् = अभिप्रायं, वेद = जानाति, अतः = कारणात्, अभिधास्ये = कथयिष्यामि ॥४३॥

**समा०**—संरुद्धाः चेष्टाः यस्य सः संरुद्धचेष्टः, तस्य संरुद्धचेष्टस्य । मृगाणाम् इन्द्रः मृगेन्द्रः, तत्सम्बुद्धौ (हे) मृगेन्द्र ! । हसितुं योग्यं हास्यम् । वक्तुमिच्छुः विवक्षुः । प्राणान् बिभर्तीति प्राणभृतः, तेषां प्राणभृताम् ।

**अभि०**—हे मृगेन्द्र ! संरुद्धहस्तसंचालनव्यापारस्य मे वचनं यद्यपि परिहासयोग्यं वर्तते, तथापि भवान् सर्वजन्तूनां हृदि स्थितं सर्वमेव जानाति, अतोऽहं कथयिष्यामि ।

**हिन्दी**—हे सिंह ! हाथ के बँध जाने से मैं कुछ नहीं कर सकता, इसलिये वह वचन भले ही दिल्लगी करने के योग्य है जिसे मैं कहना चाहता हूँ, फिर भी आप प्राणियों के सभी मनोभावों को जानते हैं इससे कहता हूँ ॥४३॥

**मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।**
**गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥४४॥**

**सञ्जीविनी**—प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जंगमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेष हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अल

ङ्घ्यशासन इत्यर्थः। शासनं च 'सिंहत्वमङ्कागतसत्त्ववृत्ति' इति प्रागुक्तरूपम्। तर्हि विसृज्य गम्यताम्। नेत्याह गुरोरपीति। पुरस्तादग्रे नश्यदिदमाहिताग्ने-र्गुरोर्धनमपि गोरूपमनुपेक्षणीयम्। आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥४४॥

**अन्वयः**—स्थावरजंगमानां, सर्गस्थितिप्रत्यवहारहेतुः, सः, मे, मान्यः, पुरस्तात्, नश्यत्, इदम्, आहिताग्नेः, गुरोः, धनम्, अपि, अनुपेक्षणीयम्।

**वाच्य०**—सर्गस्थितिप्रत्यवहारहेतुना तेन मे मान्येन "भूयते" पुरस्तात् नश्यताऽनेन धनेनापि, अनुपेक्षणीयेन "भूयते"।

**व्याख्या**—तिष्ठन्तीति स्थावराः=तरुशैलादयः, गच्छन्तीति जंगमा=मनुष्यादयः, तेषां=स्थावरजंगमानाम्, सर्गः=उत्पत्तिः, स्थितिः=पालनम्, प्रत्यवहारः=विनाशः, तेषां तथोक्तानां हेतुः=कारणम्, सः=ईश्वरः, मे=मम दिलीपस्य, मान्यः=पूज्यः, अस्तीति शेषः, पुरस्तात्=अग्रे, नश्यत्=नाशं गच्छत्, इदम्=पुरतो दृश्यमानम्, आहितोऽग्निर्येन स तस्य, आहिताग्नेः=अग्निहोत्रिणः, गुरोः=वशिष्ठस्य, धनम्=गोरूपधनम्, अपि=न, उपेक्षणीय-मनुपेक्षणीयम्=उपेक्षानर्हम्।

**समा०**—तिष्ठन्तीति स्थावराः, गच्छन्तीति जङ्गमाः, स्थावराश्च जङ्गमाश्च स्थावरजङ्गमाः, तेषां स्थावरजङ्गमानाम्। सर्गश्च स्थितिश्च प्रत्यवहारश्च सर्ग-स्थितिप्रत्यवहाराः, सर्गस्थितिप्रत्यवहाराणां हेतुः सर्गस्थितिप्रत्यवहारहेतुः। मानितुं योग्यः मान्यः। आहितः अग्निः येन सः आहिताग्निः, तस्य आहिताग्नेः। नश्यतीति नश्यत्। उपेक्षितुं योग्यं उपेक्षणीयम्, न उपेक्षणीयम् अनुपेक्षणीयम्।

**अभि०**—सकलजगदुत्पत्तिस्थितिविनाशकारणं सः शिवः, मे पूज्यो वर्तते, तथापि गुरोरपि विनश्यदिदं गोरूपधनं सर्वथा पालनीयं वर्तते।

**हिन्दी**—समस्त विश्व की उत्पत्ति, पालन तथा प्रलय के कारणभूत वह भगवान् शिव मेरे पूजनीय हैं। अर्थात् उनकी आज्ञा सर्वथा माननीय है। किन्तु सामने नष्ट होता हुआ अग्निहोत्री गुरु महाराज वशिष्ठ का यह नन्दिनी रूप धन भी उपेक्षा करने के योग्य नहीं है। इसकी रक्षा करना भी परमावश्यक है॥४४॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥४५॥

**सञ्जीविनी**—सोऽङ्कागतसत्त्ववृत्तिस्त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्तयितुं संपादयितुं प्रसीद । दिनावसाने उत्सुको माता समागमिष्यतीत्युत्कण्ठितो बालश्चासौ वत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् ॥४५॥

**अन्वयः**—**स, त्वं, मदीयेन, देहेन, शरीरवृत्तिं, निर्वर्तयितुं, प्रसीद, दिनावसानोत्सुकबालवत्सा, महर्षेः, इयं, धेनुः, विसृज्यताम् ।**

**वाच्य०**—तेन त्वया मदीयेन देहेन शरीरवृत्तिं निर्वर्तयितुं प्रसद्यतां, महर्षेरिमां धेनुं विसृज ।

**व्याख्या**—सः = समीपागतप्राणिवृत्तिः, त्वं = सिंहः, मम अयं मदीयः, तेन, मदीयेन = मत्सम्बन्धिना, देहेन = शरीरेण, शरीरस्य = देहस्य, वृत्तिः = जीवनं तां, निर्वर्तयितुं = सम्पादयितुं कर्तुमित्यर्थः, प्रसीद = प्रसन्नो भव । दिनस्य = दिवसस्य, अवसानम् = अन्तः, तस्मिन्, उत्सुकः = उत्कण्ठितः, बालश्चासौ वत्सः = शकृत्करियंस्याः सा तथोक्ता, महर्षेः = वशिष्ठस्य, इयम् = एषा, धेनुः = नन्दिनी, विसृज्यताम् = त्यज्यताम् ।

**समा०**—मम अयं मदीयः, तेन मदीयेन । शरीरस्य वृत्तिः शरीरवृत्तिः, तां शरीरवृत्तिम् । दिनस्य अवसानं दिनावसानम्, दिनावसाने उत्सुकः बालः वत्सः यस्याः सा दिनावसानोत्सुकबालवत्सा । महांश्चासौ ऋषिश्च महर्षिः, तस्य महर्षेः ।

**अभि०**—हे सिंह ! त्वं मम देहेन स्वबुभुक्षाशान्तिं कृत्वा मयि प्रसन्नो भव, इमां महर्षेः धेनुं मुञ्च, यतः, आश्रमे बद्धोऽस्याः बालवत्सः माता मे समागमिष्यतीत्युत्कण्ठितो बुभुक्षित आस्ते ।

**हिन्दी**—समीपागत प्राणियों पर जीवन यापन करनेवाले तुम मेरे शरीर से अपना भोजन करने की कृपा करो, (अर्थात् धेनु के बदले मुझे खा लो) और सायंकाल "मेरी मां आती होगी" ऐसे उत्कण्ठित छोटे बच्चे वाली, महर्षि वशिष्ठ की इस गौ को छोड़ दो ॥४५॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किञ्चिद्विहस्यार्थपतिं बभाषे ॥४६॥

**सञ्जीविनी**—अथ राजोक्त्यनन्तरम् । भूतेश्वरस्य पार्श्ववर्त्यनुचरः स सिंहो

गिरेर्गह्वराणां गुहानाम्। 'देवखातबिले गुहा। गह्वरम्' इत्यमरः। अंधकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्वन्। निरस्यन्नित्यर्थः। किंचिद्विहस्यार्थपतिं नृपं भूयो बभाषे। हासकारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' इति वक्ष्यमाणं द्रष्टव्यम् ॥४६॥

**अन्वय**—अथ, भूतेश्वरपार्श्ववर्ती, सः, गिरिगह्वराणाम्, अन्धकारं, दंष्ट्रामयूखैः, शकलानि, कुर्वन् किञ्चिद्, विहस्य, अर्थपतिं, भूयः, बभाषे।

**वाच्य०**—अथ, भूतेश्वरपार्श्ववर्तिना, तेन, अर्थपतिर्भूयः, बभाषे।

**व्याख्या**—अथ = अनन्तरं, भूतानां = प्राणिनाम्, ईश्वरः = स्वामी, भूतेश्वरः, तस्य पार्श्वयोः वर्तितुं शीलमस्येति पार्श्ववर्ती = अनुचरः, सः = सिंहः, गिरेः = पर्वतस्य, गह्वराणि = गुहास्तेषां गिरिगह्वराणाम्, अन्धकार = ध्वान्तं तिमिरम् 'अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः। दंष्ट्राणां = निशितदन्तानां, मयूखाः = किरणास्तैः, 'किरणोस्रमयूखांशुगभस्तिघृणिपृश्नयः', इत्यमरः। दंष्ट्रामयूखैः, शकलानि = खण्डानि कुर्वन् = विदधत् दूरीकुर्वन्नित्यर्थः, किंचित् = स्वल्पमीषत्, विहस्य = स्मितं कृत्वा, अर्थस्य = धनस्य पतिं = स्वामिनं दिलीपं, भूयः = पुनः, बभाषे = उवाच।

**समा०**—भूतानाम् ईश्वरः भूतेश्वरः, पार्श्वयोः वर्तितुं शीलमस्येति पार्श्ववर्ती, भूतेश्वरस्य पार्श्ववर्त्ती भूतेश्वरपार्श्ववर्त्ती। गिरेः गह्वराणि गिरिगह्वराणि, तेषां गिरिगह्वराणाम्। दंष्ट्राणां मयूखाः दंष्ट्रामयूखाः, तैः दंष्ट्रामयूखैः। अर्थस्य पतिः अर्थपतिः, तम् अर्थपतिम्।

**भा०**—नन्दिनीरक्षणाय स्वशरीरं त्यक्तुमुद्यतं राजानं दृष्ट्वा, सिंहः भूयोऽपि किंचित् स्मितं कृत्वा दिलीपं प्रत्युक्तवान्।

**हिन्दी**—दिलीप के इतना कहने के पश्चात् भगवान् शिव के पास रहने वाला वह सिंह, मुस्कराकर हिमालय की गुफाओं के अन्धकार को अपनी दन्तकिरणों से टुकड़े २ करता हुआ, महाराज दिलीप से फिर बोला ॥४६॥

**एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च।**
**अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥४७॥**

**सञ्जीविनी**—एकातपत्रमेकच्छत्रं जगतः प्रभुत्वं स्वामित्वम्। नवं वयो यौवनम्। इदं कान्तं रम्यं वपुश्च। इत्येवं बहु अल्पस्य हेतोरल्पेन कारणेन। अल्प-

फलायेत्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी। हातुं त्यक्तुमिच्छंस्त्वं विचारे कार्याकार्यविमर्शे मूढो मूर्खो मे मम प्रतिभासि ॥४७॥

**अन्वयः**—एकातपत्रं, जगतः प्रभुत्वं, नवं, वयः, इदं, कान्तं वपुः, च, 'एतत्सर्वं" बहु, अल्पस्य, हेतोः, हातुं इच्छन्, त्वं विचारमूढः, मे, प्रतिभासि।

**वाच्य०**—हातुमिच्छता त्वया विचारमूढेन मे प्रतिभायते।

**व्याख्या**—एकातपत्रम् = एकच्छत्रम् गच्छतीति जगत् तस्य जगतः = संसारस्य, प्रभोर्भावः प्रभुत्वं = स्वामित्वं, नवं = नूतनं, वयः = अवस्था इदं = दृश्यमानम्, कान्तं = मनोहरं, वपुः = शरीरञ्च "एतत्सर्वम्" बहु = बहुलमधिकमित्यर्थः, अल्पस्य = स्वल्पस्य, हेतोः = कारणात्, अल्पफलायेत्यर्थं, हातुं = त्यक्तुमिच्छन्, त्वं = दिलीपः, विचारे = कार्याकार्यविवेके, मूढः = मूर्खः, इति विचारमूढः, मे = मम, प्रतिभासि = लक्ष्यसे।

**समा**—एकञ्च तद् आतपत्रञ्च एकातपत्रम्। प्रभोर्भावः प्रभुत्वम्। विचारे मूढः विचारमूढः।

**अभि०**—हे राजन् यत्त्वम्, एकस्याः धेनोः रक्षार्थं चक्रवर्तित्वं नवयौवनसुखं देवतुल्यमिदं शरीरञ्च त्यक्तुमिच्छसि, तन्मे सर्वथा विवेकरहितः प्रतिभाससे।

**हिन्दी**—संसार का एकच्छत्र राज्य तथा नई जवानी एवं सुन्दर यह शरीर इन सब अमूल्य रत्नों को एक गौके पीछे नष्ट करना चाहते हो, इससे मैं समझता हूँ कि तुम कर्तव्याकर्तव्य के विचार में अकुशल ही हो ॥४७॥

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥४८॥

**सञ्जीविनी**—तव भूतेष्वनुकम्पा 'कृपा दयानुकम्पा स्यात्' इत्यमरः। कृपैव वर्तते चेदित्यर्थः। तर्हि त्वदन्ते तव नाशे सतीयमेका गौः स्वस्ति क्षेममस्या अस्तीति स्वस्तिमती भवेत्। जीवेदित्यर्थः। 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः। हे प्रजानाथ! जीवन्पुनः पितेव प्रजा उपप्लवेभ्यो विघ्नेभ्यः शश्वत्सदा। 'पुनः सदार्थयोः शश्वत्' इत्यमरः। पासि रक्षसि। स्वप्राणव्ययेनैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥४८॥

**अन्वयः**—तव, भूतानुकम्पा, चेत् "तर्हि" त्वदन्ते, "सति" इयम्, एका,

गौः, स्वस्तिमती, भवत्, प्रजानाथ, जीवन्, पुनः, पिता, इव, प्रजाः, उपप्लवेभ्यः, शश्वत्, पासि।

वाच्य०—तव भूतानुकम्पया चेद् "भूयते" तर्हि अनया एकया गवा, स्वस्तिमत्या भूयते, "त्वया" जीवता पुनः पित्रेव प्रजाः पायन्ते।

व्याख्या—तव = भवतः, भूतेषु = प्राणिषु, अनुकम्पा = दया, चेत् = यदि, अस्तीति, तर्हि इति शेषः, तव = भवतः, अन्तः = विनाशस्तस्मिन् त्वदन्ते, सतीति शेषः, इयम् = एषा, एका = केवला, गौः = धेनुः नन्दिनी, एव स्वस्तिमती = कल्याणवती, रक्षितेति यावत्, भवेत् = स्यात्, हे प्रजानाथ = जनस्वामिन्, जीवन् = प्राणान् धारयन्, पुनः, पिता = जनकः, इव = यथा, प्रजाः = जनान्, उपप्लवेभ्यः = उपद्रवेभ्यः,चौरादिभ्य इत्यर्थः, शश्वत् = निरन्तरं, पासि = त्रायसे।

समा०—भूतेषु अनुकम्पा भूतानुकम्पा। गच्छतीति गौः। स्वस्ति अस्या अस्तीति स्वस्तिमती। तव अन्तः त्वदन्तः, तस्मिन् त्वदन्ते। प्रजानां नाथः प्रजानाथः, तत्सम्बुद्धौ हे प्रजानाथ !

अभि०—हे राजन् त्वयि जीवति सति लोकरक्षणं भविष्यति, त्वन्नाशे पुनः केवलनन्दिनीरक्षणं भविष्यति। तव शरीररक्षणमेव श्रेष्ठं नतु केवलैकधेनुरक्षणम्।

हिन्दी—यदि तुम्हारी जीवों पर कृपा है तो तुम्हारे मर जाने पर केवल इस एक गौ का ही कल्याण होगा, हे प्रजानाथ दिलीप ! तुम्हारे जीवित रहने पर तो तुम पिता के समान प्रजा की कष्टों से सदा रक्षा करते रहोगे ॥४८॥

**अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि।**
**शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः॥४९॥**

सञ्जीविनी—अथेति पक्षान्तरे। अथवा। एकैव धेनुर्यस्य तस्मात्। अयं कोपकारणोपन्यास इति ज्ञेयम्। अत एवापराधे गवोपेक्षालक्षणे सति चण्डादतिकोपनात्। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। अत एव कृशानुः प्रतिमोपमा यस्य तस्मादग्निकल्पाद् गुरोर्बिभेषि। इति काकुः। "भीत्रार्थानां भयहेतुः" इत्यपादानात्पञ्चमी। अल्पवित्तस्य धनहानिरतिदुःसहेति भावः। अस्य गुरोर्मन्युः क्रोधः 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। घटा इवोधांसि यासां ताः घटोध्नीः "ऊधसोऽनङ्" इत्यनङादेशः। "बहुव्रीहेरूधसो ङीष्' इति ङीष्। कोटिशो गाः स्पर्शयता

प्रतिपादयता । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । भवता विनेतुमपनेतुं शक्यः ॥४९॥

**अन्वयः**—अथ, एकधेनोः, अपराधचण्डात्, कृशानुप्रतिमात्, गुरोः, बिभेषि, 'चेत्' अस्य, मन्युः घटोघ्नीः, कोटिशः, गाः, स्पर्शयता, भवता, विनेतुं शक्यः ।

**वाच्य०**—"त्वया" भीयते, अस्य, मन्युं स्पर्शयन् भवान् विनेतुं शक्नुयात् ।

**व्याख्या**—अथ = अथवा, एका = केवला, एव, धेनुः गौः, यस्य स तस्मात्, एकधेनोः, अत एव अपराधे = आगसि गवोपेक्षालक्षणे, चण्डात् = अतिक्रूरात्, अतएव कृशानुप्रतिमात् = वह्निसदृशात्, गुरोः = वसिष्ठात्, बिभेषि = त्रस्यसि, चेत्, अस्य = गुरोः, मन्युः = क्रोधः, घटाः इव ऊधांसि यासां ताः, कलशापीनवतीः, कोटिशः = कोटिसंख्यकाः, गाः = सौरभेयीः, स्पर्शयता = ददता, भवता = दिलीपेन, विनेतुं = दूरीकर्तुं, शक्यः = क्षमः ।

**समा०**—एकैव धेनुः यस्य सः एकधेनुः, तस्मात् एकधेनोः । अपराधे चण्डः अपराधचण्डः, तस्मात् अपराधचण्डात् । कृशानुः प्रतिमा यस्य सः कृशानुप्रतिमः, तस्मात् कृशानुप्रतिमात् । घटा इव ऊधांसि यासां ताः घटोघ्न्यः, ताः घटोघ्नीः । स्पर्शयति इति स्पर्शयन्, तेन स्पर्शयता ।

**अभि०**—हे राजन्, यदि त्वं नन्दिनीविनाशरूपापराधेन अतिक्रुद्धात् गुरोः बिभेषि तर्हि कोटिशः गाः दत्त्वा तस्य क्रोधशान्तिं कर्तुं समर्थोऽसि, अतः धेनुरक्षाग्रहो वृथैव ।

**हिन्दी**—अथवा हे राजन्, एक ही गौ होने के कारण गोरक्षा न कर सकने से अत्यन्त क्रुद्ध तथा अग्नि के तुल्य अपने गुरुजी से यदि तुम डरते हो तो घड़े के समान स्तन ( बाँक ) वाली करोड़ों गायें देकर गुरु के क्रोध को दूर कर सकते हो ॥४९॥

> तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
> महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥५०॥

**सञ्जीविनी**—तत्तस्मात्कारणात्कल्याणपरम्पराणां भोक्तारम् । कर्मणि षष्ठी । ऊर्जो बलमस्यास्तीत्यूर्जस्वलम् । "ज्योत्स्नातमिस्रा" इत्यादिना वलच्प्रत्ययान्तो निपातः । आत्मदेहं रक्ष । ननु गामुपेक्ष्यात्मदेहरक्षणे स्वर्गहानिः स्यात् । नेत्याह

महीतलेति। ऋद्धं समृद्धं राज्यम्। महीतलस्पर्शनमात्रेण भूतलसंबन्धमात्रेण भिन्नमैन्द्रमिन्द्रसंबन्धि पदं स्थानमाहुः। स्वर्गान्न भिद्यत इत्यर्थः॥५०॥

**अन्वयः**—तत्, कल्याणपरम्पराणां, भोक्तारम्, ऊर्जस्वलम्, आत्मदेहं, रक्ष, हि, ऋद्धं, राज्यं, महीतलस्पर्शनमात्रभिन्नम् ऐन्द्रं, पदम्, आहुः।

**वाच्य०**—भोक्ता, ऊर्जस्वलः, आत्मदेहः त्वया रक्ष्यतां, राज्यमैन्द्रं पदमुच्यते।

**व्याख्या**—तत् = तस्मात् कारणात् कल्याणानां = मंगलानां, परम्पराः = श्रेणयस्तासां कल्याणपरम्पराणां, भोक्तारम् = अनुभवितारम्, ऊर्जो बलमस्यास्तीति ऊर्जस्वलस्तमूर्जस्वलं = बलवन्तम्, आत्मनः = स्वस्य, देहं = शरीरं, रक्ष = पालय। हि = यतः, ऋद्धं = समृद्धं, राज्यं = राजकर्म, मह्यास्तलं महीतलं, महीतलस्य = पृथिवीतलस्य केवलं स्पर्शनं, तेन भिन्नं = पृथक्कृतम्, तथोक्तं इन्द्रस्येदमैन्द्रम् इन्द्रसम्बन्धि, पदं = स्थानम्, आहुः = कथयन्ति।

**समा०**—कल्याणानां परम्पराः कल्याणपरम्पराः, तासां कल्याणपरम्पराणाम्। ऊर्जः अस्यास्तीति ऊर्जस्वलः, तम् ऊर्जस्वलम्। आत्मनः देहः आत्मदेहः, तम् आत्म देहम्। मह्याः तलं महीतलम्, महीतलस्य स्पर्शनं महीतलस्पर्शनं, केवलं महीतलस्पर्शनं महीतलस्पर्शनमात्रम्, महीतलस्पर्शनमात्रेण भिन्नं महीतलस्पर्शनमात्रभिन्नम्, तत् महीतलस्पर्शनमात्रभिन्नम्। राज्ञः कर्म भावो वा राज्यम्, तत् राज्यम्। इन्द्रस्य इदम् ऐन्द्रम्, तत् ऐन्द्रम्।

**अभि०**—हे राजन् त्वमुत्तरोत्तरं शुभानां सुखानां भोक्तारं स्वदेहं पालय, यतः पृथिवीतलस्पर्शमात्रेण स्वर्गात् पृथग्भूतं समृद्धं राज्यमेव इन्द्रराज्यं कथयन्ति विद्वांसः॥५०॥

**हिन्दी**—हे राजन्, इसलिये तुम उत्तरोत्तर परम सुखों का भोग करनेवाले अपने शरीर की रक्षा करो, क्योंकि विद्वान् लोग समृद्धिशाली (तुम्हारे जैसे) राज्य को ही इन्द्र का पद (स्वर्ग) कहते हैं, अन्तर केवल इतना ही है कि इन्द्रपद में भूतल का स्पर्श नहीं होता॥५०॥

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव॥५१॥

**सञ्जीविनी**—मृगेन्द्रे एतावदुक्त्वा विरते सति गुहागतेनास्य सिंहस्य प्रतिस्वनेन शिलोच्चयः शैलोऽपि प्रीत्या तमेवार्थं क्षितिपालमुच्चैरभाषतेव। इत्युत्प्रेक्षा।

भाषिरयं ब्रुविसमानार्थत्वाद् द्विकर्मकः ब्रुविस्तु द्विकर्मकेषु पठितः। तदुक्तम्— "दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना॥" इति॥ ५१॥

अन्वयः—मृगेन्द्रे एतावत्, उक्त्वा, विरते, "सति" गुहागतेन, अस्य, प्रतिस्वनेन शिलोच्चयः अपि, प्रीत्या, तम्, एव, अर्थं, क्षितिपालम्, उच्चैः अभाषत इव।

वाच्य० – शिलोच्चयेनापि प्रीत्या स एवार्थः क्षितिपालमुच्चैरभाष्यत, इव।

व्याख्या—मृगेन्द्रे = सिंहे, एतत्परिमाणमस्येति एतावत् = इत्येतत्, उक्त्वा = कथयित्वा, विरते = तूष्णींभूते, "सति" गुहां = गह्वरं, गतः = प्राप्तस्तेन, गुहागतेन, अस्य = सिंहस्य, प्रतिस्वनेन = प्रतिशब्देन शिलोच्चयः = हिमालयः, अपि प्रीत्या = हर्षेण, प्रेम्णा, तं = सिंहोक्तम्, एव, अर्थम् = अभिधेयम्, यस्मिन् सः क्षितिं पालयतीति क्षितिपालस्तं क्षितिपालं = भूपालम्, उच्चैः = तारस्वरेण, अभाषत = अकथयत्, इवेत्युत्प्रेक्षा।

समा०–एतत् परिमाणमस्येति एतावत्, तत् एतावत्। मृगाणाम् इन्द्रः मृगेन्द्रः, तस्मिन् मृगेन्द्रे। गुहाया आगतः, गुहागतः, तेन गुहागतेन। शिलानाम् उच्चयः शिलोच्चयः। क्षितिं पालयतीति क्षितिपालः, तं क्षितिपालम्। अर्यते (ज्ञायते) इत्यर्थः, तम् अर्थम्।

अभि०–सिंहे एतावदुक्त्वा तूष्णीम्भूते सति, स्वगुहागतप्रतिशब्देन हिमाचलोऽपि सहत्रासकृतप्रेम्णा तमेवार्थं राजानमुच्चैरभाषतेव।

हिन्दी—इतना कहकर सिंह के मौन होने पर, गुहा में गये हुए इसके प्रतिशब्द के द्वारा हिमाचल भी प्रेम से मानो उसी बात को राजा से जोर से कहने लगा अर्थात् गुफा में गूंजे हुए शब्दों की प्रतिध्वनि से मालूम होता था पर्वत भी सिंह की बात का समर्थन कर रहा है॥५१॥

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः॥५२॥

सञ्जीविनी—देवानुचरस्येश्वरकिंकरस्य सिंहस्य वाचं निशम्य मनुष्यदेवो राजा पुनरप्युवाच। किंभूतः सन्। तेन सिंहेन यदध्यासितं व्याक्रमणम्। "नपुंसके भावे क्तः" तेन कातरे अक्षिणी यस्यास्तया। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच्। "षिद्गौरादिभ्यश्च" इति ङीष्। किं वा वक्ष्यतीति

भीत्यैवं स्थितयेत्यर्थः। धेन्वा निरीक्ष्यमाणः। अत एव सुतरां दयालुः सन्। सुतरामित्यत्र "द्विवचनविभज्य' इत्यादिना सुशब्दात्तरप्। "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यनेनाम्प्रत्ययः। "तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा ॥५२॥

**अन्वयः**—देवानुचरस्य, वाचं, निशम्य तदध्यासितकातराक्ष्या, धेन्वा, निरीक्ष्यमाणः, सुतरां दयालुः मनुष्यदेवः, पुनः, अपि, उवाच।

**वाच्य०**—धेन्वा निरीक्ष्यमाणेन दयालुना मनुष्यदेवेन पुनरप्यूचे।

**व्याख्या**–देवस्य = महादेवस्य, अनुचरः = किंकरस्तस्य देवानुचरस्य = सिंहस्य, वाचं = वाणीं, निशम्य = श्रुत्वा, मनुष्यदेवः = राजा दिलीपः, पुनः = भूयः, अपि, उवाच = कथयामास, "किम्भूतः सन्" तेन = सिंहेन, यदध्यासितम् = आक्रमणं तेन, सिंहाक्रमणेनेत्यर्थः, कातरे = भीते, अक्षिणी = नेत्रे यस्याः सा तया तथोक्तया, धेन्वा = नन्दिन्या, निरीक्ष्यमाणः = अवलोक्यमानः, अत एवेति शेषः, सुतराम् = अत्यन्तं, दयालुः = कारुणिकः, सन्,।

**समा०**—देवानाम् अनुचरः देवानुचरः, तस्य देवानुचरस्य। मनुष्याणां देवः मनुष्यदेवः। तेन अध्यासितं तदध्यासितम्, तदध्यासितेन कातरे अक्षिणी यस्याः सा तदध्यासितकातराक्षी, तया तदध्यासितकातराक्ष्या। निरीक्ष्यते इति निरीक्ष्यमाणः।

**अभि०**—सिंहाक्रमणेन, अधीरलोचनया नन्दिन्या दृश्यमानो राजा दिलीपः पुनरपि सिंहम्प्रत्यवोचत्।

**हिन्दी**—भगवान् महादेव के अनुचर सिंह की वाणी को सुनकर, मनुष्यों के राजा दिलीप, सिंहाक्रान्त होने से व्याकुल नेत्र वाली नन्दिनी से देखे जाते हुए इसी से और भी दयापूर्ण होकर पुनः सिंह से बोले ॥५२॥

क्षतात्किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥५३॥

**सञ्जीविनी**–'क्षणु हिंसायाम्' इति धातोः संपदादित्वात्क्विप्। (गमादीनाम्) इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम्। क्षतो नाशात् त्रायत इति क्षत्त्रः। सुपीति योगविभागात्कः, तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति क्षतादित्यादिना। उदग्र उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य शब्दो वाचकः। क्षत्त्रशब्द इत्यर्थः। क्षतात् त्रायत इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु।

नाश्वकर्णादिवत्केवलरूढः। किन्तु पङ्कजादिवद्योगरूढ इत्यर्थः। ततः किमित्यत आह–तस्य क्षत्त्रशब्दस्य विपरीतवृत्तेर्विरुद्धव्यापारस्य क्षतात् त्राणमकुर्वतः पुंसो राज्येन किम्। उपक्रोशमलीमसैर्निन्दामलिनैः। "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः। 'ज्योत्स्नातमिस्रा" इत्यादिना मलीमसशब्दो निपातितः। 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः। तैः प्राणैर्वा किम्। निन्दितस्य सर्वं व्यर्थमित्यर्थः। एतेन 'एकातपत्रम्' इत्यादिनोक्तेन श्लोकद्वये-नोक्तं प्रत्युक्तमिति वेदितव्यम् ॥५३॥

**अन्वयः**—उदग्रः, क्षत्रस्य, शब्दः, क्षतात्, त्रायते, इति, "व्युत्पत्त्या" भुवनेषु, रूढः, किल तद्विपरीतवृत्तेः, राज्येन किम्, उपक्रोशमलीमसैः, प्राणैः, वा, किम्।

**वाच्य०**—उदग्रेण क्षत्रस्य शब्देन "भूयते"।

**व्याख्या**—उदग्रः = उन्नतः, क्षत्त्रस्य = क्षत्त्रवर्णस्य, शब्दः = वाचकः, क्षतात् = नाशात्, त्रायते = रक्षति, इति व्युत्पत्त्या, भुवनेषु = लोकेषु, रूढः = प्रसिद्धः, किलेति निश्चये। तस्य = क्षत्त्रशब्दस्य, विपरीता = विरुद्धा, वृत्तिः = व्यापारो यस्य तस्य तद्विपरीतवृत्तेः, राज्येन = राजभावेन, किम् = किम्प्रयोजनम्, न किमपि प्रयोजनमित्यर्थः, उपक्रोशेन = निन्दया, मलीमसाः = मलिनास्तैः, उपक्रोशमली-मसैः, प्राणैः = असुभिः, वा = अथवा, किम्प्रयोजनम्, न किमपीति भावः। निन्दितस्य सर्वं व्यर्थमेवेति भावः।

**समा०**—क्षतात् त्रायते इति क्षत्त्रः तस्य क्षत्त्रस्य। राज्ञः भावः कर्म वा राज्यम्, तेन राज्येन। तस्य विपरीता वृत्तिः यस्य सः तद्विपरीतवृत्तिः, तस्य तद्विपरीतवृत्तेः। उपक्रोशेन मलीमसाः उपक्रोशमलीमसाः, तैः उपक्रोशमलीमसैः।

**अभि०**—संसारे विपद्ग्रस्तस्य रक्षक एव वस्तुनः क्षत्रियः, अतः स्वधर्मा-चरणरहितस्य क्षत्रियस्य राज्यं जीवनञ्च निन्दिततया व्यर्थमेव।

**हिन्दी**—उन्नत क्षत्रियजाति वाचक क्षत्त्र शब्द, 'विपत्ति से रक्षा करनेवाला' इस व्युत्पत्ति से संसार में प्रसिद्ध है, अतः इस शब्दार्थ के अनुसार आचरण न करनेवाले पुरुष के राज्य से या दुष्कीर्ति से मलिन हुए उसके प्राणों से क्या लाभ, अर्थात् वे दोनों ही व्यर्थ हैं ॥ ५३ ॥

'अथैकधेनोः' इत्यत्रोत्तरमाह—

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयाऽस्याम् ॥५४॥

**सञ्जीवनी**—अनुनयः क्रोधापनयः, चकारो वाकारार्थः, महर्षेरनुनयो वान्यासां पयस्विनीनां दोग्ध्रीणां गवां विश्राणनाद्दानात् । 'त्यागो विहापितं दानमुत्सर्जनविसर्जने । विश्राणनं वितरणम्' इत्यमरः । कथं नु शक्यः ? न शक्य इत्यर्थः । अत्र हेतुमाह—इमां गां सुरभेः कामधेनोः "पञ्चमी विभक्ते" इति पञ्चमी । अनूनामन्यूनामवेहि जानीहि । तर्हि कथमस्याः परिभवोऽभूदित्याह । रुद्रौजसेति । अस्यां गवि त्वया कर्त्रा प्रहृतं तु प्रहारस्तु । नपुंसके भावे क्तः । रुद्रौजसेश्वरसामर्थ्येन । न तु स्वयमित्यर्थः । "सप्तम्यधिकरणे च" इति सप्तमी ॥५४॥

**अन्वयः**—महर्षेः, अनुनयः, च, अन्यपयस्विनीनां, विश्राणनात्, कथं, नु, शक्यः, इमां, सुरभेः, अनूनाम्, अवेहि अस्यां, त्वया, प्रहृतं, तु, रुद्रौजसा ।

**वाच्य०**—अनुनयेन, शक्येन "भूयते", इयम्, अनूना, "त्वया" अवेयतां त्वं रुद्रौजसा प्रहृतवान् ।

**व्याख्या**—महर्षेः = वशिष्ठस्य, अनुनयः = सान्त्वनं, च = वा, अन्यपयस्विनीनां = प्रशस्तक्षीरवतीनाम् इतरधेनूनाम् । विश्राणनात् = दानात्, कथं नु = केन प्रकारेण, शक्यः = योग्यः, न शक्य इत्यर्थः, इमां = धेनुं, सुरभेः = कामधेनोः, अनूनाम् = अन्यूनाम्, तत्तुल्यामित्यर्थः अवेहि = जानीहि त्वमिति शेषः, अस्याम् = एतस्यां गवि, त्वया = सिंहेन, प्रहृतं = आक्रमणं तु प्रहारस्त्वित्यर्थः, रुद्रस्य = महादेवस्य, ओजः = बलम्, तेन रुद्रौजसा = ईश्वरसामर्थ्येन कृतम्, नतु स्वसामर्थ्येन ।

**समा०**—पयः आसामस्तीति पयस्विन्यः, अन्याश्च ताः पयस्विन्यश्च अन्यपयस्विन्यः, तासाम् अन्यपयस्विनीनाम् । महान् चासौ ऋषिश्च महर्षिः, तस्य महर्षेः । न ऊना अनूना, ताम् अनूनाम् । रुद्रस्य ओजः रुद्रौजः, तेन रुद्रौजसा ।

**अभि०**—अन्यप्रशस्तगोप्रदानेन वशिष्ठस्य क्रोधशान्तिर्न भवितुमर्हति, यतो हि इयं नन्दिनी कामधेनुतुल्या वर्तते, अस्यां यदाक्रमणं त्वया कृतं तत्तु शिवप्रभावेण नतु स्वप्रभावेण ।

**हिन्दी**—महर्षि वशिष्ठ के कोप की शान्ति दूसरी दूध देने वाली गौओं के देने से नहीं की जा सकती, क्योंकि यह गौ साधारण नहीं, इसे कामधेनु के बराबर ही समझो, इसके ऊपर जो तुमने आक्रमण किया है वह तो भगवान् शिव के प्रभाव से किया, न कि स्वसामर्थ्य से ॥५४॥

तर्हि किं चिकीर्षितमित्यत्राह—

**सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः।**
**न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥५५॥**

**सञ्जीविनी**—सेय गौर्मया। निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतमिति निष्क्रयः प्रतिशीर्षकम्। "एरच्" इत्यच्प्रत्ययः। स्वदेहार्पणमेव निष्क्रयस्तेन भवत्तस्त्वत्तः। पञ्चम्यास्तसिल्। मोचयितुं न्याय्या न्यायादनपेता। युक्तेत्यर्थः। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। एवं सति तव पारणा भोजनं विहता न स्यात्। मुनेः क्रिया होमादिः स एवार्थः प्रयोजनम्। स चालुप्तो भवेत्। स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यमिति भाव ॥५५॥

**अन्वयः—सा, इयं, मया, स्वदेहार्पणनिष्क्रयेण, भवत्त, मोचयितुं, न्याय्या, "एवं सति" तव, पारणा, विहता, न, स्यात् मुनेः, क्रियार्थः च अलुप्तः, भवेत्।**

**वाच्य०**—तयाऽनया न्याय्यया "भूयते", पारणया विहतया न "भूयेत" क्रियार्थेनालुप्तेन भूयेत।

**व्याख्या**—सा=पूर्वोक्ता, इयम्=एषा गौः, मया=दिलीपेन, स्वस्य देहः स्वदेहस्तस्य स्वदेहस्य=निजशरीरस्य, अर्पणं=दानं, तदेव निष्क्रयः, मूल्यं तेन तथोक्तेन, भवत्तः=त्वत्तः=सिंहात्, मोचयितुं=त्याजयितुं, न्याय्या= युक्ता, "एवं सति" तव=भवतः=सिंहस्य, पारणा=व्रतान्तभोजनं विहता= नष्टा, न=नहि, स्यात्=भवेत्, मुनेः=महर्षेः वशिष्ठस्य, क्रिया=होमादिः एव अर्थः=प्रयोजनमिति क्रियार्थः, अलुप्तः=अनष्टः, भवेत्=स्यात्।

**समा०**—स्वस्य देह स्वदेहः, स्वदेहस्य अर्पणं स्वदेहार्पणम्, स्वदेहार्पणमेव निष्क्रयः स्वदेहार्पणनिष्क्रयः, तेन स्वदेहार्पणनिष्क्रयेण। न्यायाद् अनपेता न्याय्या। न लुप्तः अलुप्तः। क्रियैव अर्थः क्रियार्थः।

**अभि०**—सेयं नन्दिनी मया स्वशरीरप्रदानविनिमयेन, त्वत्तः मोचयितुं युक्ता,

एवं सति बुभुक्षितस्य तव पारणा नष्टा न भवेत्, मम गुरोः वशिष्ठस्य होमादेरपि विधी रक्षितो भवेत् ।

**हिन्दी**—कामधेनु के तुल्य इस नन्दिनी को, मैं अपना शरीर तुम्हें देकर छुड़ाना न्यायसंगत समझता हूं। इस प्रकार तुम्हारा भोजन भी हो जायगा और महाराज वशिष्ठजी की होमादि क्रिया भी नष्ट न होगी, जो कि इस नन्दिनी के न रहने पर बन्द हो जायगी ॥५५॥

अत्र भवानेव प्रमाणमित्याह—

**भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।**
**स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥५६॥**

**सञ्जीविनी**—परवान्स्वामिपरतन्त्रो भवानपि । 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः । इदं वक्ष्यमाणमवैति । भवतानुभूयत एवेत्यर्थः । "शेषे प्रथमः" इति प्रथमपुरुषः । किमित्यत आह—हि यस्माद्धेतोः । 'हि हेतावधारणे' इत्यमरः । तव देवदारौ विषये महान्यत्नः । महता यत्नेन रक्ष्यत इत्यर्थः । इदंशब्दोक्तमर्थं दर्शयति । स्थातुमिति । रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयमक्षतेनाव्रणेन । नियुक्तेनेति शेषः । नियोक्तुः स्वामिनोऽग्रे स्थातुं शक्यं नहि ॥५६॥

**अन्वयः—परवान्, भवान्, अपि, इदम्, अवैति, हि, तव, देवदारौ, महान्, यत्नः, रक्ष्यं, विनाश्य, स्वयम्, अक्षतेन, नियोक्तुः, अग्रे, स्थातुं शक्यं, नहि ।**

**वाच्य०**—परवता भवता अवेयते, महता यत्नेन "भूयते" नहि स्वयमक्षतः शक्नुयात् ।

**व्याख्या**—परः=स्वाम्यादिः, अस्यास्तीति परवान्=पराधीनः, भवान्=सिंहोऽपि, इदं=वक्ष्यमाणम्, अवैति=जानाति, हि=यतः, तव=भवतः, देवदारौ=देवदारुवृक्षविषये, महान्=अतिशयितः, यत्नः=प्रयासः, 'अस्तीति' शेषः, महता प्रयत्नेन रक्ष्यत इत्यर्थः, रक्ष्यं=पालनीयं, वस्तु विनाश्य=विनाशं गमयित्वा, स्वयम्=आत्मना, अक्षतेन=व्रणरहितेन, नियोक्तुः=स्वामिनः, अग्रे=पुरतः, स्थातुं=स्थितिं कर्तुं, शक्यं नहि ।

**समा०**—परः अस्यास्तीति परवान् । रक्षितुं योग्यं रक्ष्यम्, तत् रक्ष्यम् । न क्षतः अक्षतः, तेन अक्षतेन ।

**अभि०**—किञ्च, स्वाम्यधीनो भवानपि इदं जानाति, यत् तवापि, अस्य देवदारुवृक्षस्य रक्षणे कियान् प्रयासो विद्यते, यतः रक्षणयोग्यं वस्तु विनाश्य स्वयमक्षतेन सता स्वमिनोऽग्रे कथं स्थातुं शक्यम् ।

**हिन्दी**—अपने स्वामी के अधीन आप भी इस बात को जानते हैं, क्योंकि आपका इस देवदारु वृक्ष की रक्षा करने में कितना प्रयत्न है । इसलिये रक्षणीय वस्तु का नाश करके स्वयं बिना नष्ट हुए अर्थात् हृष्ट-पुष्ट सेवक अपने स्वामी के आगे किसी प्रकार उपस्थित नहीं हो सकता है ।।५६।।

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ।।५७।।

**सञ्जीविनी**—किमपि किं वाऽहं तवाहिंस्योऽवध्यो मतश्चेत्तर्हि मे यश एव शरीरं तस्मिन्दयालुः कारुणिको भव । 'स्याद्दयालुः कारुणिकः' इत्यमरः । ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशः अत आह—एकान्तेति । मद्विधानां मादृशानां विवेकिनामेकान्तविध्वंसिष्ववश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेष्वनास्था खल्वनपेक्षैव । 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः ।।५७।।

**अन्वयः**—**किमपि, अहं, तव, अहिंस्यः, मतः, चेत्, 'तर्हि' मे, यशःशरीरे, दयालुः, भव, मद्विधानाम्, एकान्तविध्वंसिषु भौतिकेषु पिण्डेषु, अनास्था, खलु ।**

**वाच्य०**—मया तवाहिंस्येन मतेन "भूयते", अनास्थया "भूयते" "त्वया" दयालुना भूयताम् ।

**व्याख्या**—किमपि = किंवा, अहं = दिलीपः, तव = भवतः सिंहस्य, अहिंस्यः = अवध्यः, मतः = अभीष्टः, चेद् = यदि, "तर्हि," मे = मम दिलीपस्य, यशः = कीर्तिरेव, शरीरं तस्मिन् यशःशरीरे, दयालुः = कारुणिकः, भव त्वमिति शेषः, मम विधा इव विधा येषान्ते, तेषां मद्विधानाम् = मादृशानां = राज्ञां विवेकिनामित्यर्थः, एकान्तं = नियमेनावश्यं, विध्वंसिनः = नाशशीलाः, तेषु तथोक्तेषु भूतानां = पृथिव्यादीनां, विकाराः = परिणामास्तेषु भौतिकेषु पिण्डेषु = शरीरेषु, अनास्था = अनपेक्षा, खलु = निश्चयेनेत्यर्थः ।

**समा०**—हिंसितुं योग्यः हिंस्यः, न हिंस्यः अहिंस्यः. यश एव शरीरं यशःशरीरम्, तस्मिन् यशःशरीरे । एकान्तं विध्वंसिनः एकान्तविध्वंसिनः, तेषु एकान्त-

विध्वंसिषु। मम विधा इव विधा येषां ते मद्विधाः, तेषां मद्विधानाम्। भूतानां विकाराः भौतिकाः, तेषु भौतिकेषु। न आस्था अनास्था।

**अभि०**—किम्वा यदि केनापि कारणेन, अहं तव वध्यः स्यां, तर्हि भवान् मे यशोरूपशरीरेऽनुग्रहं विधाय, नश्वरशरीरभक्षणेन मम विशुद्धां कीर्तिं रक्षतु।

**हिन्दी**—और यदि तुम मुझे अवध्य समझते हो तो मेरे यशरूप शरीर पर दया करो, क्योंकि मेरे जैसे विवेकशील पुरुष अवश्य नष्ट होने वाले इस भौतिक शरीर पर किञ्चित् भी मोह नहीं रखते ॥५७॥

**सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते।**
**तद् भूतनाथानुग! नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥५८॥**

**सञ्जीविनी**—संबन्धं सख्यम्। आभाषणमालापः पूर्वं कारणं यस्य तमाहुः। 'स्यादाभाषणमालापः' इत्यमरः। स तादृक्संबन्धो वनान्ते संगतयोर्नावावयोर्वृत्तो जातः। तत्तो हेतोर्हे भूतनाथानुग शिवानुचर! एतेन तस्य महत्त्वं सूचयति। अत एव संबन्धिनो मित्रस्य मे प्रणयं याच्ञाम् 'प्रणयास्त्वमी। विश्रम्भयाच्ञाप्रेमाणः' इत्यमरः। विहन्तुं नार्हसि ॥५८॥

**अन्वयः—सम्बन्धम्, आभाषणपूर्वम्, आहुः, सः, वनान्ते, संगतयोः नौ, वृत्तः, तद्, भूतनाथानुग! त्वं सम्बन्धिनः, मे प्रणयं, विहन्तुं न, अर्हसि।**

**वाच्य०**—सम्बन्धः, आभाषणपूर्वः, उच्यते, तेन वृत्तेन "अभूयत" त्वया प्रणयो नार्ह्यते।

**व्याख्या**—सम्बन्धं = सख्यं = मित्रता, आभाषणम् = आलापः, पूर्वं = कारणं यस्य स तम् आभाषणपूर्वम्, आहुः = कथयन्ति, विद्वांसः, सः = सम्बन्धः, वनस्य = काननस्य अन्तः = प्रान्तः, प्रदेशस्तस्मिन् वनान्ते, संगतयोः = मिलितयोः, नौ = आवयोः, वृत्तः = जातः, तत् = तस्मात् कारणात्, हे भूतनाथानुग! = शिवानुचर! "अतएव" सम्बन्धिनः = मित्रस्य, मे = दिलीपस्य, प्रणयं = याच्ञां, विहन्तुं = नाशयितुं न = नहि, अर्हसि = योग्योऽसि।

**समा०**—आभाषणं पूर्वं यस्य सः आभाषणपूर्वः, तम् आभाषणपूर्वम्। वनस्य अन्तः वनान्तः, तस्मिन् वनान्ते। भूतानां नाथः भूतनाथः, अनुगच्छतीति अनुगः, भूतनाथस्य अनुगः भूतनाथानुगः, तत्संबुद्धौ भूतनाथानुग! सम्बन्धः अस्यास्तीति सम्बन्धी, तस्य सम्बन्धिनः।

**अभि०**—परस्परालापजनितं हि सख्यं भवति। तत्सख्यं वनमध्य मिलितयोः आवयोर्जातम्, अतएव हे शिवानुचर! मित्रस्य मे प्रार्थनां विफलीकर्तुं भवान् न योग्योऽस्तीति।

**हिन्दी**—आपस में वार्तालाप करने से मित्रता होती है ऐसा कहते हैं। वह मत्री वन में बातचीत करने से हम दोनों की हो गई है इसलिये, हे शिवानुचर! मित्र होकर मेरी प्रार्थना को ठुकराना तुम्हें उचित नहीं।५८॥

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥५९॥

**सञ्जीविनी**—तथेति एवमस्त्विति गां वाचमुक्तवते हरये सिंहाय। 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः' इति शाश्वतः। सद्यस्तत्क्षणं प्रतिष्टम्भात्प्रतिबन्धाद्विमुक्तो बाहुर्यस्य स दिलीपः। न्यस्तशस्त्रस्त्यक्तायुध सन्। स्वदेहम्। आमिषस्य मांसस्य। 'पललं क्रव्यमामिषम्' इत्यमरः। पिण्ड कवलमिव। उपानयत्समर्पितवान्। एतेन निर्ममत्वमुक्तम्।५९।

**अन्वयः**—तथा, इति, गाम् उक्तवते, हरये सद्यः, प्रतिष्टम्भविमुक्तबाहुः, सः, न्यस्तशस्त्रः, 'सन्' स्वदेहम् आमिषस्य, पिण्डम्, इव, उपानयत्।

**वाच्य०**—प्रतिष्टम्भविमुक्तबाहुना तेन न्यस्तशस्त्रेण स्वदेह. पिण्ड इव, उपानीयत।

**व्याख्या**—तथा = तेन प्रकारेण, यथा भवान् कथयति तथैव करिष्यामीति भावः। इति = एवंरूपां, गां = गिरम्, उक्तवते = कथितवते, हरये = सिंहाय, सद्यः = तत्क्षणे, प्रतिष्टम्भात् = प्रतिबन्धात् विमुक्तः = त्यक्तः, बाहुः = भुजो यस्य स तथोक्तः, सः = राजा दिलीपः, न्यस्तं = त्यक्तं, शस्त्रम् = आयुधं येन, स न्यस्तशस्त्रः, "सन्" स्वदेह = स्वशरीरम्, आमिषस्य = मांसस्य, पिण्ड = ग्रासम्, इव = यथा, उपानयत = उपाहरत् समर्पितवान्।

**समा०**—प्रतिष्टम्भाद् विमुक्तः बाहुः यस्य सः प्रतिष्टम्भविमुक्तबाहुः। न्यस्तं शस्त्रं येन सः न्यस्तशस्त्रः। स्वस्य देह. स्वदेहः, तं स्वदेहम्।

**अभि०**—यथा भवान् कथयति तथैव भवतु, इति कथयित्वा दिलीपस्य प्रार्थनां स्वीकुर्वते सिंहाय, प्रतिबन्धात् मुक्तबाहुः त्यक्तायुधो दिलीपः स्वशरीरं मांसपिण्डमिव समर्पितवान्।

**हिन्दी**—'तथास्तु' ऐसा कहने वाले सिंह के लिये; तुरन्त बन्धन से मुक्त हो गई है बाहु जिसकी और गिरा दिया है अस्त्र जिसने, ऐसे राजा दिलीप ने अपना शरीर, मांस के टुकड़े के समान समर्पण कर दिया ॥५९॥

**तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।**
**अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥६०॥**

**सञ्जीविनी**—तस्मिन् क्षण उग्रं सिंहनिपातमुत्पश्यत उत्प्रेक्षमाणस्य तर्कयतोऽवाङमुखस्याधोमुखस्य । 'स्यादवाङप्यधोमुखः' इत्यमरः । प्रजानां पालयितू राज्ञ उपर्युपरिष्टात् । "उपर्युपरिष्टात्" इति निपातः । विद्याधराणां देवयोनिविशेषाणां हस्तैर्मुक्ता पुष्पवृष्टिः पपात ॥६०॥

**अन्वयः**—तस्मिन्, क्षणे, उग्रं, सिंहनिपातम्, उत्पश्यतः, अवाङमुखस्य, प्रजानां, पालयितुः, उपरि, विद्याधरहस्तमुक्ता, पुष्पवृष्टिः, पपात ।

**वाच्य०**—विद्याधरहस्तमुक्तया पुष्पवृष्टया पेते ।

**व्याख्या**—तस्मिन् = पूर्वोक्ते, क्षणे = मुहूर्ते, हरये स्वदेहार्पणकाले इत्यर्थः, उग्रं = उत्कटं, भयंकरं, सिंहस्य = केसरिणः, निपातः = निपतनम्, तं सिंहनिपातम्, उत्पश्यतः = उत्प्रेक्षमाणस्य, तर्कयतः, अवाङ = अधः, मुखम् = आननं यस्य स तस्यावाङमुखस्य, प्रजानां = जनानां, पालयितुः = रक्षितुर्दिलीपस्य, उपरि = उपरिष्टात्, विद्याधराणां = देवयोनिविशेषाणां, हस्ताः = कराः, तैर्मुक्ता = पतिता, पुष्पाणां = कुसुमानां, वृष्टिः = वर्षणं, पपात = अपतत् ।

**समा०**—सिंहस्य निपातः सिंहनिपातः, तं सिंहनिपातम् । अवाक् मुखं यस्य सः अवाङमुखः, तस्य अवाङमुखस्य । पुष्पाणां वृष्टिः पुष्पवृष्टिः। विद्याधराणां हस्ताः विद्याधरहस्ताः, विद्याधरहस्तैः मुक्ता विद्याधरहस्तमुक्ता ।

**अभि०**—तस्मिन् क्षणे भयंकरं सिंहपतनं तर्कयतोऽधोमुखस्य राज्ञ उपरि विद्याधराणां हस्तैः मुक्ता पुष्पवृष्टिः पतिता ।

**हिन्दी**—उस समय नीचा मुख करके राजा दिलीप यह सोच ही रहे थे कि सिंह मेरे ऊपर झपटने ही वाला है इतने में ही प्रजापालक महाराजा दिलीप के ऊपर आकाश से विद्याधरों ने पुष्पवृष्टि की झड़ी लगा दी ॥६०॥

**उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।**
**ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥६१॥**

**सञ्जीविनी**—राजा अमृतमिवाचरतीत्यमृतायमानं तत्। "उपमानादाचारे" इति क्यच्। ततः शानच्। उत्थितमुत्पन्नम्। हे वत्स! उत्तिष्ठ इति वचो निशम्य श्रुत्वा। उत्थितः सन्। अस्तेः शतृप्रत्ययः। अग्रतोऽग्रे प्रस्रवः क्षीरस्रावोऽस्ति यस्याः सा प्रस्रविणी तां प्रसविणीं गां स्वां जननीमिव ददर्श। सिंहं न ददर्श ॥६१॥

**अन्वयः—राजा, अमृतायमानम्, उत्थितं, हे वत्स! उत्तिष्ठ, इति, वचः, निशम्य, उत्थितः, सन्, अग्रतः प्रस्रविणीं, गां, स्वां, जननीम्, इव, ददर्श, सिंहं, न, ददर्श।**

**वाच्य०**—राज्ञा, उत्थितेन सता प्रस्रविणी गौः स्वा जननी इव ददृशे, सिंहो न ददृशे।

**व्याख्या**—राजा = दिलीपः, अमृतमिवाचरतीत्यमृतायमानं तत्, अमृतायमानम् = पीयूषायमाणम्, 'पीयूषममृतं सुधा' इत्यमरः। उत्थितम् = उत्पन्नम्, हे वत्स = हे पुत्र!, उत्तिष्ठ = उत्थितो भव, इति = इत्येवं, वचः = वचनं, निशम्य = श्रुत्वा, उत्थितः = ऊर्ध्वमवस्थानं कृतवान् सन्, अग्रतः = अग्रे, प्रस्रवः = क्षीरस्रावः, अस्ति, अस्याः सा तां प्रस्रविणीं, गां = नन्दिनीं, स्वाम् = आत्मीयां, जननीं = मातरम्, इव = यथा, ददर्श = अपश्यत्, सिंहं = केसरिणं, न = नहि "ददर्श"।

**समा०**—अमृतमिव आचरतीत्यमृतायमानं, तत् अमृतायमानम्। प्रस्रवः अस्या अस्तीति प्रस्रविणी, तां प्रस्रविणीम्। जनयतीति जननी, तां जननीम्।

**अभि०**—हे पुत्र! उत्तिष्ठ इत्यमृतसमानं धेनुवाक्यं श्रुत्वा, यावद्दिलीप उत्थितः सन् पश्यति, तावदग्रे वर्तमानां क्षीरस्राववतीं स्वकीयां मातरमिव नन्दिनीमेवावलोकितवान् न तु केसरिणमिति।

**हिन्दी**—राजा दिलीप अमृत के तुल्य, नन्दिनी के मुख से निकले 'हे पुत्र उठो' इस वचन को सुनकर ज्यों ही उठा तो सामने खड़ी तथा स्तनों से दूध बहाती हुई अपनी माता के समान नन्दिनी ही दिखाई दी, सिंह नहीं ॥६१॥

**तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि।**
**ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥६२॥**

**सञ्जीविनी**—विस्मितमाश्चर्यं गतम्। कर्तरि क्तः। तं दिलीपं धेनुरुवाच। किमित्यत्राह। हे साधो! मया मायामुद्भाव्य कल्पयित्वा परीक्षितोऽसि। ऋषि-

प्रभावान्मय्यन्तको यमोऽपि प्रहर्तुं न प्रभुर्न समर्थः। अन्ये हिंस्रा घातुकाः। 'शरारुर्घातुको हिंस्र.' इत्यमरः। "नमिकम्पिस्म्यजसकमहिंसदीपोरः" इत्यादिना रप्रत्ययः। किमुत सुष्ठु न प्रभव इति योज्यम्। 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः ॥६२॥

**अन्वयः**—विस्मितं, तं, धेनुः, उवाच, साधो, मया, मायाम, उद्भाव्य, "त्वं" परीक्षितः, असि, ऋषिप्रभावात्, मयि, अन्तकः, अपि, प्रहर्तुं, न, प्रभुः, अन्यहिंस्राः, किमुत।

**वाच्य०**—विस्मितः स धेन्वा ऊचे, अहं त्वां परीक्षितवती, अस्मि, अन्तकेनापि प्रभुणा न "भूयते" अन्यहिंस्रैः किमुत।

**व्याख्या**—विस्मितं = साश्चर्यं, तं = दिलीपं, धेनुः = नन्दिनी, उवाच = जगाद हे साधो! हे सज्जन! मया = नन्दिन्या, मायां = शाम्बरीं सिंहरूपाम्, उद्भाव्य = कल्पयित्वा, त्वमिति शेषः, परीक्षितः = कृतपरीक्षः असि = भवसि। ऋषेः = वशिष्ठस्य, प्रभावात् = प्रतापात्, मयि = धेनौ, अन्तकः = यमः, अपि, प्रहर्तुं = हन्तुं, न = नहि, प्रभुः = समर्थः, अन्ये = अपरे च ते हिंस्राः = घातुका इति अन्यहिंस्राः, किमुत न प्रभवः, न समर्था इत्यर्थः।

**समा०**—ऋषेः प्रभावः ऋषिप्रभावः, तस्माद् ऋषिप्रभावात्। अन्तं करोतीति अन्तकः। अन्ये च ते हिंस्राश्च अन्यहिंस्राः।

**अभि०**—हे साधो! सिंहरूपां मायां विधाय मया तव परीक्षा कृता। मयि ऋषिप्रभावात् यमराजोऽपि आक्रमणं कर्तुं न समर्थः, सिंहादयस्तु सुतरामसमर्था वर्तन्ते इति दिलीपं धेनुः कथयामास।

**हिन्दी**—आश्चर्य में पड़े राजा दिलीप से मनुष्य की बोली में धेनु बोली हे साधो! मैंने माया रचकर तुम्हारी परीक्षा की थी, वशिष्ठ ऋषि के प्रभाव से यमराज भी मेरा कुछ नहीं विगाड़ सकता, दूसरे हिंसक जन्तुओं की तो सामर्थ्य ही क्या ॥६२॥

**भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र! वरं वृणीष्व।**
**न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥६३॥**

**सञ्जीविनी**—हे पुत्र! गुरौ भक्त्या। मय्यनुकम्पया च। ते तुभ्यं प्रीतास्मि (क्रियाग्रहणमपि कर्तव्यम्) इति चतुर्थी। वरं देवेभ्यो वरणीयमर्थम्। 'देवाद्

वृत्ते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इत्यमरः। वृणीष्व स्वीकुरु। तथाहि। मां केवलानां पयसां प्रसूतिं कारणं नावेहि न विद्धि। किन्तु प्रसन्नां मां। कामान्दोग्धीति कामदुघां तामवेहि। 'दुहः कब्धश्च" इति कप्प्रत्ययः ॥६३॥

**अन्वयः**—"हे" पुत्र, गुरौ भक्त्या, मयि, अनुकम्पया, च, ते, प्रीता अस्मि, वरं, वृणीष्व, मां, केवलानां, पयसां, प्रसूतिं न, अवेहि प्रसन्नां, मां कामदुघां, अवेहि।

**वाच्य०**—प्रीतया मया भूयते, त्वया वरः व्रियताम्, त्वयाहं प्रसूतिः न अवेयै, प्रसन्ना अहं कामदुघा अवयै।

**व्याख्या**—"हे" पुत्र! = वत्स! गुरौ = महर्षिवशिष्ठे, भक्त्या = अनुरागेण, मयि = धेनौ, अनुकम्पया = दयया, च ते तुभ्यं प्रीता = प्रसन्ना, अस्मि = भवामि, वरं = वरणीयं, देवेभ्यो वरणीयमित्यर्थः वृणीष्व = प्रार्थयस्व, तथाहि मां = गाम्, केवलानाम् = एकेषाम् 'एके मुख्यान्यकेवलाः' इत्यमरः। पयसां = दुग्धानां, प्रसूतिं = कारणं, न = नहि, अवेहि = विद्धि, किन्तु प्रसन्नां = प्रीतां, मामिति शेषः, कामान् = मनोरथान्, दोग्धि = पूरयतीति कामदुघः, तां कामदुघाम् अवेहि।

**समा०**—कामान् दोग्धि इति कामदुघा, तां कामदुघाम्।

**अभि०**—हे पुत्र! अहं ते प्रसन्नास्मि, अतस्त्वं वरं प्रार्थय। अहं केवलानां दुग्धानामेव दात्री न, किन्तु प्रसन्ना सती सर्वमनोरथानां पूरयित्री इति जानीहि।

**हिन्दी**—हे पुत्र! गुरुजी में भक्ति और मुझपर अनुकम्पा रखने से मैं तुम पर प्रसन्न हूँ, वर मांगो, मुझे सिर्फ दूध ही देनेवाली गौ मत समझो, किन्तु प्रसन्न होने पर मैं सम्पूर्ण मनोरथों को सिद्ध करनेवाली हूँ ॥६३॥

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥६४॥

**सञ्जीविनी**—ततो मानितार्थी। स्वहस्तार्जितो वीर इति शब्दो येन सः। एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम्। स राजा हस्तौ समानीय सन्धाय। अञ्जलिं बद्ध्वेत्यर्थः। वंशस्य कर्तारं प्रवर्तयितारम्। अत एव रघुकुलमिति प्रसिद्धिः। अनन्तकीर्तिं स्थिरयशसं तनयं पुत्रं सुदक्षिणायां ययाचे ॥६४॥

**अन्वयः**—ततः मानितार्थी, स्वहस्तार्जितवीरशब्दः, सः, हस्तौ, समानीय, वंशस्य, कर्तारम्, अनन्तकीर्तिं, तनयं, सुदक्षिणायां, ययाचे।

**वाच्य०**—मानितार्थिना स्वहस्तार्जितवीरशब्देन तेन वंशस्य कर्ताऽनन्तकीर्तिः तनयो ययाचे।

**व्याख्या**—ततः = अनन्तरं, मानिताः = सत्कृताः, अर्थिनः = याचकाः येन सः, मानितार्थी, स्वस्य = निजस्य, हस्तौ = करौ, ताभ्याम्, अर्जितः = प्राप्तः, लब्धः, वीरः = पराक्रमी, इति शब्दः = पदवी येन सः स्वहस्तार्जितवीरशब्दः, सः = राजा, दिलीपः, हस्तौ = करौ, समानीय = सम्पुटीकृत्य = अञ्जलिं बद्ध्वेत्यर्थः, वंशस्य = कुलस्य, कर्तारं = प्रवर्तयितारं, अनन्ता = स्थिरा, कीर्तिः = यशो यस्य सः अनन्तकीर्तिः, तं तथोक्तम्, तनयं = पुत्रं, सुदक्षिणायां = स्वभार्यायां, ययाचे = याचितवान्।

**समा०**—अर्थन्त इत्यर्थिनः, मानिताः अर्थिनः येन सः मानितार्थी। स्वस्य हस्तः स्वहस्तः, वीर इति शब्दः वीरशब्दः, स्वहस्तेन अर्जितः वीरशब्दः येन सः स्वहस्तार्जितवीरशब्दः। न विद्यते अन्तः यस्याः सा अनन्ता, अनन्ता कीर्तिः यस्य सः अनन्तकीर्तिः, तम् अनन्तकीर्तिम्।

**अभि०**—ततः पराक्रमी सत्कृतार्थी राजा दिलीपोऽञ्जलिं बद्ध्वा, कुलप्रवर्तकं यशस्विनं पुत्रं याचितवान्।

**हिन्दी**—इस के पश्चात् याचकवर्ग को संतुष्ट करने वाले, अपने बाहुबल से वीर उपाधि को प्राप्त करने वाले राजा दिलीप ने हाथ जोड़कर वंश को चलानेवाला परम यशस्वी पुत्र सुदक्षिणा के गर्भ से होने की प्रार्थना की ॥६४॥

**सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा।**
**दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥६५॥**

**सञ्जीविनी**—सा पयस्विनी गौः। संतानं कामयत इति संतानकामः। 'कमु कान्तौ' "कर्मण्यण्" तस्मै राज्ञे तथेति तथास्त्विति। काम्यत इति कामो वरः। कामार्थे घञ्प्रत्ययः। तं प्रतिश्रुत्य प्रतिज्ञाय। हे पुत्र! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वोपभुङ्क्ष्व। 'उपयुङ्क्ष्व' इति वा पाठः। 'पिब' इति तमादिदेशाज्ञापितवती ॥६५॥

**अन्वयः**—**सा, पयस्विनी, सन्तानकामाय, राज्ञे, तथा, इति, कामं, प्रतिश्रुत्य, पुत्र! मदीयं, पयः, पत्रपुटे, दुग्ध्वा, उपभुङ्क्ष्व, इति, तम्, आदिदेश।**

**वाच्य०**—तया पयस्विन्या "त्वया" पय उपभुज्यतामिति स आदिदिशे।

**व्याख्या**—सा = पूर्वोक्ता, प्रशस्तं पयः = क्षीरमस्या अस्तीति पयस्विनी = प्रशस्तक्षीरवती गौः, सन्तानं कामयत इति सन्तानकामस्तस्मै सन्तानकामाय = पुत्रार्थिने, तस्मै = राज्ञे दिलीपाय, तथा = तेन प्रकारेण, यथेच्छसि तथैव भवत्विति, काम्यते, इति कामः = वरस्तं कामं, प्रतिश्रुत्य = प्रतिज्ञाय, हे पुत्र ! वत्स ! ममेदं मदीयं = मदीयस्तननिःसृतं, पयः = दुग्धं पत्राणां = पर्णानां, पुटः = पात्रं तस्मिन् पत्रपुटे, दुग्ध्वा = दोहनं कृत्वा, उपभुङ्क्ष्व = पिब, इति तम् = दिलीपम्, आदिदेश = आदिष्टवती ।

**समा०**—पयः अस्या अस्तीति पयस्विनी, सन्तानं कामयते इति सन्तानकामः, तस्मै सन्तानकामाय । मम इदं मदीयम्, तत् मदीयम् ।

**अभि०**—सा धेनुः पुत्रार्थिने दिलीपाय तथास्तु, इति वरं दत्त्वा हे पुत्र ! मदीयं दुग्ध पर्णनिर्मितपात्रे दुग्ध्वा त्वं पिबेति, आज्ञापयामास ।

**हिन्दी**—उस प्रशस्त दूधवाली धेनु ने पुत्रार्थी राजा दिलीप को "तुम्हें पुत्र-लाभ हो" यह वर देकर, हे पुत्र ! मेरा दूध दोने में दुहकर पी लो ऐसी आज्ञा दी ॥६५॥

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥६६॥

**सञ्जीविनी**—हे मातः ! वत्सस्य वत्सपीतस्य शेषम् । वत्सपीतावशिष्ट-मित्यर्थः । होम एवार्थः । तस्य विधिरनुष्ठानम् । तस्य च शेषम् । होमावशिष्ट-मित्यर्थः । तव ऊधसि भवमौधस्यं क्षीरम् 'शरीरावयवाच्च" इति यत्प्रत्ययः । रक्षिताया उर्व्याः षष्ठांशं षष्ठभागमिव । ऋषेरनुज्ञामधिगम्य उपभोक्तुं पातुमि-च्छामि ॥ ६६ ॥

**अन्वयः**—**मातः ! वत्सस्य, होमार्थविधेः, च, शेषं, तव, औधस्यं, रक्षितायाः उर्व्याः, षष्ठांशम्, इव, ऋषेः, अनुज्ञाम्, अधिगम्य, उपभोक्तुम्, इच्छामि ।**

**वाच्य०**—हे मातः ! उर्व्याः षष्ठांश इव औधस्यं भोक्तुं मयेष्यते ।

**व्याख्या**—हे मातः ! = जननि, वत्सस्य = शकृत्करेः, शेषं = वत्सपीतावशेषं, होमः = हवनम्, एव अर्थः = प्रयोजनं तस्य विधिः = अनुष्ठानं तस्य होमार्थविधेश्च शेषं, तव = भवत्याः, ऊधसि भवम् ऊधस्यं तदेवौधस्यं = दुग्धं, रक्षितायाः = पालि-

तायाः, उर्व्याः = पृथिव्याः, षष्ठांशं = षष्ठभागमिव, ऋषेः = वशिष्ठस्य, अनुज्ञाम् = आज्ञाम् अधिगम्य = प्राप्य, उपभोक्तुं = पातुम् इच्छामि = अभिलषामि ।

**समा०**—होम एव अर्थः होमार्थः, होमार्थस्य विधिः होमार्थविधिः, तस्य होमार्थविधेः । ऊधसि भवम् ऊधस्यम्, ऊधस्यमेव औधस्यम्, तत् औधस्यम् । षण्णां पूरणः षष्ठः, षष्ठश्चासावंशश्च षष्ठांशः, तं षष्ठांशम् ।

**अभि०**—हे मातः ! वत्सपानावशिष्टं हवनावशिष्टञ्च तव दुग्धं रक्षिताया भूमेः षष्ठांशमिव गुरोरनुज्ञां प्राप्य, पातुमिच्छामि ।

**हिन्दी**—हे माँ, बछड़े के पीने से तथा अग्निहोत्र कर्म से बचने पर गुरु की आज्ञा लेकर मैं तुम्हारा दूध उसी प्रकार ग्रहण करना चाहता हूँ, जिस प्रकार पृथ्वी की रक्षा करके उसमें उत्पन्न अन्नादि का छठा भाग ग्रहण करता हूँ ॥६६॥

इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥६७॥

**सञ्जीविनी**—इत्थमनेन प्रकारेण क्षितीशेन दिलीपेन विज्ञापिता वसिष्ठस्य धेनुः प्रीततरा । पूर्वं शुश्रूषया प्रीता संप्रत्यनया विज्ञापनया प्रीततरातिसंतुष्टा बभूव । तदन्विता तेन दिलीपेनान्विता हैमवताद्धिमवत्संबन्धिनः कुक्षेर्गुहायाः सकाशादश्रमेणानायासेनाश्रमं प्रत्याययावागता च ॥६७॥

**अन्वयः**—**इत्थं, क्षितीशेन, विज्ञापिता, वशिष्ठधेनुः, प्रीततरा, बभूव, तदन्विता, हैमवतात्, कुक्षेः, अश्रमेण, आश्रमं प्रत्याययौ च ।**

**वाच्य०**—विज्ञापितया वशिष्ठधेन्वा प्रीततरया बभूवे, तदन्वितयाऽश्रमः प्रत्यायये ।

**व्याख्या**—इत्थम् = अनेन प्रकारेण, क्षितीशेन = राज्ञा दिलीपेन, विज्ञापिता = निवेदिता, वशिष्ठधेनुः = नन्दिनी, अतिशयेन प्रीता, प्रीततरा = अतिसंतुष्टा, पूर्वं तु प्रीता, इदानीं प्रीततरा, इतिभावः । बभूव = जाता, तेन = दिलीपेन, अन्विता = युक्ता सहिता, हैमवतात् = हिमालयसम्बन्धिनः, कुक्षेः = गुहायाः सकाशात्, न श्रमः अश्रमः तेन अश्रमेण = अप्रयासेन, आश्रमं = निजवासस्थानं, प्रत्याययौ = प्रत्याजगाम ।

**समा०**—क्षितेः ईशः क्षितीशः, तेन क्षितीशेन । वसिष्ठस्य धेनुः वसिष्ठधेनुः ।

अत्यन्तं प्रीता प्रीततरा । हिमवतः अयं हैमवतः, तस्मात् हैमवतात् । न श्रमः अश्रमः, तेन अश्रमेण ।

**अभि०**—इत्थं दिलीपेन निवेदिता नन्दिनी, पूर्वं केवलं प्रीता, संप्रति तु अधिकतरं प्रसन्ना सती वशिष्ठाश्रमं प्रत्याजगाम ।

**हिन्दी**—इस प्रकार राजा के प्रार्थना करने पर वशिष्ठजी की धेनु नन्दिनी अत्यन्त प्रसन्न होकर दिलीप सहित, हिमालय की गुफा से बिना थकावट के आश्रम को लौट आई ॥६७॥ +

**तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।**
**प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥६८॥**

**सञ्जीविनी**—प्रसन्नेन्दुरिव मुखं यस्य स नृपाणां गुरुर्दिलीपः प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमूहितं तस्या धेनोः प्रसादमनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात्पुनरुक्तयेव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात्प्रियायै शशंस । कथितस्यैव कथनं पुनरुक्तिः । न चेह तदस्ति किंतु चिह्नैः कथितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ॥

**अन्वयः**—**प्रसन्नेन्दुमुखः, नृपाणां गुरुः, प्रहर्षचिह्नानुमितं, तस्याः प्रसादं, पुनरुक्तया, इव, वाचा, गुरवे, निवेद्य, पश्चात् प्रियायै, शशंस ।**

**वाच्य०**—प्रसन्नेन्दुमुखेन गुरुणा प्रहर्षचिह्नानुमितः प्रसादः शशंसे ।

**व्याख्या**—प्रसन्नः = निर्मलश्चासौ, इन्दुः = चन्द्र इति प्रसन्नेन्दुः, प्रसन्नेन्दुरिव, मुखम् = आननं यस्य सः, प्रसन्नेन्दुमुखः, नृपाणां = भूपालानां, गुरुः = श्रेष्ठः, दिलीपः, प्रहर्षस्य = आनन्दस्य, चिह्नानि = लक्षणानि तैरनुमितः = ज्ञातस्तं प्रहर्षचिह्नानुमितं, तस्याः = धेनोः, प्रसादम् = अनुग्रहम्, पुनरुक्तया = भूयः कथितया, गुरुणा प्रहर्षचिह्नैरेव ज्ञातत्वात्, वाचा = वचनेन, गुरवे = वशिष्ठाय, निवेद्य = विज्ञाप्य, "पश्चात्" प्रियायै = सुदक्षिणायै, शशंस = कथयामास ।

**समा०**—प्रसन्नश्चासौ इन्दुश्च प्रसन्नेन्दुः, प्रसन्नेन्दुरिव मुखं यस्य सः प्रसन्नेन्दुमुखः । प्रकृष्टाश्च ते हर्षाश्च प्रहर्षाः, प्रहर्षाणां चिह्नानि प्रहर्षचिह्नानि, प्रहर्षचिह्नैः अनुमितः प्रहर्षचिह्नानुमितः, तं प्रहर्षचिह्नानुमितम् ।

**अभि०**—प्रसन्नवदनो राजा दिलीपः, प्रसन्नतानुमापकैः मुखरागादिचिह्नैः कथितप्रायं नन्दिनीवरप्रदानानुग्रहं पूर्वं गुरवे निवेद्य, पश्चात् सुदक्षिणायै निवेदितवान् ।

**हिन्दी**—निर्मल चन्द्रमा के समान मुखवाले राजाधिराज दिलीप, जब वशिष्ठजी के पास पहुँचे, तब राजा की प्रसन्नता को देखकर, वशिष्ठजी पहले ही सब बातें समझ गए, इसलिये राजा ने जो समाचार सुनाया, वह उन्हें ऐसा जान पड़ा मानो दुबारा कहा जा रहा हो, वशिष्ठजी से कह चुकने पर, पीछे वह समाचार सुदक्षिणा को भी कहा ॥६८॥

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥६९॥

**सञ्जीविनी**--अनिन्दितात्मा अगर्हितस्वभावः। सत्सु वत्सलः प्रेमवान्सद्वत्सलः "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः। वसिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य चावशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरम्। शुभ्रं मूर्तं परिच्छिन्नं यश इव। अतितृष्णः सन्पपौ ॥६९॥

**अन्वयः**—**अनिन्दितात्मा, सद्वत्सलः, वसिष्ठेन, कृताभ्यनुज्ञः, स, वत्सहुतावशेषं, नन्दिनीस्तन्यं, शुभ्रं, मूर्तं, यशः, इव, अतितृष्णः, सन्, पपौ।**

**वाच्य०**—अनिन्दितात्मना सद्वत्सलेन कृताभ्यनुज्ञेन तेन अतितृष्णेन पपे।

**व्याख्या**—अनिन्दितः = अगर्हितः आत्मा = स्वभावो यस्य सोऽनिन्दितात्मा, सत्सु = सज्जनेषु, वत्सलः = प्रेमवान्, वशिष्ठेन = महर्षिणा, कृता = विहिता, अनुज्ञा = आज्ञा, यस्य सः = कृताभ्यनुज्ञः, सः = राजा, वत्सस्य = शकृत्करेः, हुतस्य = हवनस्य च, अवशेषम् = अवशिष्टम्, वत्सहुतावशेषं, नन्दिनीस्तन्यं = धेनुक्षीरं, शुभ्रं = श्वेतं, मूर्तं = मूर्तिमत्, यशः = कीर्तिम्, इव = यथा, अतिशयिता तृष्णा यस्य सः, तथोक्तः सन् पपौ = पीतवान्।

**समा०**—निन्दा अस्य संजाता इति निन्दितः, न निन्दितः अनिन्दितः, अनिन्दितः आत्मा यस्य सः अनिन्दितात्मा। सत्सु वत्सलः सद्वत्सलः। कृता अभ्यनुज्ञा यस्य सः कृताभ्यनुज्ञः। वत्सश्च हुतञ्च वत्सहुते, वत्सहुतयोः अवशेषं वत्सहुतावशेषम्, तत् वत्सहुतावशेषम्। स्तने भवं स्तन्यम्, नन्दिन्याः स्तन्यं नन्दिनीस्तन्यम्, तत् नन्दिनीस्तन्यम्। अति (अत्यन्तं) तृष्णा यस्य सः अतितृष्णः।

**अभि०**—राजा दिलीपः गुरोः वसिष्ठस्याज्ञया वत्सहवनावशिष्टं नन्दिनीदुग्धं मूर्तिमत् धवलं यश इवातितृष्णः सन् पपौ।

हिन्दी—जब बछड़ा दूध पी चुका और हवन भी हो चुका, तब सज्जनों के मी प्रशंसनीय राजा दिलीप ने वसिष्ठजी की आज्ञा से दूध को, शरीर धारी फेद यश के समान अत्यन्त प्यासा होकर पिया ॥६९॥

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥७०॥

सञ्जीविनी—वशी वशिष्ठः प्रातः। यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवा-ऽस्याङ्गभूता या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवम्। तत्कालो-चतमित्यर्थः। "काळाट्ठञ्" इति ठञ्प्रत्ययः ( यथाकथंचिद् गुणवृत्त्यापि काले र्तमानत्वात्प्रत्यय इष्यते ) इति वृत्तिकारः। ईयते प्राप्यतेऽनेनेत्ययनं स्वस्ति भस्यायनं स्वस्त्ययनं शुभावहमाशीर्वादं प्रयुज्य। तौ दम्पती। कर्मभूतौ। स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥७०॥

अन्वयः—वशी, वसिष्ठः, प्रातः, यथोक्तव्रतपारणान्ते, प्रास्थानिकं, स्वस्त्य-नं, प्रयुज्य, तौ, दम्पती, स्वां, राजधानीं, प्रति, प्रस्थापयामास।

वाच्य०—वशिना वसिष्ठेन तौ प्रस्थापयांचक्राते।

व्याख्या—वशः इन्द्रियोपरि प्रभुत्वमस्यास्तीति वशी = जितेन्द्रियः, वसिष्ठः = ऋषिः, प्रातः = प्रातःकाले, यथोक्तव्रतस्य = पूर्वोक्तस्य, गोसेवारूपस्य, ंगभूता या पारणा = व्रतान्तभोजनम्, तस्या अन्तः = अवसानं तस्मिन्, यथोक्त-तपारणान्ते, प्रस्थाने भवं प्रास्थानिकं = प्रस्थानकालिकं, स्वस्त्ययनं = शुभाव-माशीर्वादं, प्रयुज्य = दत्त्वा, तौ = पूर्वोक्तौ, जाया च पतिश्च दम्पती = सुदक्षिणा-दिलीपौ, स्वां = स्वकीयां, राजधानीम् = अयोध्यां प्रति = उद्दिश्य, प्रस्थापया-ास = प्रेषयामास।

समा०—वशः (स्वाधीनता इन्द्रियाणां) अस्यास्तीति वशी। उक्तम् अन-तिक्रम्य यथोक्तम् यथोक्तञ्च तद् व्रतञ्च यथोक्तव्रतम्, यथोक्तव्रतस्य पारणा थोक्तव्रतपारणा, यथोक्तव्रतपारणायाः अन्तः यथोक्तव्रतपारणान्तः, तस्मिन् थोक्तव्रतपारणान्ते। प्रस्थाने भवं प्रास्थानिकं, तत् प्रास्थानिकम्। स्वस्ति अव्ययम् ) अयनम् स्वस्त्ययनम्, तत् स्वस्त्ययनम्। धीयन्तेऽस्यामिति धानी, ाज्ञां धानी राजधानी, तां राजधानीम्। सा च स च तौ, तौ (द्वितीया)। जाया पतिश्च दम्पती, तौ दम्पती।

**अभि०**—महर्षिवसिष्ठः प्रातःकाले यात्राकालिकं शुभाशीर्वादं दत्त्वा, सुदक्षिणादिलीपौ, अयोध्याम्प्रति प्रस्थापयामास।

**हिन्दी**—प्रातःकाल जितेन्द्रिय वशिष्ठजी ने गौसेवा रूप व्रत के सांगोपांग पूर्ण होने पर सुदक्षिणा एवं दिलीप को यात्रा के समय शुभाशीर्वाद देकर अयोध्या की ओर बिदा किया ॥७०॥

**प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च।**
**धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥७१॥**

**सञ्जीविनी**—नृपो हुतं तर्पितम्। हुतमश्नातीति हुताशोऽग्निः। "कर्मण्यण्" तं भर्तुर्मुनेरनन्तरम्। प्रदक्षिणानन्तरमित्यर्थः। अरुन्धतीं च सवत्सां धेनुं च प्रदक्षिणीकृत्यः। प्रगतो दक्षिणं प्रदक्षिणम्। "तिष्ठद्गुप्रभृतीनि च" इत्यव्ययीभावः। ततश्च्विः। अप्रदक्षिणं प्रदक्षिणं संपद्यमानं कृत्वा प्रदक्षिणीकृत्य। सद्भिर्मङ्गलैः प्रदक्षिणादिभिर्मङ्गलाचारैरुदग्रतरप्रभावः सन् प्रतस्थे ॥७१॥

**अन्वयः**—नृपः, हुतं, हुताशं, भर्तुः, अनन्तरम्, अरुन्धतीं, च, सवत्सां धेनुं च, प्रदक्षिणीकृत्य, सन्मङ्गलोदग्रतरप्रभावः "सन्" प्रतस्थे।

**वाच्य०**—नृपेण सन्मंगलोदग्रतरप्रभावेण "सता" प्रतस्थे।

**व्याख्या**—नृपः = राजा, दिलीपः, हुतं = तर्पितं दत्तहविषमित्यर्थः, हुतमश्नातीति हुताशस्तं हुताशं = वह्निं, भर्तुः = स्वामिनो वशिष्ठस्य, अनन्तरं = पश्चात्, अरुन्धतीं = वशिष्ठपत्नीं, च, सवत्सां = शकृत्करिसहितां, धेनुं = गाञ्च, प्रदक्षिणीकृत्य = परिक्रम्य, सन्मंगलैः = शुभाचारैः, उदग्रतरः = उन्नततरः, प्रभावः = प्रतापो यस्य स तथोक्तः सन्, प्रतस्थे = प्रचचाल।

**समा०**—हुतम् अश्नातीति हुताशः, तं हुताशम्। न विद्यते अन्तरं यस्य तत् अनन्तरम्, तत् अनन्तरम्। वत्सेन सह वर्तते इति सवत्सा, तां सवत्साम्। प्रगतो दक्षिणं प्रदक्षिणम्, अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वा प्रदक्षिणीकृत्य। सन्ति च तानि मङ्गलानि च सन्मङ्गलानि, अतिशयेन उदग्रः उदग्रतरः, सन्मङ्गलैरुदग्रतरः प्रभावः यस्य सः सन्मङ्गलोदग्रतरप्रभावः।

**अभि०**—राजा दिलीपः, हुताग्निं सपत्नीकं वशिष्ठं तथा सवत्सां गाञ्च प्रदक्षिणीकृत्य, सद्भिः मंगलाचारैः विवृद्धतेजाः सन्, अयोध्यायै प्रतस्थे।

**हिन्दी**—राजा दिलीप, प्रथम हवनकुण्ड की अग्नि की, इसके बाद वशिष्ठ जी एवं माता अरुन्धती की, और तत्पश्चात् बछड़े सहित बैठी हुई धेनु की परिक्रमा करके, वशिष्ठ जी के शुभाशीर्वादों से अधिक तेजस्वी होकर राजधानी की ओर चल पड़े ॥७१॥

**श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ।**
**ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥७२॥**

**सञ्जीवनी**—धर्मपत्नीसहितः सहिष्णुर्व्रतादिदुःखसहनशीलः स नृपः श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वनेनानुद्घातः पाषाणादिप्रतिघातरहितः अतएव सुखयतीति सुखः । तेन रथेन । स्वेन पूर्णेन सफलेन मनोरथेनेव । मार्गमध्वानं ययौ । मनोरथपक्षे ध्वनिः श्रुतिः । अनुद्घातः प्रतिबन्धनिवृत्तिः ॥७२॥

**अन्वयः**— **धर्मपत्नीसहितः, सहिष्णुः, सः, श्रोत्राभिरामध्वनिना, अनुद्घातसुखेन, रथेन, स्वेन, पूर्णेन, मनोरथेन, इव, मार्गं, ययौ ।**

**वाच्य०**—धर्मपत्नीसहितेन सहिष्णुना तेन मार्गो यये ।

**व्याख्या**—धर्मपत्नीसहितः = सुदक्षिणासहितः, सहिष्णुः = सहनशीलः, सः = राजा दिलीपः, श्रोत्रयोः = कर्णयोः, अभिरामः = सुखप्रदः, ध्वनिः = शब्दः, यस्य स तेन श्रोत्राभिरामध्वनिना । न, उद्घातोऽनुद्घातस्तेन, अनुद्घातेव = पाषाणादिरहितेन, सुखः = सुखकरस्तेनानुदघातसुखेन, रथेन = स्यन्दनेन, स्वेन = आत्मीयेन, पूर्णेन = सफलेन, मनोरथेन = अभिलाषेण, इव = यथा, ययौ = जगाम । मनोरथपक्षे ध्वनिः = श्रुतिः, मनोरथसिद्धिश्रवणमित्यर्थः, अनुद्घातः = प्रतिबन्धाभावः, विघ्नराहित्यमिति यावत् ।

**समा०**—धर्मपत्न्या सहितः धर्मपत्नीसहितः । श्रोत्रयोः अभिरामः ध्वनिः यस्य स श्रोत्राभिरामध्वनिः, तेन श्रोत्राभिरामध्वनिना । न उद्घातः अनुद्घातः, अनुद्घातेन सुखयतीति अनुद्घातसुखः, तेन अनुद्घातसुखेन । मनः रथः इव मनोरथः, तेन मनोरथेन ।

**अभि०**—सुदक्षिणासहितो दिलीपः सुखप्रदेन रथेन स्वकीयसफलमनोरथेनेव ययौ ।

**हिन्दी**—सहनशील राजा दिलीप अपनी पत्नी के साथ जिस रथ में बैठ कर अयोध्या को चले, उसकी ध्वनि कानों को बड़ी ही मीठी लग रही थी,

उसमें जरा भी हिचक नहीं लगती थी, अतः उसपर सुख से चढ़कर जाते समय, ऐसा लग रहा था, मानो वे अपने सफल सुखद मनोरथ पर बैठकर जा रहे हों। रथपर बैठकर नहीं ॥७२॥

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम्।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥७३॥

**सञ्जीविनी**—अदर्शनेन प्रवासनिमित्तेनाहितौत्सुक्यं जनितदर्शनोत्कण्ठम्। प्रजार्थेन संतानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतमङ्गं यस्य तम्। नवोदयं नवाभ्युदयं प्रजास्तृप्तिमनाप्नुवद्भिरतिगृध्नुभिर्नेत्रैः। ओषधीनां नाथं सोममिव। तं राजानं पपुः। अत्यास्थया ददृशुरित्यर्थः। चन्द्रपक्षे अदर्शनं कलाक्षयनिमित्तम्। प्रजार्थं लोकहितार्थम्। व्रतं देवताभ्यः कलादाननियमः। "तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः" इति व्यासः। उदय आविर्भावः। अन्यत्समानम्।

**अन्वयः**—**अदर्शनेन, आहितौत्सुक्यं, प्रजार्थव्रतकर्शिताङ्गं, नवोदयं, प्रजाः तृप्तिम्, अनाप्नुवद्भिः, नेत्रैः, ओषधीनां, नाथं, सोमम्, इव, तं, पपुः।**

**वाच्य०**—आहितौत्सुक्यः प्रजार्थव्रतकर्शिताङ्गः नवोदयः, प्रजाभिः, ओषधीनां नाथः इव पपे।

**व्याख्या**—न दर्शनमदर्शनं तेन, अदर्शनेन = अनवलोकनेन, उत्सुकस्य भावः औत्सुक्यम्, आहितं = जनितम्, औत्सुक्यम् = उत्कण्ठा "प्रजासु" येन स तम्, प्रजा = सन्तानः, एव अर्थः = प्रयोजनं यस्य तत् प्रजार्थं च तद् व्रतं = गोसेवारूपं तेन कर्शितं = कृशीभूतम्, अङ्गं = शरीरं यस्य सः प्रजार्थव्रतकर्शिताङ्गस्तं तथोक्तम्। नव उदयो यस्य स नवोदयस्तं नवोदयं = नूतनाभ्युदयं, प्रजाः = लोकाः, तृप्तिं = संतोषम्, अनाप्नुवद्भिः = अलभमानैः, नेत्रैः = नयनैः, ओषधीनां = वनस्पतीनां, नाथं = स्वामिनं, सोमं = चन्द्रम्, इव = यथा, तं = राजानं, पपुः = सतृष्णमवलोकयामासुः। "चन्द्रपक्षे" अदर्शनेन = कलाक्षयनिमित्तादर्शनेन, प्रजार्थव्रतकर्शितांगं = लोकहितार्थं व्रतं देवेभ्यः कलादाननियमः, तेन कृशीभूतगात्रं नवोदयं = नवीनाविर्भावम्, सोममिति, शेषं तुल्यम् ॥७३॥

**समा०**—न दर्शनम् अदर्शनम्, तेन अदर्शनेन। उत्सुकस्य भावः औत्सुक्यम्, आहितम् औत्सुक्यं येन स आहितौत्सुक्यः, तम् आहितौत्सुक्यम्। प्रजैव अर्थः यस्य

तत् प्रजार्थम्, प्रजार्थञ्च तत् व्रतञ्च प्रजार्थव्रतम्, प्रजार्थव्रतेन कर्शितानि अङ्गानि यस्य सः प्रजार्थव्रतकर्शिताङ्गः, तं प्रजार्थव्रतकर्शिताङ्गम्। नवः उदयो यस्य सः नवोदयः, तं नवोदयम्। न आप्नुवन्ति अनाप्नुवन्ति (शत्रन्तम्), तैः अनाप्नुवद्भिः।

अभि०—जनाः, गोसेवारूपव्रतेन कृशीभूतगात्रं दिलीपं सतृष्णैः नेत्रैः द्वितीयाचन्द्रमिवावलोकयामासुः।

हिन्दी०—इतने दिनों से राजा को न देखने के कारण अतीव उत्सुक प्रजा ने, पुत्र के लिये गोसेवारूपव्रत से दुर्बल और वरप्राप्तिरूप नूतन अभ्युदयवाले राजा को अतृप्त सतृष्ण नेत्रों से ऐसा देखा, जैसे कलाक्षय के बाद नवोदित द्वितीया के चन्द्रमा को देखते हैं ॥७३॥

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥७४॥

**सञ्जीविनी**—पुरः पुरीरसुराणां दारयतीति पुरंदरः शक्रः। "पूःसर्वयोर्दारिसहोः" इति खच्प्रत्ययः। "वाचंयमपुरंदरौ च" इति मुमागमो निपातितः, तस्य श्रीरिव श्रीर्यस्य स नृपः पौरैरभिनन्द्यमानः। उत्पताकमुच्छ्रितध्वजम् 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। भुजे भूयो भूमेर्धुरमाससञ्ज स्थापितवान् ॥७४॥

**अन्वयः**—पुरन्दरश्रीः, सः, पौरैः, अभिनन्द्यमानः, उत्पताकं, पुरं, प्रविश्य, भुजङ्गेन्द्रसमानसारे, भुजे, भूयः, भूमेः, धुरम्, आससञ्ज।

**वाच्य०**—पुरन्दरश्रिया तेन पौरैः अभिनन्द्यमानेन धूः आससञ्जे।

**व्याख्या**—पुरन्दरस्य = इन्द्रस्य, श्रीः = शोभा, इव, श्रीर्यस्य सः पुरन्दरश्रीः, सः = राजा दिलीपः, पौरैः = नागरिकैः, अभिनन्द्यमानः = अभितुष्यमाणः, उच्छ्रिताः = ऊर्ध्वं गताः, पताकाः = ध्वजाः यस्मिन् तत्, उत्पताकं, पुरं = नगरं, प्रविश्य, भुजाभ्यां गच्छन्तीति भुजंगाः = सर्पास्तेषु, इन्द्रः = स्वामी, भुजंगेन्द्रस्तेन समानः = तुल्यः, सारो बलं यस्मिन् तस्मिन् तथोक्ते, भुजे = बाहौ, भूयः = पुनः, भूमेः = पृथिव्याः, धुरं = भारम्, आससञ्ज = स्थापितवान्।

**समा०**—पुरन्दरस्य श्रीरिव श्रीः यस्य सः पुरन्दरश्रीः। पुरे भवाः पौराः, तैः पौरैः। उद् (उच्छ्रिताः) पताकाः यस्य तत् उत्पताकम् तत् उत्पताकम्। भुजाभ्यां

गच्छन्तीति भुजङ्गाः, भुजङ्गेषु इन्द्रः भुजङ्गेन्द्रः, भुजङ्गेन्द्रेण समानः सारो यस्य सः भुजङ्गेन्द्रसमानसारः, तस्मिन् भुजङ्गेन्द्रसमानसारे ।

**अभि०**—अयोध्यावासिजनैः स्तूयमानः सन् राजा दिलीपः नगरं प्रविश्य पुनरपि पृथिव्याः परिरक्षणरूपभारं स्वभुजे धृतवान् ।

**हिन्दी**—देवेन्द्र के समान सम्पत्तिशाली राजा दिलीप ने प्रजा का समादर पाकर अयोध्या नगरी में प्रवेश किया, जिसमें उनके स्वागत के लिये झण्डे, ऊँचे कर दिये गए थे । वहाँ पहुँच कर उन्होंने शेषनाग के समान बलवती अपनी भुजा से राजकार्य का भार सम्भाल लिया ॥७४॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥७५॥

**सञ्जीविनी**—अथ द्यौः सुरवर्त्म । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । अत्रेर्महर्षेर्नयनयोः समुत्थमुत्पन्नं नयनसमुत्थम् । "आतश्चोपसर्गे" इति कप्रत्ययः । ज्योतिरिव । चन्द्रमित्यर्थः । 'ऋक्षेशः स्यादत्रिनेत्रप्रसूतः' इति हलायुधः । चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—"नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा ॥ समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः॥ पपात भासयंल्लोकाञ्छीतांशुः सर्वभावनः ॥" इति । सुरसरिद्गङ्गा वह्निना निष्ठ्यूतं निक्षिप्तम् । "च्छ्वोः शूडनुनासिके च" इत्यनेन निपूर्वात्ष्ठीवतेर्वकारस्य ऊठ् 'उत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः' इत्यमरः । ऐशं तेजः स्कन्दमिव । अत्र रामायणम्—"ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ देवकार्यमिदं देव समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवकीर्य च ॥ समन्ततस्तु तां देवीमभ्यसिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥" इति । राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै

संततिलक्षणायै गुरुभिर्महद्भिर्लोकपालानामनुभावैस्तेजोभिरभिनिविष्टमनुप्रविष्टं गर्भमाधत्त। दधावित्यर्थः। अत्र मनुः–'अष्टानां लोकपालानां वपुर्धारयते नृप.' इति अत्र आधत्त इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते। तथा च मन्त्रे दृश्यते– "यथेयं पृथिवी मह्युत्ताना गर्भमादधे। एवं त्वं गर्भमाधेहि दशमे मासि सूतवे॥" इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारवाचिन आधानशब्दप्रयोगदर्शनादिति। मालिनीवृत्तमेतत्। तदुक्तम्–"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥७५॥

**अन्वयः—अथ, द्यौः, अत्रेः नयनसमुत्थं, ज्योतिः, इव, सुरसरित्, वह्निनिष्ठ्यूतम्, ऐशं तेजः, इव, राज्ञी, नरपतिकुलभूत्यै, गुरुभिः, लोकपालानुभावैः अभिनिविष्टं गर्भम्, आधत्त।**

**वाच्य०**—दिवा ज्योतिरिव, सुरसरिता तेज इव, राज्ञ्या अभिनिविष्टो गर्भ आधीयत।

**व्याख्या**–अथ = अनन्तरं, द्यौः = सुरवर्त्म, अत्रेः = महर्षेः, नयनयोः = नेत्रयोः, समुत्थम् = उत्पन्नं, ज्योतिः = चन्द्रम् इव = यथा, सुरसरित् = गङ्गा, वह्निना = अग्निना, निष्ठ्यूतं = क्षिप्तम्, ईशस्येदं तत्, ऐशं = ईशसम्बन्धि, शैवमित्यर्थः, तेजः = रेतः (स्कन्दम्) इव, राज्ञी = सुदक्षिणा, नरपतिकुलभूत्यै = राजवंशाभिवृद्धये, गुरुभिः = श्रेष्ठैः, लोकपालानाम् = अष्टदिगीशानाम्, अनुभावाः = अंशास्तैः लोकपालानुभावैः, अभिनिविष्टम् = अनुप्रविष्टम्, गर्भं = भ्रूणम्, आधत्त = दधार॥

**समा०**—समुत्तिष्ठतीति समुत्थम्, नयनयोः समुत्थं नयनसमुत्थम्, तत् नयनसमुत्थम्। सुराणां सरित् सुरसरित्। वह्निना निष्ठ्यूतं वह्निनिष्ठ्यूतम्, तत् वह्निनिष्ठ्यूतम्। ईशस्येदमैशम्, तत् ऐशम्। नराणां पतिः नरपतिः, नरपतेः कुलं नरपतिकुलम् नरपतिकुलस्य भूतिः नरपतिकुलभूतिः, तस्यै नरपतिकुलभूत्यै। लोकं पालयन्तीति लोकपालाः, लोकपालानाम् अनुभावाः लोकपालानुभावाः, तैः लोकपालानुभावैः।

**अभि०**—यथा द्यौः चन्द्रम्, गङ्गा च शैवं तेजः दधार, तथैव दिलीपभार्या सुदक्षिणापि दिलीपस्य वंशरक्षायै गर्भं धृतवती॥

**हिन्दी**—जिस प्रकार अत्रि महर्षि के नेत्रों से निकली हुई चन्द्ररूपी ज्योति को आकाश ने धारण किया, और अग्नि से उगले हुये शिव के तेज को गंगाजी ने धारण किया, वैसे ही महारानी सुदक्षिणा ने भी राजा दिलीप का वंश चलाने के लिये आठों दिशाओं के लोकपालों के प्रभावों से सम्मिलित गर्भ को धारण किया ॥७५॥

इति श्रीशाङ्करिधारादत्तशास्त्रिमिश्रविरचितायां 'छात्रोपयोगिनी' व्याख्यायां
रघुवंशे महाकाव्ये नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः सम्पूर्णः ।

———

# तृतीय सर्ग की संक्षिप्त कथा

गर्भधारण के पश्चात् महारानी सुदक्षिणा के शरीर में गर्भलक्षण प्रकट होने लगे। इससे राजा दिलीप तथा सुदक्षिणा की सखियाँ बहुत प्रसन्न हुईं।

इस अवसर पर राजा दिलीप सुदक्षिणा की प्रत्येक इच्छा पूर्ण करते थे। और इस बात की पूर्ण चेष्टा करते थे कि, सुदक्षिणा की कोई भी इच्छा अपूर्ण न रहे। दूसरे मास में पुंसवन नामक संस्कार किया और चतुर वैद्यों के द्वारा गर्भ का पोषण किये जाने पर, दशवें मास में, शुभ मुहूर्त में सुदक्षिणा ने पुत्र को जन्म दिया। राजा ने उदारता पूर्वक खूब दान दिया।

महर्षि वशिष्ठ के तपोवन से आकर जातकर्म नामक संस्कार करने पर बालक अधिक सुन्दर एवं तेजस्वी हो गया। महाराज दि ीप ने यह जानकर कि शास्त्र तथा युद्ध में सर्वत्र यह पारंगत होगा बालक का रघु नाम रक्खा।

धीरे धीरे बालक, बड़ा होने के साथ ही समस्त शास्त्र तथा शस्त्र विद्या में सुशिक्षित हो गया। दिलीप ने उसका यज्ञोपवीत संस्कार तथा विवाह करने के पश्चात् उसे युवराज बना दिया। रघु के युवराज होते ही राजा शत्रुओं के लिये दुःसह हो गये और रघु को यज्ञ के घोड़े की रक्षा में नियुक्त करके राजा दिलीप ने ९९ अश्वमेध यज्ञ पूरे कर लिये। इसके बाद सौवां यज्ञ करने के लिये राजा ने घोड़ा छोड़ दिया।

इस सौवें यज्ञ को न सहन करने वाले इन्द्र ने सबके सामने से घोड़े को चुरा लिया। घोड़े को न देख सेना सहित रघु किंकर्तव्यविमूढ़ से खड़े ही थे कि स्वतः आई हुई नन्दिनी को सामने खड़ी देखा। और उसके मूत्र से अपनी आँखें धो डाली, तब उसी क्षण घोड़े को चुराकर ले आते हुये रघु ने इन्द्र को देखकर ललकारा। इन्द्र रुक गये। रघु ने प्रार्थना कि आप यज्ञों के रक्षक होकर इस प्रकार करेंगे तो यज्ञादि कैसे होंगें। तब इन्द्र ने कहा कि मैं ही शतक्रतु हूं दूसरा नहीं हो सकता। तुम्हारे पिता सौवां यज्ञ करके यह मेरा यश छीनना

चाहते हैं। अतः मैंने घोड़े का हरण किया है तुम लौट जाओ नहीं तो सगर राजा के पुत्रों जैसी दशा तुम्हारी भी होगीं।

रघु ने कहा हे मघवन् ! यदि तुम्हारा यही निश्चय है तो शस्त्र उठाओ। मुझे जीते विना घोड़ा लेकर नहीं जा सकते हो। यह कहकर रघु ने एक बाण इन्द्र की छाती में मारा।

इन्द्र ने भी अत्यन्त क्रोधित होकर एक अमोघ वाण रघु की छाती में मारा। पुनः रघु ने एक बाण से इन्द्र की बज्र रूपी ध्वजा को काट डाला। इससे इन्द्र ने क्रोध में आकर रघु को मारने के लिये वज्र से प्रहार किया। किन्तु जरा सी मूर्छा का अनुभव कर रघु पुनः खड़ा हो गया। इस प्रकार घोर युद्ध में भी रघु को अचल देखकर इन्द्र ने प्रसन्न होकर कहा कि हे युवराज ! तुम घोड़े को छोड़ कर जो चाहो सो वर माँग लो। यह सुन रघु ने कहा कि हे इन्द्र ! यदि तुम घोड़े को नहीं देना चाहते हो तो मेरे पिता इस सौवें अश्वमेध यज्ञ के पूर्ण फल को प्राप्त करें और इस पूरे समाचार को सभा में बैठे मेरे पिता तुम्हारे ही दूत के मुख से सुनें ऐसा प्रबंध करो।

इन्द्र ने इस बात को स्वीकार किया, और अपने घर चला गया। रघु भी अधिक प्रसन्न न होकर अपने घर लौट आये।

महाराज दिलीप, इन्द्र के भेजे दूत से पहले ही सब सुनकर बहुत प्रसन्न हुये और रघु के शरीर पर हाथ फेर कर उसका अभिनन्दन किया। इस प्रकार मरने पर स्वर्ग में जाने के लिये ९९ सीढ़ियों की तरह ६६ यज्ञों की परम्परा बनाकर राजा दिलीप रघु को राज्य देकर वानप्रस्थाश्रम में तपोवन में चले गये।

---

# श्रीरघुवंश-महाकाव्यम्

## तृतीयः सर्गः

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥१॥

**सञ्जीविनी**—अथ गर्भधारणानन्तरं सुदक्षिणा । उपस्थितोदयं प्राप्तकालं भर्तुर्दिलीपस्येप्सितं मनोरथम् । नपुंसके भावे क्तः । पुनः सखीजनस्योद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम्, यद्वा कौमुदी नाम दीपोत्सवतिथिः । तदुक्तं भविष्योत्तरे—"कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता" इति । तस्या मुखं प्रारम्भम् । सखीजनोद्वीक्षणकौमुदीमहम् इति पाठं केचित्पठन्ति । इक्ष्वाकुकुलस्य संततेरविच्छेदस्य निदानं मूलकारणम् । 'निदानं त्वादिकारणम्' इत्यमरः । एवंविधं दौर्हृदलक्षणं गर्भचिह्नं वक्ष्यमाणं दधौ । स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी । यथाह वाग्भटः—"मातृजन्यस्य हृदयं मातुश्च हृदयं च तत् । संबद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाभिमाननम् ॥" इति । तत्संबन्धित्वाद्गर्भो दौर्हृदमित्युच्यते । सा च तद्योगाद्दौर्हृदिनीति । तदुक्तं संग्रहे "द्विहृदयां नारीं दौर्हृदिनीमाचक्षते" इति । अत्र दौर्हृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणाद्रूपकालंकारः । अस्मिन्सर्गे वंशस्थं वृत्तम्—"जतौ तु वंशस्थमुदीरितं जरौ" इति तल्लक्षणात् ॥१॥

**अन्वयः**—**अथ, सुदक्षिणा, उपस्थितोदयम्, भर्तुः, ईप्सितम्, सखीजनोद्वीक्षणकौमुदीमुखम्, इक्ष्वाकुकुलस्य, सन्ततेः, निदानं दौर्हृदलक्षणं, दधौ ।**

**वाच्य०**—सुदक्षिणया दौर्हृदलक्षणं दधे ।

**व्याख्या**—अथ = गर्भधारणानन्तरम्, सुदक्षिणा = दिलीपभार्या, उपस्थितः = प्राप्तः, उदयः = समयः यस्य तत्, उपस्थितोदयम्, भर्तुः = स्वामिनो दिलीपस्य, ईप्सितं = मनोरथम्, सखीजनानां = सहचरीणां, उद्वीक्षणानि = नेत्राणि, इति सखीजनोद्वीक्षणानि, कौ = पृथिव्यां मोदन्ते जना अनेनेति कुमुदश्चन्द्रस्तस्येयं कौमुदी, सखीजनोद्वीक्षणानां, कौमुदी = चन्द्रिका, "चन्द्रिका कौमुदी ज्योत्स्ना"

इत्यमरः। तस्याः मुखं=प्रादुर्भावं, तथोक्तम्, इक्ष्वाकोः कुलं=वंशस्तस्य, इक्ष्वाकुकुलस्य, सन्ततेः=परम्परायाः. अविच्छेदस्येत्यर्थः, निदानम्=आदि-कारणम्, नानाविधाभिलाषेण दुष्टं हृद् यस्याः सा दुर्हृत्, तस्या भावः कर्म वा दौर्हृदं तस्य दौर्हृदस्य=गर्भस्य, लक्षणं=चिह्नमिति तत् दौर्हृदलक्षणं, दधौ=धृतवती।

**समा०**—उपस्थितः उदयः यस्य तत् उपस्थितोदयम्, तत् उपस्थितोदयम्। सखीति जनाः सखीजनाः, सखीजनानाम् उद्वीक्षणानि सखीजनोद्वीक्षणानि, सखी-जनोद्वीक्षणानां कौमुदी सखीजनोद्वीक्षणकौमुदी, सखीजनोद्वीक्षणकौमुद्या मुखं सखीजनोद्वीक्षणकौमुदीमुखम्, तत् सखीजनोद्वीक्षणकौमुदीमुखम्। इक्ष्वाकोः कुलं इक्ष्वाकुकुलम्, तस्य इक्ष्वाकुकुलस्य। दुर्हृदः भावः दौर्हृदम्, दौर्हृदस्य लक्षणं दौर्हृदलक्षणम्, तत् दौर्हृदलक्षणम्।

**अभि०**—गर्भधारणानन्तरं सुदक्षिणा दिलीपस्याभिलषितं प्राप्तकालं तथा सहचरीवर्गस्य नेत्रोत्सवमिक्ष्वाकुवंशाविच्छेदकारणं गर्भलक्षणं धारयामास।

**हिन्दी**—गर्भधारण के पश्चात् सुदक्षिणा ने कृशतादि गर्भ के लक्षणों को धारण किया, जो कि महाराज का सामयिक मनोरथ है और सुदक्षिणा की सखियों के नेत्रों के लिये आनन्दप्रद चन्द्रिका का आविर्भाव है (अथवा सुद-क्षिणा की सखियों के नेत्रों के लिये कौमुदी महोत्सव नामक दीपावली है) और इक्ष्वाकु के वंश को चलानेवाला है ॥१॥

शरीरसादादसमग्रभूषणा मुखेन साऽलक्ष्यत लोध्रपाण्डुना।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥२॥

**सञ्जीविनी**—शरीरस्य सादात्कार्श्यादसमग्रभूषणा परिमिताभरणा लोध्र-पुष्पेणेव पाण्डुना मुखेनोपलक्षिता सा सुदक्षिणा। विचेया मृग्यास्तारका यस्यां सा तथोक्ता। विरलनक्षत्रेत्यर्थः। तनुप्रकाशेनाल्पकान्तिना शशिनोपलक्षितेष-दसमाप्तप्रभाता प्रभातकल्पा। प्रभातादीषदूनेत्यर्थः। "तसिलादिष्वाकृत्त्वसुचः।" इति प्रभातशब्दस्य पुंवद्भावः। शर्वरी रात्रिरिव। अलक्ष्यतादृश्यत। शरीर-सादादिगर्भलक्षणमाह वाग्भटः—"क्षमता गरिमा कुक्षेर्मूर्छा छर्दिररोचकम्। जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम्" ॥२॥

**अन्वयः**—शरीरसादात्, असमग्रभूषणा, लोध्रपाण्डुना, मुखेन, "उपलक्षिता"

सा, विचेयतारका, तनुप्रकाशेन, शशिना, 'उपलक्षिता" प्रभातकल्पा, शर्वरी, इव, अलक्ष्यत ।

**वाच्य०**—असमग्रभूषणां, तां, विचेयतारकां, प्रभातकल्पां शर्वरीमिवालक्षयन् ।

**व्याख्या**—शरीरस्य = देहस्य, सादः = कार्श्यं तस्मात् शरीरसादात्, असमग्राणि = असम्पूर्णानि, परिमितानि, भूषणानि = आभरणानि, यस्याः सा असमग्रभूषणा, लोध्रवत् = लोध्रपुष्पवत्, पाण्डु = पाण्डुरमिति, तेन लोध्रपाण्डुना "हरिणः पाण्डुरः पाण्डुरित्यमरः" मुखेन = आननेन, "उपलक्षिता = युक्ता" सा = सुदक्षिणा, विचेयाः = मृग्याः परिगणनीयाः, तारकाः = नक्षत्राणि, यस्यां सा विचेयतारका, तनुः = स्वल्पः, प्रकाशः = कान्तिः, यस्य सः, तेन तनुप्रकाशेन, शशिना = चन्द्रेण, "उपलक्षिता" शर्वरी = रात्रिः, इव = यथा, अलक्ष्यत = अदृश्यत, जनैरिति शेषः ।

**समा०**—शरीरस्य सादः शरीरसादः, तस्मात् शरीरसादात् । न समग्राणि असमग्राणि, असमग्राणि भूषणानि यस्याः सा असमग्रभूषणा । लोध्रवत् पाण्डु लोध्रपाण्डु, तेन लोध्रपाण्डुना । तनुः प्रकाशः यस्य सः तनुप्रकाशः तेन तनुप्रकाशेन । विचेतुं योग्याः विचेयाः, विचेयाः तारकाः यस्याः सा विचेयतारका । प्रभातादीषदूना प्रभातकल्पा । शशः अस्यास्तीति शशी, तेन शशिना ।

**अभि०**—यथा प्रातःकाले क्षीणप्रकाशेन चन्द्रेण युक्ता विरलनक्षत्रा रात्रिः भाति, तथैव पाण्डुवर्णमुखेनोपलक्षिता कृशशरीरतया परिमितभूषणा सुदक्षिणाऽपि शोभते स्म ।

**हिन्दी**—कृश दुर्बल शरीर होने के कारण दो एक आभूषण पहनी हुई, तथा पीले मुख से सुशोभित सुदक्षिणा, उस रात्रि के समान दीख पड़ती थी, जिसमें भोर में थोड़े से तारे बचे रहते हैं और चन्द्रमा भी फीका पड़ जाता है ।।

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥३॥

**सञ्जीविनी**—क्षितीश्वरो दिलीपः रहसि मृत्सुरभि मृदा सुगन्धि तस्या आननं तदाननं सुदक्षिणामुखमुपाघ्राय तृप्ति नाययौ । कः कमिव । शुचिव्यपाये ग्रीष्मावसाने । "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि

स्यादुपधाशुद्धमन्त्रिणि" इति विश्वः। पयोमुचां मेघानां पृषतैर्बिन्दुभिः। 'पृषन्ति विन्दुपृषताः' इत्यमरः। सिक्तमुक्षितं वनराज्याः पल्वलमुपाघ्राय करी गज इव। अत्र करिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसंधेयः। गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव। एतेन दोहदाख्यं गर्भलक्षणमुच्यते ॥३॥

**अन्वयः**—**क्षितीश्वरः, रहसि, मृत्सुरभि, तदाननम्, उपाघ्राय, तृप्तिं, न, आययौ, शुचिव्यपाये, पयोमुचां, पृषतैः, सिक्तं, वनराजिपल्वलम्, "उपाघ्राय" करी, इव।**

**वाच्य०**—क्षितीश्वरेण तृप्तिः नायये, करिणा, इव।

**व्याख्या**—क्षितेः = पृथिव्याः, ईश्वरः = स्वामी, इति, क्षितीश्वरः = दिलीपः, रहसि = एकान्ते, मृदा = मृत्तिकया, सुरभि = सुगन्धि, तत्, मृत्सुरभि, तस्याः = सुदक्षिणायाः, आननं = मुखमिति तदाननम्, "आननं लपनं मुखमित्यमरः" उपाघ्राय = घ्रात्वा, तृप्ति = सन्तोषं, न, आययौ = नहि प्राप। "कः कमिव" शुचेः = ग्रीष्मस्य, व्यपायः = नाशस्तस्मिन्, शुचिव्यपाये, पयांसि मुञ्चन्तीति पयोमुचस्तेषां पयोमुचां = मेघानां, पृषतैः = बिन्दुभिः, सिक्तं = सिञ्चितम्, आर्द्रीकृतमित्यर्थः, वनानाम् = अरण्यानां, राजिः = पङ्क्तिः, तस्याः पल्वलम् = अल्पजलाशयम् वनराजिपल्वलम् "पल्वलं चाल्पसरो" इत्यमरः। उपाघ्राय = घ्रात्वा, करी = वनगज इव = यथा।

**समा०**—क्षितेः ईश्वरः क्षितीश्वरः। मृदा सुरभि मृत्सुरभि, तत् मृत्सुरभि। तस्या आननं तदाननम्, तत् तदाननम्। शुचेः व्यपायः शुचिव्यपायः, तस्मिन् शुचिव्यपाये। पयांसि मुञ्चन्तीति पयोमुचः, तेषां पयोमुचाम्। वनानां राजयः वनराजयः, वनराजीनां पल्वलं वनराजिपल्वलम्, तत् वनराजिपल्वलम्। करः (सुण्डा) अस्यास्तीति करी।

**अभि०**—यथा वनगजः, ग्रीष्मावसाने मेघाम्बुकणैः क्लिन्नमल्पजलाशयं घ्रात्वा तृप्तिं न प्राप्नोति, एवं राजा दिलीपोऽपि, एकान्ते मृत्सुरभि सुदक्षिणामुखमाघ्राय सन्तोषं न लेभे।

**हिन्दी**—राजा दिलीप, मिट्टी खाने से महारानी सुदक्षिणा का मुख जो सोन्धा हो गया था उसे एकान्त में बार २ सूंघकर वैसे ही तृप्त नहीं होते थे,

जैसे गर्मी के अन्त में प्रथम वर्षा होने से जंगल के छोटे २ तालों की मिट्टी सोंधी हो जाती है और उसे सूंघकर वनगज तृप्त नहीं होता ॥३॥

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥४॥

**सञ्जीविनी**—हि यस्माद्दिगन्तविश्रान्तरथश्चक्रवर्ती तस्याः सुतस्तत्सुतः। मरुत्वानिन्द्रः। 'इन्द्रो मरुत्वान्मघवा' इत्यमरः। दिवं स्वर्गमिव भुवं भोक्ष्यते। "भुजोऽनवने" इत्यात्मनेपदम्। अतः प्रथमं सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे अभिलष्यत इत्यभिलाषो भोग्यवस्तु तस्मिन्। कर्मणि घञ्प्रत्ययः। रस्यन्ते स्वाद्यन्त इति रसा भोग्यार्थाः। अन्ये च ते रसाश्च तान्विलङ्घ्य विहाय मनो बबन्ध। विदधावित्यर्थः। दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभोगसूचनार्थत्वमुत्प्रेक्षितम् ॥ ४ ॥

**अन्वयः**—हि दिगन्तविश्रान्तरथः, तत्सुतः, मरुत्वान्, दिवम्, इव, भुवं, भोक्ष्यते, अतः प्रथमं, सा, तथाविधे, अभिलाषे, अन्यरसान्, विलंघ्य, मनः, बबन्ध।

**वाच्य०**—हि, दिगन्तविश्रान्तरथेन तत्सुतेन मरुत्वता द्यौरिव भूः भोक्ष्यतेऽतः प्रथमं तया तथाविधेऽभिलाषेऽन्यरसान् विलंघ्य मनः बबन्धे।

**व्याख्या**—हि = यतः, दिशाम् = काष्ठानाम्, अन्ताः = प्रान्ताः, तेषु विश्रान्तः = कृतविश्रामः, गतः, इति दिगन्तविश्रान्तः। दिगन्तविश्रान्तः, रथः = स्यन्दनं यस्य स दिगन्तविश्रान्तरथः, चक्रवर्ती इत्यर्थः, तस्याः = सुदक्षिणायाः, सुतः = पुत्रः, इति तत्सुतः, मरुत्वान् = इन्द्रः, दिवं = स्वर्गम्, इव = यथा, भुवं = पृथिवीं, भोक्ष्यते = उपभोक्ष्यते, अतः = अस्मात् कारणात्, प्रथमं = पूर्वम्, सा = सुदक्षिणा, तथा विधा इव विधा = प्रकारो यस्य सः, तस्मिन् तथाविध, मृद्रूपे, अभिलष्यते इत्यभिलाषस्तस्मिन् अभिलाषे = मनोरथे, अन्ये च ते रसा अन्यरसास्तान् अन्यरसान् = अपरान्स्वादान्, विलंघ्य = तिरस्कृत्य परित्यज्येत्यर्थः, मनः = चित्तं, बबन्ध = नियोजयामास = विदधावित्यर्थः।

**समा०**—मरुतः सन्त्यस्येति मरुत्वान्। दिशामन्ताः दिगन्ताः, दिगन्तेषु विश्रान्तः रथः यस्य सः दिगन्तविश्रान्तरथः। तस्याः सुतः तत्सुतः। तथा विधेव विधा यस्य सः तथाविधः, तस्मिन् तथाविधे। अन्ये च ते रसाश्च अन्यरसाः, तान् अन्यरसान्।

**अभि०**—देवेन्द्रः स्वर्गमिव सुदक्षिणातनयोऽपि चक्रवर्ती भूत्वा सम्पूर्णां ससागरां महीम् भोक्ष्यते, इति हेतोः सुदक्षिणा, सर्वान् पदार्थान् परित्यज्य केवलं प्रथमं मृद्भक्षणरूपेऽभिलाषे मनः बबन्ध ।

**हिन्दी** चारों दिशाओं के अन्त तक गया है रथ जिसका, ऐसा सुदक्षिणा का पुत्र भविष्य में सम्पूर्ण पृथिवी पर उसी प्रकार राज्य करेगा, जिस प्रकार इन्द्र स्वर्ग पर राज्य करता है, इसी लिये मानो रानी होकर भी सुदक्षिणा ने सब पदार्थ छोड़कर पहले ही से मिट्टी खाना आरम्भ कर दिया ॥४॥

न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥५॥

**सञ्जीविनी**—मगधस्य राज्ञोऽपत्यं स्त्री मागधी सुदक्षिणा । "द्व्यञ्मगधकलिङ्गसूरमसादण्" इत्यण्प्रत्ययः । ह्रिया किंचित्किमपीप्सितमिष्टं मे मह्यं न शंसति नाचष्टे । केषु वस्तुषु स्पृहावतीत्यनुवेलमनुक्षणमादृत आदृतवान् । कर्तरि क्तः । 'आदृतौ सादरार्चितौ' इत्यमरः । प्रियायाः सखीः सहचरीरुत्तरकोसलेश्वरो दिलीपः पृच्छति स्म पप्रच्छ । "लट् स्मे" इत्यनेन भूतार्थे लट् । सखीनां विश्रम्भभूमित्वादिति भावः ॥५॥

**अन्वयः**—मागधी, ह्रिया, किंचित्, ईप्सितं, मे, न शंसति, केषु, वस्तुषु, स्पृहावती, इति, अनुवेलम्, आदृतः, प्रियासखीः, उत्तरकोसलेश्वरः, पृच्छति स्म ।

**वाच्य०**—मागध्या, शंस्यते, स्पृहावत्या "भूयते" आदृतेन, प्रियासख्यः, उत्तरकोसलेश्वरेण, पृच्छ्यन्ते स्म ।

**व्याख्या**—मगधस्य राज्ञोऽपत्यं स्त्री मागधी = मगधराजसुता सुदक्षिणा, ह्रिया = लज्जया, किञ्चित् = किमपि, वस्तु, ईप्सितं = वाञ्छितं, मे = मह्यम्, न = नहि, शंसति = कथयति, केषु वस्तुषु = केषु पदार्थेषु, स्पृहावती = इच्छावती, इति = एवं प्रकारेण, वेलायां वेलायामित्यनुवेलम् = वारं वारम्, आदृतः = आदृतवान्, सादरमित्यर्थः, "सन्" प्रियायाः = सुदक्षिणायाः, सख्यः = सहचर्य्यस्ताः, प्रियासखीः = सुदक्षिणायाः वयस्याः, उत्तरे च ते कोसलाः, उत्तरकोसलाः तेषामीश्वरः, उत्तरकोसलेश्वरः = राजा दिलीपः, पृच्छति स्म = पृष्टवान् ।

**समा०**—मगधस्य अपत्यं स्त्री मागधी । ईप्सा अस्य संजाता इति ईप्सितम्, तत् ईप्सितम् । स्पृहा अस्या अस्तीति स्पृहावती । वेलायां वेलायामित्यनुवेलम् ।

प्रियायाः सख्यः प्रियासख्यः, ताः प्रियासखीः । उत्तरे च ते कोसलाश्च उत्तर-कोसलाः, उत्तरकोसलानाम् ईश्वरः उत्तरकोसलेश्वरः।

**अभि०**—सुदक्षिणा लज्जया मे किमपि स्वाभीष्टं न कथयति, अतः न जाने केषु केषु पदार्थेषु तस्या अभिलाषः, इति प्रतिक्षणं सुदक्षिणायाः सखीः सादरं राजा दिलीपः पृच्छतिस्म ।

**हिन्दी**—सुदक्षिणा लज्जा से अपनी इच्छा मुझ से नहीं कहती है, अतः किन-किन वस्तुओं को वह चाहती है, इस बात को बार-२ सुदक्षिणा की सखियों से आदर पूर्वक कोसलाधिपति दिलीप पूछते थे ॥५॥

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥६॥

**सञ्जीविनी**—दोहदं गर्भिणीमनोरथः । 'दोहदं दौहृदं श्रद्धालालसं च समं स्मृतम्' इति हलायुधः । सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावतामुपेत्य प्राप्य यद्वस्तु वव्रे आचकांक्षे तदाहृतमानीतम् । भर्त्रेति शेषः । अपश्यदेव । अलभतेत्यर्थः । कुतः ? हि यस्मादस्य भूपतेस्त्रिदिवेऽपि स्वर्गेऽपीष्टं वस्त्वनासाद्यमनवाप्यं नाभूत् । किं याच्ञया । नेत्याह—अधिज्यधन्वन इति । नहि वीरपत्नीनामलभ्यं नाम किंचिदस्तीति भावः । अत्र वाग्भटः—"पादशोफो विदाहोऽन्ते श्रद्धा च विविधात्मिका" इति । एतच्च पत्नीमनोरथपूरणाकरणे दृष्ट-दोषसंभवात् । न तु राज्ञः प्रीतिलौल्यात् । तदुक्तम्—"देयमप्यहितं तस्यै हिताय हितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा ॥" अन्यत्र च—'दोहद-स्याप्रदानेन गर्भो दोषमवाप्नुयात्' इति ॥६॥

**अन्वयः**—**सा, दोहददुःखशीलताम्, उपेत्य, यद्, वव्रे, तद्, आहृतम्, अपश्यत्, एव, हि, अधिज्यधन्वनः, अस्य, भूपतेः, त्रिदिवे, अपि, इष्टम्, अना-साद्यं, न, अभूत् ।**

**वाच्य०**—तया, अदृश्यत, इष्टेन, अनासाद्येन नाभावि ।

**व्याख्या**—सा=सुदक्षिणा, दुःखशीलस्य भावो दुःखशीलता, दोहमाकर्षं ददाति, तत् दोहदं, तेन दोहदेन=गर्भिणीमनोरथेन दुःखशीलता=दुःखस्वभा-वता, तां दोहददुःखशीलताम्, उपेत्य=प्राप्य, यद्=किमपि वस्तु, वव्रे=आच-कांक्षे, तद्=आकांक्षितं वस्तु, आहृतम्=आनीतम्, अपश्यत्=अवलोकितवती,

अलभतेत्यर्थ "कुतः" हि = यस्मात्, अधिज्यम् = आरोपितमौर्विकं, धनुः = चापं यस्य स तस्य अधिज्यधन्वनः, अस्य = एतस्य, भूपतेः = राज्ञो दिलीपस्य त्रिदिवे = स्वर्गे, अपि इष्टम् = अभिलषितं, वस्तु, न आसाद्यम्, अनासाद्यम् = अप्राप्यं, न = नहि, अभूत् = आसीत् ।

**समा०**—दुःखं शीलं यस्याः सा दुःखशीला, दोहदेन दुःखशीला, दोहददुःखशीला, दोहददुःखशीलायाः भावः दोहददुःखशीलता, तां दोहददुःखशीलताम् । अधि ज्या यस्य तत् अधिज्यम्, अधिज्यं धनुः यस्य सः अधिज्यधन्वा, तस्य अधिज्यधन्वनः । भुवः पतिः भूपतिः, तस्य, भूपतेः । आसादयितुं योग्यं आसाद्यम्, न आसाद्यम् अनासाद्यम् ।

**अभि०**—गर्भावस्थायां सुदक्षिणा यत् किमपि वस्तु, अभिलषति, तत् सर्वं सुदक्षिणायाः सखीमुखात् ज्ञात्वा स्वर्गस्थमपि वस्तु राजा दिलीपः स्वप्रतापादानीय तत्पुरः स्थापितवान् ।

**हिन्दी**—वह सुदक्षिणा गर्भावस्था के कष्टों को सहती हुई जो जो वस्तु चाहती थी, वह वस्तु उसी समय रानी को मिल जाती थी, क्योंकि धनुषधारी राजा दिलीप अपने पराक्रम से स्वर्ग की वस्तु भी ला सकते थे, फिर इस लोक की तो बात ही क्या ॥६॥

क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं लतेव सन्नद्धमनोज्ञपल्लवा ॥७॥

**सञ्जीविनी**—सा सुदक्षिणा क्रमेण दोहदव्यथां च निस्तीर्य प्रचीयमानावयवा पुष्यमाणावयवा सती । पुराणपत्राणामपगमान्नाशादनन्तरं सन्नद्धाः संजाताः प्रत्यग्रत्वान्मनोज्ञाः पल्लवा यस्याः सा लतेव रराज ॥७॥

**अन्वयः**—सा, सुदक्षिणा, क्रमेण, दोहदव्यथां, निस्तीर्य, प्रचीयमानावयवा, "सती" पुराणपत्रापगमात्, अनन्तरं, सन्नद्धमनोज्ञपल्लवा, लता इव, रराज ।

**वाच्य०**—तया प्रचीयमानावयवया, सन्नद्धमनोज्ञपल्लवया, लतया, इव रेजे ।

**व्याख्या**—सा = सुदक्षिणा, क्रमेण = क्रमशः, दोहदेन = गर्भिणीमनोरथेन, व्यथा = दुःखं, तां दोहदव्यथां, निस्तीर्य = अतिक्रम्य, प्रचीयन्त इति प्रचीयमानाः, प्रचीयमानाः = पुष्यमाणाः, अवयवाः = हस्तपादादयो यस्याः सा प्रचीयमानावयवा "सती" पुराणानि = प्राचीनानि, च तानि पत्राणि = पर्णानि तेषाम्, अपगमः

=नाशस्तस्मात्, पुराणपत्रापगमात्, 'पत्रं पलाशं छदनं दलं पर्णम्' इत्यमरः। सन्नद्धाः=सञ्जाताः, मनोज्ञाः=मनोहराः, पल्लवाः=किसलयाः यस्या सा सन्नद्धमनोज्ञपल्लवा, "पल्लवोऽस्त्री किसलयम्" इत्यमरः। लता=वल्ली, 'वल्ली तु व्रततिर्लता" इत्यमरः। इव=यथा, रराज=शुशुभे।

**समा०**—दोहदस्य व्यथा दोहदव्यथा, तां दोहदव्यथाम्। प्रचीयमानाः अवयवाः यस्याः सा प्रचीयमानावयवा। पुराणानि च तानि पत्राणि च पुराणपत्राणि, पुराणपत्राणाम् अपगमः पुराणपत्रापगमः, तस्मात् पुराणपत्रापगमात्। न विद्यते अन्तरं यस्य तत् अनन्तरम्, तत् अनन्तरम्। सन्नद्धाः मनोज्ञाः पल्लवाः यस्याः सा सन्नद्धमनोज्ञपल्लवा।

**अभि०**—सा सुदक्षिणा क्रमशः गर्भिणीमनोरथदुःखस्वभावतामतिक्रम्य पुरातनपत्रविनाशानन्तरं संजातनूतनपल्लवा लतेव पूर्णमनोरथतया पुष्यमाणावयवा सती शुशुभे।

**हिन्दी**—धीरे-धीरे गर्भ का प्रारम्भिक कष्ट बीत जाने पर रानी सुदक्षिणा वैसे ही हृष्ट पुष्ट और सुन्दर लगने लगी जैसे वसन्त ऋतु में लताएँ पुराने पत्ते गिरा कर नये कोमल पत्तों से लद कर सुशोभित होती हैं॥७॥

**दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम्।**
**तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम्॥८॥**

**सञ्जीविनी**—दिनेषु दोहददिवसेषु गच्छत्सु सत्सु नितान्तपीवरमतिस्थूलम्। आ समन्तान्नीले मुखे चूचुके यस्य तत्। तदीयं स्तनद्वयम्। भ्रमरैरभिलीनयोरभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चकार। अत्र वाग्भटः—"अम्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ" इति॥८॥

**अन्वयः**—दिनेषु, गच्छत्सु "सत्सु" नितान्तपीवरम्, आनीलमुखं, तदीयं, स्तनद्वयम्, भ्रमराभिलीनयोः, सुजातयोः पङ्कजकोशयोः श्रियं तिरश्चकार।

**वाच्य०**—नितान्तपीवरेणानीलमुखेन तदीयेन स्तनद्वयेन श्रीः तिरश्चक्रे।

**व्याख्या**—दिनेषु=दिवसेषु दोहाददिवसेष्वित्यर्थः, गच्छत्सु=व्रजत्सु, सत्सु नितान्तम्=अत्यन्तं पीवरं, स्थूलमिति नितान्तपीवरम्, आसमन्तात्

नीले = कृष्णे, मुखे, चूचुके यस्य तत् आनीलमुखं, तस्याः = सुदक्षिणाया इदं तदीयं, स्तनयोः—कुचयोः, द्वयं = द्वितयमिति स्तनद्वयम्, भ्रमरैः = द्विरेफैः, अभिलीनौ, व्याप्तौ, तयोः, भ्रमराभिलीनयोः, सुष्ठु जातौ तयोः सुजातयोः = सुन्दरयोः, पङ्के जातं पङ्कजं पङ्कजस्य = कमलस्य कोशौ = मुकुलौ, तयोः, पङ्कजकोशयोः श्रियं = शोभां, तिरश्चकार = अधरीचकार ।

**समा०**—नितान्तं पीवरं नितान्तपीवरम् । तस्या इदं तदीयम् । आनीलं मुखं यस्य तत् आनीलमुखम् । स्तनयोर्द्वयम् स्तनद्वयम् । भ्रमरैः अभिलीनौ भ्रमराभिलीनौ, तयोः भ्रमराभिलीनयोः । पङ्के जाते पङ्कजे, पङ्कजयोः कोशौ पङ्कजकोशौ, तयोः पङ्कजकोशयोः ।

**अभि०**—भ्रमरसंयोगात् कमलमुकुलयोः यादृशी शोभा भवति, अस्याः सुदक्षिणाया अत्यन्तस्थूलयोः स्तनयोरपि कृष्णवर्णचूचुकतया तादृश्येव शोभाऽऽसीत् ।

**हिन्दी**—थोड़े दिनों में सुदक्षिणा के बड़े-बड़े स्तनों की घुण्टियाँ काली पड़ गईं, इससे रानी के स्तन ऐसे सुन्दर लगने लगे जिनकी शोभा के सामने वे कमल की कलियाँ भी फीकी पड़ जाती थीं जिनपर भौंरे बैठे हों ॥८॥

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥९॥

**सञ्जीविनी**—नृपः ससत्त्वामापन्नसत्त्वाम् । गर्भिणीमित्यर्थः । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । महिषीं सुदक्षिणाम् । निधानं निधिर्गर्भे यस्यास्तां सागराम्बरां समुद्रवसनाम् । भूमिमिवेत्यर्थः । 'भूतधात्री रत्नगर्भा जगती सागराम्बरा' इति कोशः । अभ्यन्तरे लीनः पावको यस्यास्तां शमीमिव । शमीतरौ वह्निरस्तीत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति याज्ञिकाः । अन्तःसलिलामन्तर्गतजलां सरस्वतीं नदीमिव । अमन्यत । एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि ॥९॥

**अन्वयः**—नृपः, ससत्त्वां, महिषीं, निधानगर्भां सागराम्बरामिव, अभ्यन्तरलीनपावकां शमीम् इव, अन्तःसलिलां सरस्वतीम् नदीम् इव, अमन्यत ।

**वाच्य०**—नृपेण, ससत्वा, महिषी, निधानगर्भा सागराम्बरा इव, अभ्यन्तरलीनपावका शमी इव, अन्तःसलिला सरस्वती नदी इव, अमन्यत ।

**व्याख्या**—नृपः = राजा दिलीपः, सत्त्वेन = प्राणिना, सहिता, ससत्त्वा, ताम्, ससत्त्वां = गर्भिणीमित्यर्थः । महिषीं = कृताभिषेकां, सुदक्षिणामित्यर्थः,

निधानं = निधिः, गर्भे = अभ्यन्तरे यस्याः सा तां निधानगर्भाम्, सागरः = समुद्रः, एव, अम्बरम् = वस्त्रं यस्याः सा तां सागराम्बराम्, इव = यथा, भूमिमिवेत्यर्थः, अभ्यन्तरे = मध्ये, लीनः = निगूढः, पावकः = वह्निः यस्याः सा ताम्, अभ्यन्तरलीनपावकां, शमीं = शिवां = वृक्षविशेषमित्यर्थः, इव = यथा, अन्तः = मध्ये, सलिलं = जलं यस्याः सा तामन्तःसलिलां, सरोऽस्याः अस्तीति सरस्वती तां सरस्वतीं = नदीम्, इव = यथा अमन्यत = अमंस्त = मेने इत्यर्थः।

**समा०**—नॄन् पातीति नृपः। सत्त्वेन सह वर्तते इति ससत्त्वा, तां ससत्त्वाम्। निधानं गर्भे यस्याः सा निधानगर्भा, तां निधानगर्भाम्। सागर एव अम्बरं यस्याः सा सागराम्बरा, तां सागराम्बराम्। अभ्यन्तरे लीनः पावकः यस्याः सा अभ्यन्तरलीनपावका, ताम् अभ्यन्तरलीनपावकाम्। अन्तः सलिलं यस्याः सा अन्तः सलिला, ताम् अन्तःसलिलाम्। सरांसि सन्त्यस्याम् इति सरस्वती, तां सरस्वतीम्।

**अभि०**—राजा दिलीपः रत्नगर्भां पृथ्वीमिव, स्वमध्यस्थितवह्नियुतां शमीमिव, गुप्तजलां सरस्वतीनदीमिव सगर्भां सुदक्षिणां मेने।

**हिन्दी**—राजा दिलीप, गर्भवती सुदक्षिणा को रत्नगर्भा पृथिवी के समान, अपने भीतर अग्नि को रखनेवाले शमी वृक्ष के समान तथा भीतर ही भीतर जल बहानेवाली सरस्वती नदी के समान समझते थे॥९॥

**प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगन्तसम्पदाम्।**
**यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः॥१०॥**

**सञ्जीविनी**—धीरः स राजा प्रियायामनुरागस्य स्नेहस्य। मनसः समुन्नतेरौदार्यस्य। भुजेन भुजबलेन करेणैवार्जितानाम्। न तु वाणिज्यादिना। दिगन्तेषु संपदाम्। धृतेः पुत्रो मे भविष्यतीति संतोषस्य च। 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः। सदृशीरनुरूपाः। पुमान्सूयतेऽनेनेति पुंसवनम्। तदादिर्यासान्ताः क्रिया यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान्। आदिशब्देनानवलोमनसीमन्तोन्नयने गृह्येते। अत्र मासि द्वितीये तृतीये वा पुंसवनम्। यदाह पारस्करः—'पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्' इति। 'चतुर्थेऽनवलोमनम्' इत्याश्वलायनः। 'षष्ठेऽष्टमे वा सीमन्तोन्नयनम्' इति याज्ञवल्क्यः॥१०॥

**अन्वयः**—**धीरः, सः, प्रियानुरागस्य, मनःसमुन्नतेः, भुजार्जितानां, दिगन्तसम्पदां, च, धृतेः, च, सदृशीः, पुंसवनादिकाः, क्रियाः, यथाक्रमं, व्यधत्त।**

**वाच्य०**—धीरेण, तेन, सदृश्यः क्रिया व्यधीयन्त ।

**व्याख्या**—धीरः=प्राज्ञः "धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः" इत्यमरः । पण्डित इत्यर्थः, सः=राजा दिलीपः, प्रियायां=सुदक्षिणायाम्, अनुरागः=स्नेहः, तस्य प्रियानुरागस्य, मनसः=चित्तस्य, समुन्नतिः=औदार्यम्, इति तस्या मनःसमुन्नतेः, भुजाभ्यां=स्वबाहुभ्याम्, अर्जिताः=प्राप्ताः, तासां भुजार्जितानां, दिशामन्ता दिगन्तास्तेषु दिगन्तेषु=काष्ठावसानेषु, सम्पदः=सम्पत्तयः तासां दिगन्तसम्पदाञ्च, धृतेः=सन्तोषस्य, पुत्रो मे भविष्यतीत्येवंरूपस्येत्यर्थः । सदृशीः=अनुरूपाः, पुमान्=नरः, सूयतेऽनेन तत् पुंसवनम्, आदिः, यासां ताः पुंसवनादिकाः. क्रियाः=संस्कारान्, क्रममनतिक्रम्येति यथाक्रमं, क्रमशः, व्यधत्त=कृतवान् ।

**समा०**—प्रियायाम् अनुरागः प्रियानुरागः, तस्य प्रियानुरागस्य । मनसः समुन्नतिः मनःसमुन्नतिः, तस्याः मनःसमुन्नतेः । भुजेन अर्जिताः भुजार्जिताः, तासां भुजार्जितानाम् । दिशामन्ताः दिगन्ताः, दिगन्तानां सम्पदः दिगन्तसम्पदः, तासां दिगन्तसम्पदाम् । क्रममनतिक्रम्य वर्तते इति यथाक्रमम् । पुमान् सूयते अनेनेति पुंसवनम्, पुंसवनम् आदिः (क्रिया) यासां ताः पुंसवनादिकाः, ताः पुंसवनादिकाः ।

**अभि०**—राजा दिलीपः, स्ववैभवानुसारं स्वप्रियास्नेहानुकूलं स्वकीयालौकिकसन्तोषानुरूपं च पुंसवनादिगर्भसंस्कारान् कृतवान् ।

**हिन्दी**—बुद्धिमान् राजा दिलीप, जितना रानी सुदक्षिणा को प्यार करते थे, और जितनी उन्हें प्रसन्नता थी तथा जैसा वैभवशाली उनका राज्य था तदनुरूप ठाट-बाट से ही उन्होंने पुंसवन आदि संस्कार भी किये ॥१०॥

सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥११॥

**सञ्जीविनी**—गृहागतो नृपः सुरेन्द्राणां लोकपालानां मात्राभिरंशैराश्रितस्यानुप्रविष्टस्य गर्भस्य गौरवाद् भारात् प्रयत्नेन मुक्तासनया आसनादुत्थितयेत्यर्थः । उपचारस्याञ्जलावञ्जलीकरणे खिन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । तया सुदक्षिणया ननन्द ।

'सुरेन्द्रमात्राश्रित—' इत्यत्र मनुः—'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति ।

**अन्वयः**—गृहागतः, नृपः, सुरेन्द्रमात्राश्रितगर्भगौरवात्, प्रयत्नमुक्तासनया, उपचाराञ्जलिखिन्नहस्तया, पारिप्लवनेत्रया, तया, ननन्द ।

**वाच्य०**—गृहागतेन तेन ननन्दे ।

**व्याख्या**—गृहमागत इति गृहागतः=भवनप्राप्तः, नृपः=राजा दिलीपः, सुरेन्द्राणां=लोकपालानां, मात्राः=अंशास्ताभिः, आश्रितः=अनुप्रविष्टः गर्भः=भ्रूणः, तस्य गौरवं=भारः, तस्मात्, सुरेन्द्रमात्राश्रितगर्भगौरवात्, प्रयत्नेन=महता प्रयासेन, मुक्तं=त्यक्तम्, आसनं=पीठं यया सा तया प्रयत्नमुक्तासनया, उपचाराय=अभिवादनरूपाय, यः अञ्जलिः=करसम्पुटस्तेन, खिन्नौ दुःखितौ, हस्तौ करौ यस्याः सा तया उपचाराञ्जलिखिन्नहस्तया, पारिप्लवे=चञ्चले, नेत्रे=नयने यस्याः सा तया पारिप्लवनेत्रया, तया=सुदक्षिणया, ननन्द=आनन्दं प्राप्तवान् ।

**समा०**—गृहम् आगतः गृहागतः । नॄन् पातीति नृपः । सुराणाम् इन्द्राः सुरेन्द्राः, सुरेन्द्राणां मात्राः सुरेन्द्रमात्राः, सुरेन्द्रमात्राभिः आश्रितः सुरेन्द्रमात्राश्रितः, सुरेन्द्रमात्राश्रितश्चासौ गर्भश्च सुरेन्द्रमात्राश्रितगर्भः, गुरोर्भावः गौरवम्, सुरेन्द्रमात्राश्रितगर्भस्य गौरवं सुरेन्द्रमात्राश्रितगर्भगौरवम्, तस्मात् सुरेन्द्रमात्राश्रितगर्भगौरवात् । प्रयत्नेन मुक्तम् आसनं यया सा प्रयत्नमुक्तासना, तया प्रयत्नमुक्तासनया । उपचाराय अञ्जलिः उपचाराञ्जलिः, उपचाराञ्जलौ खिन्नौ हस्तौ यस्याः सा उपचाराञ्जलिखिन्नहस्ता, तया उपचाराञ्जलिखिन्नहस्तया । पारिप्लवे नेत्रे यस्याः सा पारिप्लवनेत्रा, तया पारिप्लवनेत्रया ।

**अभि०**—सुदक्षिणाभवनं प्राप्तो राजा दिलीपः, गर्भभारालसशरीरां स्वागतार्थं कष्टेनोत्थितां प्रणामाञ्जलिकरणेऽपि खिन्नहस्तां चपलाक्षीं सुदक्षिणां दृष्ट्वा, आसन्नप्रसवेयमिति ज्ञात्वा ननन्द ।

**हिन्दी**—राजा दिलीप जब रनिवास में आते, तब सुदक्षिणा, लोकपालों के अंश से भरे हुए गर्भ के भार से उनके स्वागत के लिये बड़ी कठिनाई से उठ पाती, और उनको प्रणाम करने के लिये जब हाथ जोड़ती तो हाथ ढीले पड़ जाते थे, एवं परिश्रम से चञ्चल आंखों में आँसू आ जाते थे, यह सब देखकर

राजा बड़े आनन्दित हो जाते थे, क्योंकि राजा इन सब चिह्नों से जान गये थे कि अब पुत्रोत्पत्ति में विलम्ब नहीं है ॥११॥

**कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।**
**पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥१२॥**

**सञ्जीविनी**—अथ । कुमारभृत्या बालचिकित्सा । "संज्ञायां समजनिषद" इत्यादिना क्यप् । तस्यां कुशलः कृतिभिः । 'कृती कुशल इत्यपि' इत्यमरः । 'भिषग्वैद्यौ चिकित्सके' इत्यमरः । गर्भस्य । भर्मणि 'भरणे पोषणे भर्म' इति हैमः । 'भृतिर्भर्म' इति शाश्वतः । भृञो मनिच्प्रत्ययः । 'गर्भकर्मणि' इति पाठे गर्भाधानप्रतीतावौचित्यभङ्गः । अनुष्ठिते कृते सति । काले दशमे मासि । अन्यत्र ग्रीष्मावसाने । प्रसवस्य गर्भमोचनस्योन्मुखीम् । आसन्नप्रसवामित्यर्थः । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । प्रियां भार्याम् । अभ्राण्यस्याः संजातान्यभ्रिता ताम् । "तदस्य संजातं तारकादिभ्य इतच्" इतीतच्प्रत्ययः । दिवमिव । पतिर्भर्ता प्रतीतो हृष्टः सन् । "ख्याते हृष्टे प्रतीतः" इत्यमरः । ददर्श दृष्टवान् ॥१२॥

**अन्वयः—अथ, कुमारभृत्याकुशलैः, आप्तैः, भिषग्भिः, गर्भभर्मणि, अनुष्ठिते, "सति" काले, प्रसवोन्मुखीं, प्रियाम्, अभ्रितां, दिवम्, इव, पतिः, प्रतीतः, "सन्" ददर्श ।**

**वाच्य०**—प्रसवोन्मुखी प्रिया, अभ्रिता द्यौरिव पत्या प्रतीतेन ददृशे ।

**व्याख्या**—अथ = अनन्तरम्, कुमाराणां = बालकानां, भृत्या = चिकित्सा, तस्यां, कुशलाः = निपुणाः, तैः, कुमारभृत्याकुशलैः, आप्तैः = हितैषिभिः, भिषग्भिः = वैद्यैः = चिकित्सकैरित्यर्थः, गर्भस्य = भ्रूणस्य, भर्म = भरणं, पोषणमिति यावत्, तस्मिन्, गर्भभर्मणि, अनुष्ठिते = विहिते = कृते, "सति" काले = दशमे मासि, अन्यत्र ग्रीष्मावसाने वर्षारम्भकाले, इत्यर्थः, प्रसवस्य = गर्भविमोचनस्य, उन्मुखी = ताम्. प्रसवोन्मुखीम् = आसन्नप्रसवामित्यर्थः प्रियां = भार्याम्, अभ्राणि मेघाः अस्याः संजातानि, इति अभ्रिता तामभ्रितां = संजातमेघां, दिवम् = आकाशम्, इव = यथा, पतिः = भर्ता, प्रतीतः = प्रसन्नः, "सन्" ददर्श = अवलोकयामास ।

**समा०**—कुमाराणां भृत्या (चिकित्सा) कुमारभृत्या, कुमारभृत्यायां कुशलाः कुमारभृत्याकुशलाः, तैः कुमारभृत्याकुशलैः । गर्भस्य भर्म गर्भभर्म, तस्मिन् गर्भ-

भर्मणि । प्रसवस्य उन्मुखी प्रसवोन्मुखी, तां प्रसवोन्मुखीम् । अभ्रम् अस्याः सञ्जातम् इति अभ्रिता, ताम् अभ्रिताम् ।

**अभि०**—अनन्तरं बालकचिकित्सानिपुणैः, आप्तैः वैद्यैः, गर्भस्य पोषणे कृते सति राजा दिलीपः प्रसन्नः सन्, आसन्नप्रसवां सुदक्षिणां वर्षारम्भकाले वर्षणोन्मुखीं मेघच्छन्नां दिवमिव ददर्श ।

**हिन्दी**—इसके बाद बच्चों की चिकित्सा करने वाले बहुत से चतुर वैद्यों के द्वारा गर्भ की पुष्टि कर लेने पर, दसवें महीने में राजा दिलीप ने देखा कि शीघ्र पुत्रको जन्म देने वाली सुदक्षिणा ऐसी लगती है जैसा कि वर्षा काल के आरम्भ में तुरन्त बरसने वाले मेघों से व्याप्त आकाश हो ॥१२॥

**ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।**
**असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥१३॥**

**सञ्जीविनी**—ततः शच्येन्द्राण्या समा । 'पुलोमजा शचीन्द्राणी' इत्यमरः । सुदक्षिणा समये प्रसूतिकाले सति । दशमे मासीत्यर्थः । 'दशमे मासि जायते' इति श्रुतेः । उच्चसंश्रयैरुच्चसंस्थैस्तुङ्गस्थानगैरसूर्यगैरनस्तमितैः कैश्चिद्यथासंभवं पञ्चभिर्ग्रहैः सूचिता भाग्यसंपद्यस्य तं पुत्रम् । त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः सा त्रिसाधना शक्तिः । 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । अक्षयमर्थमिव । असूत । 'षूङ प्राणिगर्भविमोचने' इति धातुरात्मनेपदिषु पठ्यते । तस्माद्धातोः कर्तरि लङ । अत्रेदमनुसंधेयम्—"अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥" इति सूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः । श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि, स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि । तत्रोच्चेष्वपि दशमादयो राशिंत्रिशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः। अत्रांशस्त्रिंशो भागः । यथाह नारदः-'त्रिंशद्भागात्मकं लग्नम्' इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम। तदुक्तं लघुजातके-'रविणास्तमयो योगो वियोगस्तूदयो भवेत्' इति। ते स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के-'स्वोच्चे पूर्णस्वर्क्षकेऽर्धं सुहृद्भे पादे द्विड्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किंचित्पादं नूनं स्वत्रिकोणे ददाति ॥" इति । तदिदमाह कविरुच्चसंस्थैरसूर्यगै-

रिति च । एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गो भवति । तदुक्तं कूटस्थीये-"सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः पर दिव्याः ।।" इति तदिदमाह पञ्च-भिरिति ।।१३।।

**अन्वयः**--ततः, शचीसमा, समये "सति" उच्चसंश्रयैः, असूर्यगैः, पञ्चभिः ग्रहैः, सूचितभाग्यसम्पदं, पुत्रं, त्रिसाधना, शक्तिः, अक्षयम्, अर्थम्, इव, असूत ।

**वाच्य०**—शचीसमया सूचितभाग्यसम्पत् पुत्रः, त्रिसाधनया शक्त्याक्षयोऽर्थ इव असूयत ।

**व्याख्या**--ततः = तदनन्तरं, शच्या = इन्द्राण्या, समा = तुल्या, इति शचीसमा, सुदक्षिणेति यावत्, समये = प्रसूति काले "सति" दशमे मासीत्यर्थः, उच्चः संश्रयः येषां ते तैः, उच्चसंश्रयैः, उच्चस्थानस्थितैः, सूर्यं गच्छन्तीति सूर्यगास्तैः सूर्यगैः, न सूर्यगैः, असूर्यगैः = अनस्तमितैः, पञ्चभिः = पञ्चसंख्यकैः, ग्रहैः = "कैश्चित्" खेटैः, सूचिता = प्रकटिता, भाग्यस्य = भागधेयस्य "दैवं दिष्टं भागधेयम्"इत्यमरः। सम्पत् = सम्पत्तिः, यस्य सः, तम् सूचितभाग्यसम्पदं, पुत्रं = सुतम्, त्रीणि = प्रभावमंत्रोत्साहात्मकानि, साधनानि = उपायाः = उत्पादकानि यस्याः सा त्रिसाधना, शक्तिः = प्रभावजादयः, अक्षयं = नाशरहितम्, अर्थं = धनम्, इव = यथा, असूत = सुषुवे ।

**समा०** — शच्या समा शचीसमा । उच्चः संश्रयः येषां ते उच्चसंश्रयाः, तैः उच्चसंश्रयैः । सूर्यं गच्छन्तीति सूर्यगाः, न सूर्यगाः असूर्यगाः, तैः असूर्यगैः । भाग्यस्य सम्पत् भाग्यसम्पत्, सूचिता भाग्यसम्पत् यस्य सः सूचितभाग्यसम्पद्, तं सूचितभाग्यसम्पदम् । त्रीणि साधनानि यस्याः सा त्रिसाधना । न विद्यते क्षयः यस्य सः अक्षयः, तम् अक्षयम् ।

**अभि०**—यथा प्रभावमंत्रोत्साहजा शक्तिः राज्ञोऽक्षयं धनमुत्पादयति, एवमेव दिलीपभार्यापि, पंचभिरुच्चकैः, अनस्तमितैर्ग्रहैः प्रथममेव सूचितभागधेयं पुत्रं जनयामास ।

**हिन्दी**—इसके पश्चात् इन्द्राणी के समान तेजवाली महारानी सुदक्षिणा ने प्रसव का समय अर्थात् दसवां महीना आने पर, उसी प्रकार वह पुत्र उत्पन्न किया जिसके भाग्यशाली होने की सूचना, उच्चस्थान में बैठे तथा साथ में सूर्य

के न होने से फल देने में समर्थ, पांच ग्रह दे रहे थे, जिस प्रकार राजा तेज, उत्साह और ठीक मंत्रणारूपी शक्ति से अचल सम्पत्ति पैदा कर लेता है॥१३॥

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम्॥१४॥

**सञ्जीविनी**—तत्क्षणं तस्मिन्क्षणे । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । दिशः प्रसेदुः प्रसन्ना बभूवुः । मरुतो वाताः सुखा मनोहरा ववुः । अग्निः प्रदक्षिणार्चिः सन्हविराददे स्वीचकार । इत्थं सर्वं शुभसूचकं बभूव । तथाहि तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदयाय । भवतीति शेषः । ततो देवा अपि संतुष्टा इत्यर्थः ॥१४॥

**अन्वयः**—तत्क्षणं, दिशः, प्रसेदुः, मरुतः, सुखाः, ववुः, अग्निः, प्रदक्षिणार्चिः, "सन्" हविः, आददे, "इत्थं" सर्वं, शुभशंसि, बभूव, हि, तादृशां, भवः, लोकाभ्युदयाय, "भवति" ।

**वाच्य०**—दिग्भिः प्रसेदे, मरुद्भिः सुखैः ववे, अग्निना हविराददे, सर्वेण शुभशंसिना बभूवे, हि तादृशां भवेन लोकाभ्युदयाय भूयते ।

**व्याख्या**—तत्क्षणं = तस्मिन् क्षणे दिशः = काष्ठाः । 'दिशस्तु ककुभः काष्ठा' इत्यमरः, प्रसेदुः = प्रसन्ना बभूवुः, मरुतः = वायवः, सुखाः = मनोहराः सुखकरा इत्यर्थः, ववुः = वान्ति स्म, अग्निः = वह्निः, दक्षिणं प्रगता इति प्रदक्षिणा, प्रदक्षिणा अर्चिः = ज्वाला यस्य सः प्रदक्षिणार्चिः, "सन्" हविः = हवनीयद्रव्यम्, आददे = स्वीचकार, इत्थमिति शेषः, सर्वम् = अखिलं, शुभं शंसति तच्छीलमिति शुभशंसि = शुभसूचकं, बभूव = आसीत्, हि = यतः, तादृशां = रघुसदृशजनानामित्यर्थः, भवः = उत्पत्तिः, जन्म, लोकानां = जनानाम्, अभ्युदयाय = कल्याणाय, भवतीति शेषः ।

**समा०**—स चासौ क्षणश्च तत्क्षणः, तं तत्क्षणम् ("कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया)। दक्षिणं प्रगता प्रदक्षिणा, प्रदक्षिणा अर्चिर्यस्य सः प्रदक्षिणार्चिः । शुभानि शंसितुं शीलमस्येति शुभशंसि । लोकस्य अभ्युदयः लोकाभ्युदयः, तस्मै लोकाभ्युदयाय ।

**अभि०**—दिलीपपुत्रोत्पत्तिसमये दिशः प्रसन्ना जाताः वायुः शीतलः सुखकरो जातः, अग्निरपि प्रदक्षिणार्चिः सन् हविराददे इत्थं सर्वं मंगलकरं जातं, यतः तादृशां महापुरुषाणां जन्म लोकहिताय भवति ।

**हिन्दी**—बालक के जन्मसमय में चारों दिशाएं निर्मल हो गईं। शीतल मन्द सुगन्ध वायु चलने लगा। अग्नि दक्षिण दिशा की ओर घूमकर हवन की सामग्री ग्रहण करने लगा। इस प्रकार से सभी शकुन अच्छे २ हो रहे थे। यह उचित भी है, क्योंकि ऐसे महापुरुषों का जन्म संसार के हित के लिये ही होता है ॥१४॥

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥१५॥

**सञ्जीविनी**—'अरिष्टं सूतिकागृहम्' इत्यमरः। सूतिकागृहे शय्यां तल्पं परितोऽभितः। 'अभितः परितः समयानिकषाहाप्रतियोगेऽपि' इति द्वितीया। विसारिणा प्रसृतेन। सुजन्मनः शोभनोत्पत्तेः। 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः। तस्य शिशोर्निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयो निशीथदीपाः अर्धरात्रप्रदीपाः। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। आलेख्यसमर्पिताश्चित्रार्पिता इव बभूवुः। निशीथशब्दो दीपानां प्रभाधिक्यसंभावनार्थः ॥१५॥

**अन्वयः**—अरिष्टशय्यां, परितः, विसारिणा, सुजन्मनः, तस्य, निजेन, तेजसा, सहसा, हतत्विषः, निशीथदीपाः, आलेख्यसमर्पिताः, इव, बभूवुः।

**वाच्य०**—हतत्विड्भिः, निशीथदीपैः, आलेख्यसमर्पितैरिव बभूवे।

**व्याख्या**—अरिष्टे = सूतिकागृहे, शय्या = खट्वा, इति ताम्, अरिष्टशय्यां, परितः = सर्वतः विसारिणा = प्रसारिणा, सुष्ठु = शोभनं, जन्म = उत्पत्तिर्यस्य स सुजन्मा तस्यसुजन्मनः, तस्य = सुदक्षिणाबालकस्य, निजेन = स्वकीयेन, तेजसा = भासा, कान्त्येत्यर्थः, सहसा = झटिति, हृता = नष्टा क्षीणा, त्विड् = कान्तिर्येषान्ते हतत्विषः, निशीथे = अर्धरात्रे, दीपाः = प्रदीपाः, इति निशीथदीपाः, आलेख्ये = चित्रे, समर्पिताः = लिखिताः, आलेख्यसमर्पिताः, इव = यथा, बभूवुः = जाताः।

**समा०**—अरिष्ट शय्या अरिष्टशय्या, ताम् अरिष्टशय्याम्। वि (विशेषेण) सरतीति विसारि, तेन विसारिणा। सु (शोभनं) जन्म यस्य सः सुजन्मा, तस्य सुजन्मनः। निशीथे दीपाः निशीथदीपाः। हता त्विट् येषां ते हतत्विषः। आलेख्ये समर्पिताः आलेख्यसमर्पिताः।

**अभि०**—तत्क्षणोत्पन्नबालकस्य नैसर्गिकेण तेजसा क्षीणकान्तयः सन्तः सूतिकागृहे स्थापिताः दीपा अर्धरात्रेऽपि चित्रलिखिता इव बभूवुः।

**हिन्दी**—उस भाग्यवान् बालक का स्वाभाविक तेज सौरीगृह में चारों तरफ इतना फैल गया था कि आधी रात के समय में भी घरमें रखे दीपों का प्रकाश एकदम क्षीण (मन्द) हो गया और वे ऐसे जान पड़ने लगे मानों चित्र में बने हों॥

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम्।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥१६॥

**सञ्जीविनी**—भूपतेर्दिलीपस्यामृतसंमिताक्षरममृतसमानाक्षरम्। 'सरूपसमसंमितः' इत्याह दण्डी। कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचरायान्तःपुरचारिणे जनाय त्रयमेवादेयमासीत्। किं तत्। शशिप्रभमुज्ज्वलं छत्रम्। उभे चामरे च, छत्रादीनां राज्ञः प्रधानाङ्गत्वाददेयत्वमिति भावः ॥१६॥

**अन्वयः**—भूपतेः, अमृतसंमिताक्षरं, कुमारजन्म, शंसते, शुद्धान्तचराय, जनाय, त्रयम्, एव, अदेयम्, आसीत्, "तत् किं" शशिप्रभं, छत्रम्, उभे, चामरे, च।

**वाच्य०**—त्रयेण एव अदेयेन अभूयत, शशिप्रभेण छत्रेण, उभाभ्यां चामराभ्याञ्च।

**व्याख्या**—भुवः=पृथिव्याः, पतिः=स्वामी तस्य भूपतेः=दिलीपस्य, अमृतेन=पीयूषेण, सम्मितानि=तुल्यानि, अक्षराणि=वर्णा यस्मिन् तत्, अमृतसंमिताक्षरं कुमारस्य=शिशोः, जन्म=उत्पत्तिः, तत् कुमारजन्म, शंसते=कथयते शुद्धान्ते=अन्तःपुरे, चरति=गच्छतीति शुद्धान्तचरस्तस्मै शुद्धान्तचराय, जनाय=लोकाय सेवकायेत्यर्थः, त्रयं=त्रितयम्, एव न देयमति, अदेयं =दानायोग्यम्, आसीत्, बभूव, "तत् किम्" शशिनः=चन्द्रस्य, प्रभा इव प्रभा =कान्तिर्यस्य तत् शशिप्रभम्, छादयन्त्यनेनेति छत्रं=श्वेतातपत्रम्, उभे=द्वे, "शशिप्रभे" चामरे=बालव्यजने, च।

**समा०**—शुद्धान्ते चरतीति शुद्धान्तचरः, तस्मै शुद्धान्तचराय। अमृतेन सम्मितानि अक्षराणि यस्मिन् तत् अमृतसम्मिताक्षरम्, तत् अमृतसम्मिताक्षरम्। कुमारस्य जन्म कुमारजन्म, तत् कुमारजन्म। शंसतीति शंसन्, तस्मै शंसते। दातुं योग्यं देयम्, न देयम् अदेयम। शशः अस्यास्तीति शशी, शशिनः प्रभेव प्रभा यस्य तत् शशिप्रभम्।

**अभि०**—राजा दिलीपः पुत्रजन्मसमाचारश्राविणेऽन्तःपुरसंचारिणे हर्षातिरेकेण राजचिह्नं छत्रं चामरे च परित्यज्यान्यत् सर्वं वस्तुजातं दातुं सन्नद्धोऽभूत्।

**हिन्दी**—अमृत के समान अक्षरवाले, पुत्रजन्म के समाचार को सुनाने वाले अन्तःपुर के सेवक को राजा दिलीप ने राजचिह्न छत्र चामर को छोड़कर शेष सभी आ ूषण दे डाले, क्योंकि राजा इतने प्रसन्न हुए कि वे उस समय सब कुछ दे देने को तैयार थे ॥१६॥

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि ॥१७॥

**सञ्जीविनी**—निवातो निर्वातप्रदेशः । 'निवातावाश्रयावातौ' इत्यमरः । तत्र यत्पद्मं तद्वत्स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतस्तृष्णया पश्यतो नृपस्य गुरुरुत्कटः प्रहर्षः (कर्ता) इन्दुदर्शनाद् गुरुर्महोदधेः पूरो जलौघ इव। आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक । अन्तर्न माति स्मेति यावत् । न ह्यल्पाधारेऽधिकं मीयत इति भावः । यद्वा हर्ष आत्मनि स्वस्मिन्विषये न प्रबभूव । आत्मानं नियन्तुं न शशाक । किंतु बहिर्निर्जगामेत्यर्थः ॥१७॥

**अन्वयः**—निवातपद्मस्तिमितेन, चक्षुषा, कान्तं, सुताननं, पिबतः, नृपस्य, गुरुः, प्रहर्षः, इन्दुदर्शनात् 'गुरुः' महोदधेः, पूरः, इव, आत्मनि, न, प्रबभूव ।

**वाच्य०**—गुरुणा प्रहर्षेण गुरुणा महोदधेः पूरेण इव न प्रबभूवे ।

**व्याख्या**—निवाते = वायुरहितप्रदेशे,पद्मं = कमलं तद्वत् स्तिमितं = निश्चलं, तत् निवातपद्मस्तिमितं तेन निवातपद्मस्तिमितेन, चक्षुषा = नेत्रेण, कान्तं = मनोहरं-सुन्दरं, सुतस्य = पुत्रस्य, आननं = मुखं पिबतः = अतितृष्णया पश्यतः, नृपस्य = राज्ञो दिलीपस्य, गुरुः = महानित्यर्थ, प्रहर्षः = अतिशयितानन्दः(कर्ता) इन्दोः = चन्द्रस्य, दर्शनम् = अवलोकनं तस्मात्, इन्दुदर्शनात्, गुरुः = महान्, महांश्चासौ उदधिरिति महोदधिस्तस्य महोदधेः = समुद्रस्य,पूरः = जलौघः इव = यथा, आत्मनि = शरीरे, न = नहि, प्रबभूव = स्थातुं शशाक, अन्तर्न माति स्मेति यावत् ।

**समा०**—निवाते पद्मं निवातपद्मम्, निवातपद्ममिव स्तिमितं निवातपद्मस्तिमितम्, तेन निवातपद्मस्तिमितेन । सुतस्य आननं सुताननम्, तत् सुताननम् । इन्दोः दर्शनम्, इन्दुदर्शनम्, तस्मात् इन्दुदर्शनात् । महांश्चासौ उदधिश्च महोदधिः, तस्य महोदधेः ।

**अभि०**—राजा दिलीपः सुन्दरं स्वपुत्राननमतितृष्णया पश्यन् पूर्णिमायामिन्दुदर्शनात् जलधेः पूर इव अतीवानन्दपरिपूर्णः प्रसन्नचेता बभूव ।

**हिन्दी**—जैसे वायुरहित स्थान में कमल निश्चल हो जाता है वैसे ही एक टक होकर राजा अपने पुत्र का सुन्दर मुख देखने लगे। जैसे चन्द्रमा को देखकर महासागर में ज्वार आ जाता है, वैसे ही पुत्र को देखकर राजा को इतना आनन्द हुआ कि वह उनके हृदय में न समा सका ॥१७॥

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥१८॥

**सञ्जीविनी**—स दिलीपसूनुः। तपस्विना पुरोधसा पुरोहितेन। 'पुरोधास्तु पुरोहितः' इत्यमरः। वसिष्ठेन। तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यं स्यादिति भावः। तपोवनादेत्यागत्य। अखिले समग्रे जातकर्मणि जातस्य कर्तव्यसंस्कारविशेषे कृते सति। प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः। आकरोद्भवः खनिप्रभवः 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः। मणिरिव। अधिकं बभौ। वसिष्ठमन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः। अत्र मनुः—"प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते' इति ॥१८॥

**अन्वयः**—सः, दिलीपसूनुः, तपस्विना, पुरोधसा, तपोवनात्, एत्य, अखिले, जातकर्मणि, कृते, "सति" प्रयुक्तसंस्कारः आकरोद्भवः मणिः, इव, अधिकं बभौ।

**वाच्य०**—तेन दिलीपसूनुना प्रयुक्तसंस्कारेण आकरोद्भवेन मणिनेव बभे।

**व्याख्या**—सः = शिशुः, दिलीपस्य = राज्ञः, सूनुः = पुत्रः, इति दिलीपसूनुः, तपोऽस्यास्तीति तपस्वी तेन तपस्विना = तपश्चरणवता, पुरः = अग्रे, धीयते, इति-पुरोधाः, तेन पुरोधसा = पुरोहितेन वसिष्ठेन, तपसः = तपश्चर्यायाः, वनमरण्यं-तस्मात् तपोवनात्, एत्य = आगत्य, अखिले = सम्पूर्णे, जातस्य = उत्पन्नस्य, कर्म = संस्कारस्तस्मिन् जातकर्मणि, कृते = विहिते, "सति" प्रयुक्तः = कृतः, संस्कारः = शाणोल्लेखादिर्यस्य स प्रयुक्तसंस्कारः, आकरः = खनिः तस्माद् उद्भवः उत्पत्तिर्यस्य सः मणिः = रत्नम्, इव = यथा, अधिकम् = अत्यन्तं, बभौ = शुशुभे।

**समा०**—दिलीपस्य सूनुः दिलीपसूनुः, प्रशस्तं तपः अस्यास्तीति तपस्वी, तेन तपस्विना। तपसः वनं तपोवनम्, तस्मात् तपोवनात्। जातस्य कर्म जातकर्म, तस्मिन् जातकर्मणि। प्रयुक्तः संस्कारः यस्य सः प्रयुक्तसंस्कारः। आकरादुद्भवो-यस्य स आकरोद्भवः।

**अभि०**—शाणोल्लेखादिना सुसंस्कृतो, हीरकादिमणिर्यथा शोभते, तथैव, दिलीपस्य पुत्रोऽपि स्वतस्तेजस्वी सन्नपि महर्षिणा वसिष्ठेन जातकर्मसंस्कारे विहिते सति, अतीव शोभामाप।

**हिन्दी**—परम तपस्वी पुरोहित वसिष्ठजी भी शुभ समाचार पाकर तपोवन से आए, और स्वभाव से तेजस्वी उस बालक के जातकर्म आदि संस्कार किये, संस्कार हो जाने पर वह बालक वैसे ही सुशोभित हुआ, जैसे खान से निकाल कर खरादा हुआ हीरा ॥१८॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥१९॥

**सञ्जीविनी**—सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः। श्रुतिसुखा इत्यर्थः। मङ्गलतूर्यनिस्वना मङ्गलवाद्यध्वनयो वारयोषितां वेश्यानाम्। 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः। प्रमोदनृत्यैर्हर्षनर्तनैः सह मागधीपतेर्दिलीपस्य सद्मनि केवलं गृह एव न व्यजृम्भन्त। किंतु द्यौरोको येषां ते दिवौकसो देवाः। पृषोदरादित्वात्साधुः। तेषां पथ्याकाशेऽपि व्यजृम्भन्त। तस्य देवांशत्वाद्देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ॥१९॥

**अन्वयः**—**सुखश्रवाः, मङ्गलतूर्यनिस्वनाः, वारयोषितां, प्रमोदनृत्यैः, सह, मागधीपतेः, सद्मनि, केवलं, न, व्यजृम्भन्त, "किन्तु", दिवौकसां, पथि, अपि, व्यजृम्भन्त।**

**वाच्य०**—सुखश्रवैः मंगलतूर्यनिस्वनैः, व्यजृम्भ्यत।

**व्याख्या**—सुखः=सुखकरः, श्रवः=श्रवणं, येषान्ते सुखश्रवाः, मंगलार्थानि तूर्याणि मंगलतूर्याणि, मंगलतूर्याणां=मांगलिकवाद्यानां, निस्वनाः=ध्वनयः इति मंगलतूर्यनिस्वनाः, वारस्य=समूहस्य, योषितः स्त्रियस्तासां वारयोषितां=वेश्यानां, प्रमोदस्य=हर्षस्य, नृत्यानि=नर्तनानि तैः प्रमोदनृत्यैः, सह=साकम्, मागध्याः=सुदक्षिणायाः, पतिः=स्वामी दिलीपस्तस्य मागधीपतेः, सद्मनि=गृहे, केवलम्=एकम्, न=नहि, व्यजृम्भन्त "किन्तु" द्यौरोको येषान्ते दिवौकसः=देवास्तेषां, पथि=मार्गे, आकाशे, अपि व्यजृम्भन्त=ववृधिरे।

**समा०**—सुखः श्रवः येषां ते सुखश्रवाः। मङ्गलानि च तानि तूर्याणि च मङ्गलतूर्याणि, मङ्गलतूर्याणां निस्वनाः मङ्गलतूर्यनिस्वनाः। प्रमोदस्य नृत्यानि,

प्रमोदनृत्यानि, तैः प्रमोदनृत्यैः। मगधस्य अपत्यं स्त्री मागधी, मागध्याः पतिः मागधीपतिः, तस्य मागधीपतेः। द्यौः ओकः येषां ते दिवौकसः, तेषां दिवौकसाम्।

अभि०—राज्ञो दिलीपस्य पुत्रोत्पत्तिमहोत्सवं केवलं राजभवने एव गीतवाद्यादिकं न जातम् किन्तु तद्बालकस्य देवांशत्वात्, आकाशेऽपि गन्धर्वाः वादित्राणि वादयाञ्चक्रुः, नर्तक्यश्चानन्दातिरेकात् ननृतुः।

हिन्दी—राजा दिलीप का वह बालक तो संसार का कल्याण करने वाला था, इस लिये उसके जन्म लेने पर केवल मागधी के पति राजा दिलीप के ही राजमहल में मनोहर बाजे तथा वेश्याओं के नाच गाने आदि उत्सव नहीं हो रहे थे, किन्तु आकाश में देवताओं के यहां भी नाच गाना हो रहा था ॥१९॥

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥२०॥

सञ्जीविनी—रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य। अत एव चौराद्यभावात्। संयतो बद्धो न बभूव नाभूत्। किं तेनात आह विसर्जयेदिति। सुतजन्मना हर्षितस्तोषितः सन्। यं बद्धं विसर्जयेद्विमोचयेत्। किं तु स राजा तदा पितॄणामृणाभिधानाद् बन्धनात्केवलमेकं यथा तथा। स्वयमेव। एक एवेत्यर्थः। 'केवलः कृत्स्न एकश्च केवलश्चावधारिता' इति शाश्वतः। मुमुचे। कर्मकर्तरि लिट्। स्वयमेव मुक्त इत्यर्थः। अस्मिन्नर्थे—'एष वा अनृणो यः पुत्री' इति श्रुतिः प्रमाणम् ॥२०॥

**अन्वयः**—रक्षितुः तस्य, संयतः, न, बभूव, यं, सुतजन्महर्षितः, "सन्" विसर्जयेत्, सः, पितॄणां, ऋणाभिधानात्, बन्धनात्, केवलं, स्वयं, मुमुचे।

**वाच्य०**—संयतेन न बभूवे, सुतजन्महर्षितेन यो विसृज्येत, किन्तु तेन तदा मुमुचे।

**व्याख्या**—रक्षितुः = पालकस्य, तस्य = दिलीपस्य, संयतः = बद्धः कश्चित्, कारागारे इति शेषः। न = नहि, बभूव = आसीत्, सुतस्य = पुत्रस्य, जन्म = उत्पत्तिः, तेन हर्षितः = प्रसन्नस्तुष्टः, "सन्" यं = बद्धं, विसर्जयेत् = विमोचयेत्, "किन्तु" सः = राजा दिलीपः, तदा = तस्मिन्नुत्सवे, पितॄणां = परलोकगतानाम्, ऋणम्, अभिधानं = नाम यस्य तत्, ऋणाभिधानं तस्मात्, ऋणाभिधानात्-बन्धनात् = संयमनात्, केवलम् = एकं, स्वयं = आत्मा, एव मुमुचे, मुक्तः।

**समा०**—सुतस्य जन्म सुतजन्म,सुतजन्मना हर्षितःसुतजन्महर्षितः। ऋणमित्यभिधानं यस्य तत् ऋणाभिधानम्, तस्मात् ऋणाभिधानात्।

**अभि०**—सम्यक् पालयितुस्तस्य दिलीपस्य राज्यं चौराद्यभावात् कश्चिदपि कारागारे बद्धो नासीत् यं बद्धमस्मिन् काले मोचयेत्, किन्तु तदा पितॄणामृणात् स्वयमेव मुमुचे।

**हिन्दी०**—राजकुमार का जन्म होने पर बन्दीघरों से कैदी छोड़े जाते हैं, किन्तु राजा दिलीप के राज्य में सुव्यवस्था होने से कोई भी अपराधी अपराध नहीं करता था, अतः राज्य में कोई कैदी भी नहीं था, जिसे वे पुत्र जन्म की प्रसन्नता में छोड़ते। इसलिये राजा ही पुत्र न होने से पितरों के ऋण से बँधा था उस बन्धन से मुक्त हो गया ॥२०॥

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥२१॥

**सञ्जीविनी**—अर्थविच्छब्दार्थज्ञः पार्थिवः पृथ्वीश्वरो दिलीपः। अयमर्भको बालकः श्रुतस्य शास्त्रस्यान्तं पारं यायात्। तथा युधि परेषां शत्रूणामन्तं पारं च यायात्। यातुं शक्नुयादित्यर्थः। "शकि लिङ् च" इति शक्यार्थे लिङ्। इति हेतोर्धातोः 'अघिवघिलघि गत्यर्थाः" इति लघिधातोर्गमनाख्यमर्थमर्थवित्त्वादवेक्ष्यालोच्य। आत्मसंभवं पुत्रं नाम्ना रघुं चकार। "लङ्घिबंह्योर्नलोपश्च" इत्यप्रत्यये "बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यत" इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम्। अत्र शङ्खः—'अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते।' इति ॥२१॥

**अन्वयः**—**अर्थवित्, पार्थिवः, अयम्, अर्भकः, श्रुतस्य, अन्तं, यायात्, तथा, युधि, परेषाम् "अन्तं" च यायात्, इति, धातोः, गमनार्थम्, अवेक्ष्य, आत्मसंभवं, नाम्ना, रघुं, चकार।**

**वाच्य०**—अर्थविदा पार्थिवेन, अर्भकेण श्रुतस्यान्तो यायेत, अत्मसंभवो नाम्ना रघुः चक्रे।

**व्याख्या**—अर्थम् = अभिधेयं, वेत्ति = जानातीति, अर्थवित्, पृथिव्या ईश्वरः पार्थिवः = दिलीपः, अयम् = एषः अर्भकः = बालकः "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः, श्रुतस्य = शास्त्रस्य, अन्तं = पारं, यायात्,

गच्छेत्, तथा = तेन प्रकारेण, युधि = संग्रामे, परेषां = शत्रूणाम्, अन्तं = नाशं, च यायात् = गच्छेत्, इति = हेतोः, धातोः = लघिधातोः, गमनमेवार्थः, गमनार्थस्तं गमनार्थं = यानाभिधेयम्, अवेक्ष्य = विचार्य, आत्मनः = स्वस्मात्, सम्भवः = उत्पत्तिर्यस्य स तमात्मसंभवं, तनयं = पुत्रं, "आत्मजस्तनयः सूनुः सुतः पुत्र" इत्यमरः। नाम्ना = अभिधानेन, रघुं = रघुनामानं, चकार = कृतवान्।

**समा०**—अर्थं वेत्तीति अर्थवित्। पृथिव्या ईश्वरः पार्थिवः। गमनस्य अर्थः गमनार्थः, तं गमनार्थम्। लङ्घते इति रघुः। आत्मनः सम्भवो यस्य स आत्मसम्भवः, तमात्मसम्भवम्।

**अभि०**—अर्थज्ञो राजा दिलीपः अयं बालकः श्रुतस्य पारं गमिष्यति तथा शत्रूणां विनाशको भविष्यतीति विचार्य लंघते इति रघुरिति अन्वर्थं नाम चकार।

**हिन्दी**—शब्दार्थ के जानने वाले राजा दिलीप ने, यह बालक सम्पूर्ण शास्त्रों में पारंगत होगा तथा शत्रुओं का युद्ध में नाश करेगा, अतएव 'लघि' धातु का गति अर्थ समझकर रघु नाम रक्खा ॥२१॥

पितुः प्रयत्नात्स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः॥२२॥

**सञ्जीविनी**—स रघुः समग्रसंपदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नाच्छुभैर्मनोहरैः शरीरावयवैः। हरिदश्वदीधितेः सूर्यस्य रश्मेः। "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः" इत्यमरः। अनुप्रवेशाद् बालचन्द्रमा इव। दिने दिने प्रतिदिनम्। "नित्यवीप्सयोः" इति द्विर्वचनम्। वृद्धिं पुपोष। अत्र वराहसंहितावचनम्। "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः" ॥२२॥

**अन्वयः**—स, समग्रसम्पदः, पितुः, प्रयत्नात्, शुभैः, शरीरावयवैः, हरिदश्वदीधितेः, अनुप्रवेशात्, बालचन्द्रमा, इव, दिने, दिने, वृद्धिं, पुपोष।

**वाच्य०**—तेन बालचन्द्रमसेव दिने दिने वृद्धिः पुपुषे।

**व्याख्या**—सः = रघुः, समग्रा = सम्पूर्णा, सम्पत् = समृद्धिः, यस्य स तस्य समग्रसम्पदः, पितुः = जनकस्य, प्रयत्नात् = प्रयासात्, शुभैः = मनोहरैः, शरी-

रस्य = देहस्य, अवयवाः = हस्तपादादयः, तैः शरीरावयवैः, हरितः = हरिद्वर्णा अश्वाः = तुरंगाः, यस्य सः, तस्य दीधितिः = किरणस्तस्याः हरिदश्वदीधितेः = सूर्यकिरणस्येत्यर्थः, अनुप्रवेशात् = अन्तः प्रवेशात्, बालश्चासौ चन्द्रमा बालचन्द्रमाः प्रतिपच्चन्द्रः, इव = यथा, दिने दिने = प्रतिदिनं, वृद्धि = वर्धनं, पुपोष = पोषमकरोत् ।

**समा०**—समग्रा सम्पद् यस्य सः समग्रसम्पद्, तस्य समग्रसम्पदः। शरीरस्य अवयवाः शरीरावयवाः, तैः शरीरावयवैः। हरितः अश्वाः यस्य सः हरिदश्वः, हरिदश्वस्य दीधितिः हरिदश्वदीधितिः, तस्याः हरिदश्वदीधितेः। बालश्चासौ चन्द्रमाश्च बालचन्द्रमाः।

**अभि०**—यथा सूर्यकिरणस्यानुप्रवेशात् प्रतिपच्चन्द्रः एकैकया कलया प्रतिदिनं प्रवृद्धो भवति तथैव स्वपितुः प्रयासेन कुमारो रघुरपि प्रतिदिनं पुष्टि प्राप्तवान् ।

**हिन्दी**—जैसे शुक्ल पक्ष में प्रतिपद् का चन्द्रमा सूर्य की किरणें पाकर प्रतिदिन बढ़ने लगता है वैसे ही सम्पत्तिशाली पिता के प्रयत्न से कुमार रघु के अंग प्रत्यंग भी प्रतिदिन बढ़ने लगे ॥२२॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥२३॥

**सञ्जीविनी**—उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्तिकेयेन। 'कार्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः। यथा ननन्दतुः। शचीपुरंदरौ जयन्तेन जयन्ताख्येन सुतेन। 'जयन्तः पाकशासनिः' इत्यमरः। यथा ननन्दतुः तथा तत्समौ ताभ्यामुमावृषाङ्काभ्यां शचीपुरंदराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयन्ताभ्यां सदृशेन सुतेन ननन्दतुः। मागधी प्राग्व्याख्याता ॥२३॥

**अन्वयः**—उमावृषाङ्कौ, शरजन्मना, यथा, 'ननन्दतुः'' शचीपुरन्दरौ, जयन्तेन, यथा 'ननन्दतुः'' तथा, तत्समौ, सा, मागधी, नृपः, च, तत्सदृशेन, सुतेन, ननन्दतुः ।

**वाच्य०**—उमावृषाङ्काभ्यां शचीपुरन्दराभ्यां ननन्दे, तत्समानाभ्यां तया मागध्या नृपेण च ननन्दे ।

**व्याख्या**—उमा = पार्वती च, वृषः अङ्को यस्यासौ वृषाङ्कः = शिवश्चेति, उमावृषाङ्कौ, शरेषु जन्म यस्यासौ शरजन्मा तेन शरजन्मना = कार्तिकेयेन, यथा = येन प्रकारेण, ननन्दतुः, शची = इन्द्राणी च पुरन्दरः = शक्रश्चेति, शचीपुरन्दरौ, जयन्तेन = तदाख्येन पुत्रेण, "यथा ननन्दतुः" तथा = तेन प्रकारेण, तौ = उमावृषाङ्कौ च, तौ = शचीपुरन्दरौ चेति ते, तैः समौ = तुल्यौ, इति तत्समौ, सा = पूर्वोक्ता, मागधी = सुदक्षिणा, नृपः = राजा दिलीपः, च ताभ्यां = कुमारजयन्ताभ्यां, सदृशः = तुल्यस्तेन, तत्सदृशेन सुतेन = पुत्रेण, ननन्दतुः = अनन्दताम् ।

**समा०**—वृषः अङ्के यस्य सः वृषाङ्कः, उमा च वृषाङ्कश्च उमावृषाङ्कौ । शरेभ्यो जन्म यस्य सः शरजन्मा, तेन शरजन्मना । पुरः दारयतीति पुरन्दरः, शची च पुरन्दरश्च शचीपुरन्दरौ । ताभ्यां (उमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च) समौ तत्समौ । ताभ्यां ( शरजन्मजयन्ताभ्यां ) सदृशः तत्सदृशः तेन तत्सदृशेन । मगधस्य राज्ञो अपत्यं स्त्री मागधी ।

**अभि०**—यथा कार्तिकेयं पुत्रं प्राप्य पार्वतीपरमेश्वरौ यथा च जयन्तं लब्ध्वा शचीपुरन्दरौ आनन्दं प्रापतुः तथैव षडाननजयन्ततुल्येन स्वपुत्रेण रघुणा सुदक्षिणादिलीपावपि परमानन्दं प्रापतुः ।

**हिन्दी**—जिस प्रकार कार्तिकेय जैसे प्रतापी पुत्र पाकर भगवान् शंकर व पार्वती को प्रसन्नता हुई थी और जयन्त जैसे प्रभावशाली पुत्र को प्राप्तकर इन्द्र और इन्द्राणी को प्रसन्नता हुई थी, वैसे ही पार्वतीमहेश्वर तथा शची-इन्द्र के समान सुदक्षिणादिलीप भी कार्तिकेय जयन्त के समान तेजस्वी पुत्र को पाकर अतीव प्रसन्न हुए ॥२३॥

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥२४॥

**सञ्जीविनी**—रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ । "पुमान्स्त्रिया" इत्येकशेषः । तयोरिव तयोर्दंपत्योर्भावबन्धनं हृदयाकर्षकं परस्पराश्रयमन्योन्यविषयं यत्प्रेम बभूव तदेकेन केवलेन ताभ्यामन्येन वा । 'एके मुख्यान्यकेवलाः' इत्यमरः । सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि पर्यचीयत ववृधे । कर्मकर्तरि लिट् । अकृत्रिमत्वात्स्वयमेवोपचितमित्यर्थः ।

यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं हीयते । अत्र तु तयोः प्रागेकैककर्तृकमेकैकविषयं प्रेम संप्रति द्वितीयविषयलाभेऽपि नाहीयत । प्रत्युतोपचितमेवाभूदिति भावः ॥२४॥

**अन्वयः**—रथाङ्गनाम्नोः, इव, तयोः, भावबन्धनम्, परस्पराश्रयं, यत्, प्रेम, बभूव, तत्, एकसुतेन, विभक्तमपि, परस्परस्य, उपरि, पर्यचीयत ।

**वाच्य०**—भावबन्धनेन परस्पराश्रयेण येन प्रेम्णा बभूवे तेन ववृधे ।

**व्याख्या**—रथस्याङ्गं रथाङ्गं = चक्रं,नाम यस्य स रथाङ्गनामा,रथाङ्गनाम्नी च रथाङ्गनामा चेति रथाङ्गनामानौ तयोः रथाङ्गनाम्नोः = चक्रवाकयोः, इव = यथा, तयोः = सुदक्षिणादिलीपयोः, भावस्य = हृदयस्य, बोधकम् = आकर्षकमिति भावबोधकं, परस्परम् = अन्योन्यम्, आश्रयः = विषयः, यस्य तत् परस्पराश्रयं, यत् = लोकोत्तरं, प्रेम = स्नेहः, बभूव=अभूत्, तत् = पूर्वोक्तं प्रेम एकश्चासौ सुतस्तेन एकसुतेन = केवलपुत्रेण, विभक्तम् = कृतविभागम्, अपि, परस्परस्य = अन्योन्यस्य, उपरि = विषये, पर्यचीयत = ववृधे, वृद्धिं प्रापेत्यर्थः ।

**समा०**—रथस्य अङ्गं (चक्रं) रथाङ्गम्, रथाङ्गस्य नाम यस्य स रथाङ्गनामा (स्त्री च रथाङ्गनाम्नी) रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ, तयोः रथाङ्गनाम्नोः । सा च स च तौ, तयोः—तयोः । भावस्य बन्धनं भावबन्धनम्, परस्परमाश्रयः यस्य तत् परस्पराश्रयम् । एकश्चासौ सुतश्च एकसुतः तेन एकसुतेन ।

**अभि०**—चक्रवाकयोरिव सुदक्षिणादिलीपयोः यल्लोकोत्तरं प्रेम आसीत् तत् एकसुतेन रघुणा विभक्तमपि परस्परं वृद्धिमेव गतम् ।

**हिन्दी**—सुदक्षिणा और दिलीप में चकवा और चकवी के समान गाढा प्रेम था, वह प्रेम एकमात्र पुत्र रघु पर बँट जाने पर भी परस्पर के प्रेम में कमी न ला सका प्रत्युत और बढ़ता ही गया ॥२५॥

**उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥२५॥**

**सञ्जीविनी**—सोऽर्भकः शिशुः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । धात्र्योपमात्रा । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति

विश्वः। प्रथममुदितमुपदिष्टं वच उवाच। तदीयामङ्गुलिमवलम्ब्य ययौ च। प्रणिपातस्य शिक्षयोपदेशेन नम्रोऽभूच्च इति यत्तेन पितुर्मुदं ततान ॥२५॥

**अन्वयः**—सः, अर्भकः, धात्र्या, प्रथमोदितं, वचः, उवाच, तदीयाम् अंगुलिम्, अवलम्ब्य, ययौ, च, प्रणिपातशिक्षया, नम्रः, अभूत्, च, तेन, पितुः, मुदं, ततान।

**वाच्य०**—तेनार्भकेण ऊचे, यये च, नम्रेण अभावि, मुत्, तेने।

**व्याख्या**—सः=पूर्वोक्तः, अर्भकः=शिशुः, धात्र्या=उपमात्रा प्रथमं=पूर्वम्, उदितं=कथितं, तत् प्रथमोदितं, वचः=वाक्यम्, उवाच=उक्तवान्, तस्याः=धात्र्याः, इयमिति तदीया तां तदीयाम्, अङ्गुलिं=करशाखाम्, अवलम्ब्य=गृहीत्वा, ययौ=जगाम, च प्रणिपातस्य=नमस्कारस्य, शिक्षा=उपदेशस्तया प्रणिपातशिक्षया, नम्रः=विनीतः, अभूत्=बभूव, च, "इति यत्" तेन पितुः=जनकस्य, मुदं=हर्षं, ततान=अतनोत्, विस्तारितवानित्यर्थः।

**समा०**—प्रथमम् उदितं प्रथमोदितम्, तत् प्रथमोदितम्। तस्या इयं तदीया, तां तदीयाम्। प्रणिपातस्य शिक्षा प्रणिपातशिक्षा, तया प्रणिपातशिक्षया।

**अभि०**—स कुमारः, धात्र्या प्रथमं कथितं वचनं कथयामास, तस्या अंगुलिं गृहीत्वा चचाल, प्राणिपातोपदेशेन नम्रोऽभूत्, तेन दिलीपोऽतीव प्रसन्नो बभूव।

**हिन्दी**—कुमार रघु धाय की सिखाई बातों को अपनी तोतली बोली में बोलने लगा, और उसकी उँगली पकड़कर चलने लगा और शिर झुकाकर बड़ों को प्रणाम करना भी सीख गया, इन सब बातों को देखकर राजा दिलीप बड़े प्रसन्न होते थे ॥२५॥

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि।
उपान्तसम्मीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥२६॥

**सञ्जीविनी**—शरीरयोगजैः सुखैस्त्वचि त्वगिन्द्रियेऽमृतं निषिञ्चन्तं वर्षन्तमिव तं पुत्रमङ्कमारोप्य मुदाविर्भावादुपान्तयोः प्रान्तयोः संमीलितलोचनः सन् नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ। रसः स्वादः ॥२६॥

**अन्वयः**—शरीरयोगजैः, सुखैः, त्वचि, अमृतम्, निषिञ्चन्तम्, इव, तम्, अङ्कम्, आरोप्य, उपान्तसंमीलितलोचनः, "सन्" नृपः, चिरात्, सुतस्पर्शरसज्ञतां, ययौ।

**वाच्य०**—उपान्तसंमीलितलोचनेन "सता" नृपेण चिरात् सुतस्पर्शरसज्ञना यये।

**व्याख्या**—शरीरस्य = देहस्य, योगः = सम्बन्धः स्पर्श इत्यर्थः, इति शरीरयोगस्तस्मात्, जातानि = उत्पन्नानि, तैः शरीरयोगजैः, सुखैः = आनन्दैः, त्वचि = त्वगिन्द्रिये, अमृतं = सुधां, निषिञ्चन्तं = वर्षन्तम्, इव = यथा, तं = पुत्रम्, अङ्कं = क्रोड़म्-उत्सङ्गमित्यर्थः, आरोप्य = संस्थाप्य, उपान्तयोः = प्रान्तभागयोः, सम्मीलिते = निमीलिते, लोचने = नयने येन स उपान्तसंमीलितलोचनः, "सन्" नृपः = राजा दिलीपः, चिरात् = बहुकालात्, सुतस्य = पुत्रस्य स्पर्शः = आलिंगनमिति सुतस्पर्शः, तस्य रसः = स्वादस्तं जानाति = वेत्तीति सुतस्पर्शरसज्ञः, तस्य भावस्तत्ता, तां सुतस्पर्शरसज्ञतां, ययौ = प्राप्तः।

**समा०**—शरीरस्य योगः शरीरयोगः, शरीरयोगाज्जातानि शरीरयोगजानि, तैः शरीरयोगजैः। उपान्तयोः सम्मीलिते लोचने यस्य सः उपान्तसम्मीलितलोचनः। नॄन् पातीति नृपः। सुतस्य स्पर्शः सुतस्पर्शः, सुतस्पर्शस्य रसः, सुतस्पर्शरसः, सुतस्पर्शरसं जानातीति सुतस्पर्शरसज्ञः, सुतस्पर्शरसज्ञस्य भावः सुतस्पर्शरसज्ञता तां सुतस्पर्शरसज्ञताम्।

**अभि०**—पुत्रस्य रघोः शरीरस्पर्शजन्यैः सुखैः निमीलितनेत्रः सन् राजा दिलीपः पुत्रस्पर्शरसज्ञतायाश्चिरादनुभवं चकार।

**हिन्दी**—शरीरस्पर्श से उत्पन्न सुखों के द्वारा मानो अमृत की वर्षा करने वाले रघु को गोद में बैठाकर आखें बन्द किये हुए राजा दिलीप बहुत देर तक पुत्रस्पर्श का आनन्द लेते ही रह जाते थे ॥२६॥

**अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम्।**
**स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥२७॥**

**सञ्जीविनी**—स्थितेरभेत्ता मर्यादापालकः स नृपः परार्ध्यजन्मनोत्कृष्टजन्मनाऽनेन रघुणाऽन्वयं वंशम्। प्रजानां पतिर्ब्रह्मा। गुणाः सत्त्वादयः तेष्वग्र्येण मुख्येन सत्त्वेन वर्तते व्याप्रियत इति गुणाग्र्यवर्ती तेन स्वस्य मूर्तिभेदेनावतारविशेषेण विष्णुनात्मनः सर्गं सृष्टिमिव स्थितिमन्तं प्रतिष्ठावन्तममंस्त मन्यतेस्म। मन्तेरनुदात्तत्वादिट्प्रतिषेधः। अत्रोपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि। तत्र रघुपक्षे गुणा विद्याविनयादयः। "गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे। स्तम्बे सत्त्वादिसंख्यादिविद्यादिहरितादिषु॥" इति विश्वः। शेषं सुगमम् ॥२७॥

**अन्वयः**—स्थितेः, अभेत्ता, पराघ्यंजन्मना, अनेन, अन्वयं, प्रजानां, पतिः, गुणाग्र्यवर्तिना स्वमूर्तिभेदेन, आत्मनः, सर्गम्, इव, स्थितिमन्तम्, अमंस्त ।

**वाच्य०**—स्थितेरभेत्त्रा, अनेनान्वयः, प्रजानां पत्या आत्मनः सर्ग इव, स्थितिमान् अमानि ।

**व्याख्या**—स्थितेः = मर्यादायाः, अभेत्ता = पालकः, दिलीपः, पराघ्यंम् = उत्कृष्टं, जन्म = जननं यस्य स तेन पराघ्यंजन्मना, अनेन = रघुणा, अन्वयं = कुलं, प्रजानां = जनानां, पतिः = प्रभुः = विधाता, गुणेषु = सत्त्वादिषु, अग्र्येण = मुख्येन = सत्त्वगुणेन वर्तते = व्याप्रियत इति गुणाग्र्यवर्ती तेन गुणाग्र्यवर्तिना, स्वस्य = ब्रह्मणः, मूर्तिः = स्वरूपस्तस्या भेदः = अवतारविशेषस्तेन स्वमूर्तिभेदेन विष्णुनेत्यर्थः, आत्मनः = स्वस्य, सर्गं = सृष्टिम्, इव = यथा, स्थितिमन्तं = प्रतिष्ठावन्तं च अमंस्त = मेने ।

**समा०**—नभेत्ता अभेत्ता । पराघ्यं जन्म यस्य सः पराघ्यंजन्मा, तेन पराघ्यंजन्मना । गुणेषु अग्र्यं गुणाग्र्यम्, गुणाग्र्येण वर्तत इति गुणाग्र्यवर्ती, तेन गुणाग्र्यवर्त्तिना । मूर्तेः भेदः मूर्तिभेदः, स्वस्य मूर्तिभेदः स्वमूर्तिभेदः, तेन स्वमूर्तिभेदेन । स्थितिः अस्यास्तीति स्थितिमान्, तं स्थितिमन्तम् ।

**अभि०**—यथा ब्रह्मा स्वस्यावतारभेदेन सत्त्ववता विष्णुरूपेण सृष्टिं स्थितिमतीं मन्यतेस्म तथैव राजा दिलीपोऽपि स्वराज्यं स्थितिमदभिलषमाणः सन् स्वरूपभेदेन रघुणा निजवंशं प्रतिष्ठावन्तं मेने ।

**हिन्दी**—जिस प्रकार प्रजापति ब्रह्मा ने अपने सत्त्वगुण वाले अंश से विष्णु का अवतार होने पर अपनी सृष्टि को स्थिति वाली ( अमर ) समझ लिया वैसे ही मर्यादा पालक राजा दिलीप ने भी जान लिया कि उत्कृष्ट जन्म वाले रघु से सूर्यवंश सदा व्यवस्थित चलता रहेगा ॥२७॥

स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥२८॥

**सञ्जीविनी**—'चूडा कार्या द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्या श्रुतिचोदनात् ॥'' इति मनुस्मरणात्तृतीये वर्षे वृत्तचूलो निष्पन्नचूडाकर्मा सन् डलयोरभेदः । स रघुः । 'प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत्' इति

वचनात्पञ्चमे वर्षे चलकाकपक्षकैश्चञ्चलशिखण्डकैः । "बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः । सवयोभिः स्निग्धैः 'वयस्यः स्निग्धः' इत्यमरः । अमात्यपुत्रैरन्वितः सन् । लिपेः पञ्चाशद्वर्णात्मिकाया मातृकाया यथावद्ग्रहणेन सम्यग्बोधेनोपायभूतेन वाङ्मयं शब्दजातम् । नद्याः मुखं द्वारम् । 'मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः' इति यादवः । तेन कश्चिन्मकरादिः समुद्रमिव । आविशत्प्रविष्टः । ज्ञातवानित्यर्थः ॥२८॥

**अन्वयः**—वृत्तचूलः, "सन्" सः, चलकाकपक्षकैः, सवयोभिः, अमात्यपुत्रैः, अन्वितः, "सन्" लिपेः, यथावद्, ग्रहणेन, वाङ्मयं, नदीमुखेन, समुद्रम्, इव, आविशत् ।

**वाच्य०**—वृत्तचूलेन तेनान्वितेन सता समुद्र इव वाङ्मयम्, आविश्यत ।

**व्याख्या**—वृत्ता = निष्पन्ना, चूला = चूडाकर्म यस्य स वृत्तचूलः "सन्" सः = रघुः, चलाः = चञ्चलाः, काकपक्षकाः = शिखण्डका येषान्ते, तैः चलकाकपक्षकैः, समानं = तुल्यं, वयः = अवस्था येषान्ते, तैः सवयोभिः, स्निग्धैरित्यर्थः, अमात्यानां = मन्त्रिणां, पुत्राः = सुता इति, अमात्यपुत्रास्तैः, अमात्यपुत्रैः, अन्वितः = सहितः, "सन्" लिपेः = वर्णमालायाः, यथावद् = सम्यक्तया ग्रहणेन = बोधेन ज्ञानेनेत्यर्थः। वाङ्मयं = शब्दजातं शास्त्रमित्यर्थः, नद्याः = सरितः, मुखं = द्वारं तेन नदीमुखेन, "मकरादिरिति शेषः", समुद्रं = सागरम्, इव = यथा, आविशत् = प्रविवेश, मकरादिः समुद्रं प्रविष्टः, रघुः, ज्ञातवानित्यर्थः ।

**समा०**—वृत्ता चूला यस्य सः वृत्तचूलः । चलाः काकपक्षाः येषां ते चलकाकपक्षकाः, तैः चलकाकपक्षकैः । समानं वयः येषां ते सवयसः, तैः सवयोभिः । अमा 'सह समीपे वा' भवन्तीति अमात्याः, अमात्यानां पुत्राः अमात्यपुत्राः, तैः अमात्यपुत्रैः । प्रचुरा वाक् वाङ्मयं, तत् वाङ्मयम् । नद्याः मुखं नदीमुखम्, तेन नदीमुखेन ।

**अभि**—यथा मकरादिः, नदीद्वारेण महासागरं प्रविशति एवं निष्पन्नचूडाकर्मा रघुरपि स्निग्धैर्मन्त्रिपुत्रैः सह लिपिशिक्षणेन समस्तवाङ्मयं ज्ञातवानिति भावः ।

**हिन्दी**—मुण्डन संस्कार हो जाने पर रघु ने चञ्चल शिखावाले, समान अवस्था वाले मंत्रिपुत्रों के साथ अच्छी प्रकार से वर्णमाला सीख ली, फिर उसी

प्रकार समस्त साहित्य में प्रवेश कर लिया जिस प्रकार मकर नदी के द्वारा महासागर में घुस जाता है ॥२८॥

यथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥२९॥

**सञ्जीविनी**—"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥" इति मनुस्मरणादथ गर्भैकादशेऽब्दे विधिवदुपनीतं गुरुप्रियमेनं रघुं विपश्चितो विद्वांसो गुरवो विनिन्युः शिक्षितवन्तः । ते गुरवोऽत्रास्मिन् रघाववन्ध्ययत्नाश्च बभूवुः । तथा हि क्रिया शिक्षा 'क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्मसु' इति यादवः । वस्तुनि पात्रभूत उपहिता प्रयुक्ता सती प्रसीदति फलति । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति कौटिल्यः ॥२९॥

**अन्वयः**—अथ, विधिवत्, उपनीतं, गुरुप्रियम्, एनं, विपश्चितः, गुरवः, विनिन्युः, ते, अत्र, अवन्ध्ययत्नाः, च, बभूवुः, हि, क्रिया, वस्तूपहिता, प्रसीदति ।

**वाच्य०**—उपनीतः गुरुप्रियः, एष विपश्चिद्भिर्गुरुभिर्विनिन्ये, तैरवन्ध्ययत्नैश्च बभूवे, हि क्रियया वस्तूपहितया प्रसद्यते ।

**व्याख्या**—अथ = अनन्तरं, विधिमर्हतीति विधिवद् = विधिपूर्वकम्, उपनीतं = कृतयज्ञोपवीतसंस्कारं, गुरूणां = शिक्षकाणां प्रियः = प्रीतिकरस्तं गुरुप्रियं, एनं = रघुं, विपश्चितः = विद्वांसः, गुरवः = शिक्षकाः, विनिन्युः = शिक्षितवन्तः । ते = गुरवः, अत्र = रघुविषये, अवन्ध्यः = सफलः, यत्नः = प्रयासः, येषां ते, अवन्ध्ययत्नाः, बभूवुः = जाताः हि = यतः क्रिया = शिक्षा वस्तुनि = सत्पात्रे, उपहिता = प्रयुक्ता, प्रसीदति = फलति ।

**समा०**—गुरूणां प्रियः गुरुप्रियः, तं गुरुप्रियम् । न वन्ध्यः अवन्ध्यः, अवन्ध्यः यत्नः येषां ते अवन्ध्ययत्नाः । वस्तुनि उपहिता वस्तूपहिता ।

**अभि०**—कृतयज्ञोपवीतसंस्कारं रघुं विद्वांसो गुरवः शिक्षितवन्तः, ते च गुरवः सत्पात्रं रघुमध्याप्य सफलप्रयत्नाः सञ्जाताः ।

**हिन्दी**—विधि पूर्वक यज्ञोपवीत संस्कार हो जाने पर विद्वान् गुरुओं ने रघु को पढ़ाया, और वे गुरुजन रघु के विषय में सर्वथा सफल प्रयत्न वाले हुए, उचित ही है कि सत्पात्र को प्रदान की गई शिक्षा विशेष फलवती होती है ॥२९॥

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥३०॥

**सञ्जीविनी**—अत्र कामन्दकः—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इति। 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः' इति च। उदारधीरुत्कृष्टबुद्धिः स रघुः समग्रैर्धियो गुणैः। चत्वारोऽर्णवा उपमा यासां ताश्चतुरर्णवोपमाः 'तद्धितार्थोत्तरपदसमाहारे च' इत्युत्तरपदसमासः। चतस्रो विद्याः। हरितां दिशामीश्वरः सूर्यः। पवनातिपातिभिर्हरिद्भिर्निजाश्वैः। 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' इति विश्वः। चतस्रो दिश इव क्रमात्ततार। चतुरर्णवोपमेयत्वं दिशामपि द्रष्टव्यम्॥

**अन्वयः**—उदारधीः, सः, समग्रैः, धियः, गुणैः, चतुरर्णवोपमाः चतस्रः, विद्याः हरिताम्, ईश्वरः, पवनातिपातिभिः, हरिद्भिः, 'चतस्रः' दिशः, इव, क्रमात्, ततार।

**वाच्य०**—उदारधिया तेनेश्वरेणेव क्रमात् तेरिरे।

**व्याख्या**—उदारा = उत्कृष्टा, धीः = बुद्धिर्यस्यासौ, उदारधीः सः = रघुः समग्रैः = सम्पूर्णैः धियः = बुद्धेः गुणैः = शुश्रूषाश्रवणादिभिः, चत्वारः = चतुः संख्यकाः अर्णवाः = समुद्राः उपमा = तुलना यासां ताश्चतुरर्णवोपमास्तास्तथोक्ताः चतस्रः = चतुःसंख्यकाः, विद्याः = आन्वीक्षिक्यादीः, हरितां = काष्ठानां दिशामित्यर्थः, ईश्वरः = प्रभुः सूर्यः, पवनमतिक्रम्य पतितुं शीलं येषान्ते पवनातिपातिनस्तैः पवनातिपातिभिः = अनिलाधिकवेगशीलैः, हरिद्भिः = निजाश्वैः 'चतस्रः' दिशः = आशाः इव = यथा क्रमात् = क्रमेण, ततार = उत्तीर्णः। चतस्रो विद्या अधीतवान्।

**समा०**—उदारा धीर्यस्य स उदारधीः। चत्वारः अर्णवाः उपमा यासां ताः चतुरर्णवोपमाः, ताः चतुरर्णवोपमाः। पवनमतिक्रम्य पतितुं शीलं येषां ते पवनातिपातिनः, तैः पवनातिपातिभिः।

**अभि०**—कुशाग्रबुद्धिः रघुः शुश्रूषादिबुद्धिगुणैः क्रमेण आन्वीक्षिक्यादिसर्वा अपि विद्या अधीतवान्।

**हिन्दी**—कुशाग्रबुद्धि रघु ने सम्पूर्ण सेवा आदि बुद्धि के गुणों से चार समुद्रोंके समान (आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीति) इन चारों विद्याओं को वैसे ही पार

कर लिया अर्थात् पढ़ लिया जैसे सूर्य भगवान् अपने सरपट दौड़नेवाले घोड़ों से चारों दिशाओं को थोड़े समय में पार कर लेते हैं ॥३०॥

**त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।**
**न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥३१॥**

**सञ्जीविनी**—स रघुः । 'कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि च' । इति मनुस्मरणान्मेध्यां शुद्धां रौरवीं रुरुसंबन्धिनीम् । 'रुरुर्महाकृष्णसारः' इति यादवः । त्वचं चर्म परिधाय वसित्वा मन्त्रवत्समन्त्रकमस्त्रमाग्नेयादिकं पितुरेवोपाध्यायादशिक्षताभ्यस्तवान् । 'आख्यातोपयोगे' इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति–नेति । तद्गुरुर्दिलीप एकोऽद्वितीयः पार्थिवः केवलं पृथ्वीश्वर एव नाभूत् । किंतु क्षितौ स दिलीप एको धनुर्धरोऽप्यभूत्।

**अन्वयः**—सः, मेध्यां, रौरवीं, त्वचं, परिधाय, मन्त्रवत्, अस्त्रं, पितुः, एव, अशिक्षत, तद्गुरुः, एकपार्थिवः, केवलं, न, अभूत् 'किन्तु' क्षितौ, सः, एकधनुर्धरः, अपि, 'अभूत्' ।

**वाच्य०**—तेनाशिक्ष्यत, तदगुरुणैकपार्थिवेन न अभावि, किन्तु एकधनुर्धरेणाप्यभावि ।

**व्याख्या**—सः = रघुः मेध्यां = पवित्रां = शुद्धां, रुरोरियं रौरवी तां रौरवीं = रुरुमृगसम्बन्धिनीं, त्वचं = चर्म परिधाय = वसित्वा, परिधानं कृत्वेत्यर्थः, मंत्रोऽस्यास्तीति मंत्रवत् = समंत्रकम्, अस्त्रम् = आग्नेयादिकं, पितुः = जनकात् दिलीपात् एव, अशिक्षत = शिक्षितवान् अस्त्रविद्यां गृहीतवानित्यर्थः, तस्य = रघोः, गुरुः = पिता, एकः = अद्वितीयश्चासौ पार्थिवः = पृथिवीश्वरः इति एकपार्थिवः, एव = केवलम्, एकमात्रमित्यर्थः न = नहि अभूत् = आसीत् 'किन्तु' क्षितौ = पृथिव्याम्, एकश्चासौ धनुर्धरः इति, एकधनुर्धरः = अद्वितीयचापधरोऽपि अभूत् = बभूव।

**समा०**—रुरोः इयं रौरवी, तां रौरवीम् । मन्त्रः अस्यास्तीति मन्त्रवत्, तत् मन्त्रवत् (अस्त्रविशेषणं द्वि०) । तस्य गुरुः तद्गुरुः । पृथिव्या ईश्वरः पार्थिवः, एकश्चासौ पार्थिवश्च एकपार्थिवः । धरतीति धरः, धनुषः धरः धनुर्धरः, एकश्चासौ धनुर्धरश्च एकधनुर्धरः ।

**अभि०**—रघुः स्वजनकादेव सम्पूर्णां समंत्रकामाग्नेयाद्यस्त्रविद्यां शिक्षितवान् । यतस्तत्पिता दिलीपः न केवलं सम्राडेव पृथिव्यामद्वितीयधनुर्वेदपण्डितोऽप्यासीत् ।

**हिन्दी**—उस रघु ने शुद्ध, रुरु नामक काले मृग की छाला को पहन कर अपने पितासे ही मंत्र सहित अस्त्रविद्या को सीख लिया, क्योंकि दिलीप केवल चक्रवर्ती राजा ही नहीं था किन्तु वह संसार में धनुर्विद्या का अद्वितीय पण्डित भी था ॥३१॥

**महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।**
**रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥३२॥**

**सञ्जीविनी**—रघुः क्रमाद्यौवनेन भिन्नशैशवो निरस्तशिशुभावः सन् । महानुक्षा महोक्षा महर्षभः । 'अचतुरविचतुर' इत्यादिसूत्रेण निपातनादकारान्तत्वम् । तस्य भावस्तत्ता । तां स्पृशन्गच्छन्वत्सतरो दम्य इव । 'दम्यवत्सतरौ समौ' इत्यमरः। द्विपेन्द्रभावं महागजत्वं श्रयन्व्रजन्कलभः करिपोत इव । गाम्भीर्येणाचापलेन मनोहरं वपुः पुपोष ॥३२॥

**अन्वयः**—**रघुः क्रमात्, यौवनभिन्नशैशवः 'सन्' महोक्षतां, स्पृशन्, वत्सतरः, इव, द्विपेन्द्रभावं, श्रयन्, कलभः इव, गाम्भीर्यमनोहरं वपुः पुपोष ।**

**वाच्य०**—रघुणा, यौवनभिन्नशैशवेन 'सता' स्पृशता वत्सतरेणेव, श्रयता कलभेनेव, वपुः पुपुषे ।

**व्याख्या**—रघुः=दिलीपसूनुः, क्रमात्=क्रमेण, यूनोर्भावः यौवनं, यौवनेन=तारुण्येन, भिन्नं=निवारितं, शैशवं=शिशोर्भावः बाल्यं यस्य स यौवनभिन्नशैशवः 'सन्' महांश्चासौ, उक्षा चेति महोक्षस्तस्य भावः, महोक्षता तां महोक्षतां महावृषभतां, स्पृशन्=गच्छन् अतिशयेन वत्स इति वत्सतरः=दम्यः, इव=यथा द्विपानां=गजानामिन्द्रः=स्वामी इति द्विपेन्द्रः द्विपेन्द्रस्य भावस्तं द्विपेन्द्रभावं=महागजत्वं, श्रयन्=व्रजन् कलभः=करिपोतः, इव=यथा, गम्भीरस्य भावः गाम्भीर्यं, गाम्भीर्येण=गभीरत्वेन, मनोहरं=सुन्दरमिति गाम्भीर्यमनोहरं, वपुः =शरीरं, पुपोष=पुष्णातिस्म ।

**समा०**—यूनः भावः यौवनं, शिशोर्भावः शैशवं, यौवनेन भिन्नं शैशवं यस्य सः यौवनभिन्नशैशवः । महांश्चासौ उक्षा च महोक्षः, महोक्षस्य भावः महोक्षता, तां महोक्षताम् । द्विपानामिन्द्रः द्विपेन्द्रः, द्विपेन्द्रस्य भावः, द्विपेन्द्रभावः, तं द्विपेन्द्रभावम् । गम्भीरस्य भावः गाम्भीर्यम्, गाम्भीर्येण मनोहरं गाम्भीर्यमनोहरम्, तत् गाम्भीर्यमनोहरम् ।

अभि०—यथा वत्सतरो महावृषभो भवति, यथा कलभः गजत्वं प्राप्नोति एवं क्रमशः प्राप्तयौवनः स रघुरपि गाम्भीर्येण सुन्दरं वपुः पुष्णाति स्म ।

**हिन्दी**—जिस प्रकार गौ का बच्चा बड़ा होकर साँड हो जाता है और हाथी का बच्चा बढ़कर गजराज हो जाता है, उसी प्रकार जब रघु ने भी बचपन बिताकर युवावस्था में प्रवेश किया तब उसका शरीर गम्भीरता से और भी सुन्दर तथा परिपुष्ट होकर खिल उठा ॥३२॥

**अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद् गुरुः ।**
**नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवावभुः ॥३३॥**

**सञ्जीविनी**—'गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ।' इति केशवः । गावो लोमानि केशा दीयन्ते खण्डयन्तेऽस्मिन्निति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिवर्षेषु कर्तव्यं केशान्ताख्यं कर्मोच्यते । तदुक्तं मनुना—'केशान्तःषोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ।' इति अथ गुरुः पिता । 'गुरुर्गीष्पतिपित्रादौ' इत्यमरः । अस्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयत् । कृतवानित्यर्थः । अथ नरेन्द्रकन्यास्तं रघुम् । दक्षस्य सुता रोहिण्यादयस्तमोनुदं चन्द्रमिव । 'तमोनुदोऽग्निचन्द्रार्काः' इति विश्वः । सत्पतिमवाप्यावभुः । रघुरपि तमोनुत् । अत्र मनुः—'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्' इति ॥३३॥

**अन्वयः—अथ, गुरुः अस्य, गोदानविधेः अनन्तरं, विवाहदीक्षां, निरवर्तयत्, नरेन्द्रकन्याः, तं दक्षसुताः तमोनुदम्, इव, सत्पतिम्, अवाप्य, आवभुः ।**

**वाच्य०**—अथ गुरुणा विवाहदीक्षा निरवर्त्यत, नरेन्द्रकन्याभिः दक्षसुताभिरिव आवभे ।

**व्याख्या**—अथ = यौवनप्रवेशानन्तरं, गुरुः = पिता दिलीपः, अस्य = रघोः, गावः = केशाः दीयन्ते = खण्ड्यन्तेऽस्मिन् कर्मणि तत्, गोदानं, गोदानस्य = केशान्तकर्मणः, विधिः = अनुष्ठानं तस्य गोदानविधेः, अनन्तरं = पश्चात्, विवाहस्य = पाणिग्रहणस्य, दीक्षा = क्रिया, तां विवाहदीक्षां, निरवर्तयत् = कृतवान्, नरेन्द्राणां = मनुष्येश्वराणां, कन्याः = कुमार्यः, इति नरेन्द्रकन्याः, तं = रघुं, दक्षस्य = प्रजापतेः, कन्याः = रोहिण्यादयः, इति दक्षकन्याः, तमः = अन्धकारं, नुदति =

नाशयतीति तमोनुत् तं तमोनुदं = चन्द्रम्, इव = यथा, संश्चासौ पतिश्चेति सत्पतिस्तं सत्पतिम्, सज्जनपतिम्, अवाप्य=प्राप्य, आबभुः = शुशुभिरे ।

**समा०**—गावः (केशाः) दीयन्ते (खण्डयन्ते) अस्मिन्निति गोदानम्, गोदानस्य विधिः गोदानविधिः, तस्य गोदानविधेः । विवाहस्य दीक्षा विवाहदीक्षा, तां विवाहदीक्षाम् । नराणामिन्द्राः नरेन्द्राः, नरेन्द्राणां कन्याः नरेन्द्रकन्याः । दक्षस्य सुताः दक्षसुताः । तमः नुदतीति तमोनुद्, तं तमोनुदम् । सन् चासौ पतिश्च सत्पतिः, तं सत्पतिम् ।

**अभि०**—राजा दिलीपः, द्वाविंशे वर्षे केशान्तनामकं संस्कारं विधाय पश्चात् नरेन्द्रकन्याभिः सह रघोर्विवाहमपि कारितवान् ।

**हिन्दी**—जवान होते ही, राजा दिलीप ने रघु का बाईसवें वर्ष में केशान्त संस्कार करके राजकुमारियों के साथ विवाह भी कर दिया । वे राजकुमारियां भी सज्जन रघु जैसे प्रतापी पतिको प्राप्त करके वैसे ही सुशोभित हुईं जैसे रोहिणी आदि दक्ष प्रजापति की कन्याएं अन्धकार को भगाने वाले चन्द्रमा को प्राप्त कर सुशोभित हुई थीं ॥३३॥

युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद् गुरुं रघुस्तथाऽपि नीचैर्विनयाददृश्यत ॥३४॥

**सञ्जीविनी**—युवा । युगो नाम धुर्यस्कन्धगः सच्छिद्रप्रान्तो यानाङ्गभूतो दारुविशेषः । 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' इत्यमरः । युगवद्व्यायतौ दीर्घौ बाहू यस्य सः । अंसावस्य स्त इत्यंसलो बलवान् । मांसलश्चेति वृत्तिकारः । 'बलवान्मांसलोंऽसलः' इत्यमरः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । कपाटवक्षाः परिणद्धकंधरो विशालग्रीवः । 'परिणाहो विशालता' इत्यमरः । रघुर्वपुषः प्रकर्षादाधिक्याद्यौवनकृताद् गुरुं पितरमजयत् । तथापि विनयान्नम्रत्वेन नीचैरल्पकोऽदृश्यत । अनेनास्यानौद्धत्यं च विवक्षितम् ॥३४॥

**अन्वयः**—युवा, युगव्यायतबाहुः, अंसलः, कपाटवक्षाः परिणद्धकन्धरः, रघुः वपुःप्रकर्षात्, गुरुम्, अजयत्, तथापि, विनयाद्, नीचैः अदृश्यत ।

**वाच्य०**—यूना रघुणा गुरुः अजीयत तथापि विनयात् 'जनास्तं' नीचैः अपश्यन् ।

**व्याख्या**—युवा = तरुणः, यौवनसम्पन्न इत्यर्थः, युगवत् = यानाङ्गदारुविशेषवत्, व्यायतौ = दीर्घौ, बाहू = भुजौ यस्य स युगव्यायतबाहुः, अंसौ स्तः अस्य सोंऽसलः = मांसलः, कपाटवत् = कपाटवत् वक्षः = उरःस्थलं यस्यासौ कपाटवक्षाः 'कपाटमररं तुल्ये' इत्यमरः, परिणद्धा = विशाला, कन्धरा ग्रीवा यस्य स परिणद्धकन्धरः, रघुः = दिलीपपुत्रः वपुषः = शरीरस्य प्रकर्षः = आधिक्यं तस्मात् वपुःप्रकर्षात्, गुरुं = पितरं दिलीपम्, अजयत् = जितवान् तथापि विनयात् = नम्रतया, नीचैः = अल्पकः, जनकापेक्षया न्यून इत्यर्थः, अदृश्यत = ददृशे जनैरिति शेषः।

**समा०**—युगवद् व्यायतौ बाहू यस्य सः युगव्यायतबाहुः। अंसौ अस्य स्तः इति अंसलः। कपाटमिव वक्षः यस्य सः कपाटवक्षाः। परिणद्धा कन्धरा यस्य सः परिणद्धकन्धरः। वपुषः प्रकर्षः वपुःप्रकर्षः, तस्मात् वपुःप्रकर्षात्।

**अभि०**—यद्यपि रघुः, दीर्घबाहुः, कपाटवत् विस्तृतोरस्थलो मांसलो बलवांश्च जातः, तथापि विनम्रतया स्वजनकापेक्षया स्वल्पको बालक इव दृश्यते स्म।

**हिन्दी**—जवानी के कारण रघु की भुजाएँ बैल के जुए के समान दृढ़ और लम्बी हो गई, वक्षस्थल किवाड़ की तरह चौड़ा हो गया, कन्धे भारी तथा गरदन विशाल हो गई, इस तरह डीलडौल बढ़ जाने पर रघु अपने वृद्ध पिता से लम्बे तथा बलिष्ठ लगते थ, फिर भी नम्रता के कारण पिता के सामने छोटे ही दीख पड़ते थे ॥३४॥

ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम्।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥३५॥

**सञ्जीविनी**—तत आत्मना चिरं धृतां नितान्तगुर्वीम्। 'वोतो गुणवचनात्' इति ङीष्। प्रजानां धुरं पालनप्रयासं लघयिष्यता लघुं करिष्यता। 'तत्करोति तदाचष्टे' इति लघुशब्दाण्णिच्। ततो 'लृटः सद्वा' इति शतृप्रत्ययः। नृपेण दिलीपेनासौ रघुर्निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतो नम्र इति हेतोः। युवराज इति शब्दं भजतीति तथोक्तः। 'भजो ण्विः' इति ण्विप्रत्ययः। चक्रे कृतः 'द्विविधो विनयः स्वाभाविकः कृत्रिमश्च' इति कौटिल्यः। तदुभयसंपन्नत्वात्पुत्रं युवराजं चकारेत्यर्थः। कामन्दकः—'विनयोपग्रहान्भूत्यै कुर्वीत

नृपतिः सुतान् । अविनीतकुमारं हि कुलमाशु विशीर्यते । विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ॥' इति ॥३५॥

**अन्वयः**—ततः, आत्मना, चिरं, धृतां, नितान्तगुर्वीम्, प्रजानां, धुरं, लघयिष्यता, नृपेण, असौ, निसर्गसंस्कारविनीतः, इति युवराजशब्दभाक्, चक्रे ।

**वाच्य०**—धूरं लघयिष्यन् नृपोऽमुं निसर्गसंस्कारविनीतमिति युवराजशब्दभाजं चकार ।

**व्याख्या**—ततः = अनन्तरम्, आत्मना = स्वेन, चिरं = बहुकालपर्यन्तं, धृतां = धारितां, नितान्तम् = अत्यन्तं, गुर्वी = दुर्भरा तां नितान्तगुर्वीं, प्रजानां = लोकानां, धुरं = भारं = पालनरूपं, लघुं करिष्यन्निति लघयिष्यन् तेन लघयिष्यता, लघुं करिष्यता, नृपेण = दिलीपेन, असौ = रघुः, निसर्गेण = स्वभावेन संस्कारेण = शास्त्राभ्यासजनितवासनया च, विनीतः = विनम्रः इति निसर्गसंस्कारविनीतः, इति = हेतोः, युवा चासौ राजा च, इति युवराजः, तस्य शब्दं भजतीति युवराजशब्दभाक् = युवराजनामा, चक्रे = कृतः ।

**समा०**—नितान्तं गुर्वी नितान्तगुर्वी, तां नितान्तगुर्वीम् । लघुं करिष्यतीति लघयिष्यति, लघयिष्यतीति लघयिष्यन्, तेन लघयिष्यता । निसर्गश्च संस्कारश्च निसर्गसंस्कारौ, निसर्गसंस्काराभ्यां विनीतः निसर्गसंस्कारविनीतः । युवा चासौ राजा च युवराजः, युवराजस्य शब्दः युवराजशब्दः, युवराजशब्दं भजति इति युवराजशब्दभाक् ।

**अभि०**—राजा दिलीपः, स्वभावेन शास्त्राभ्यासेन चातीव नम्रं राजकार्ये च दक्षम्, कुमारं रघुं युवराजं कृतवान् ।

**हिन्दी**—इसके अनन्तर बहुत दिनों से धारण किए हुए, प्रजाके पालन रूपी भार को हल्का करने की इच्छा से, राजा दिलीप ने, 'स्वभाव तथा शास्त्रों के अभ्यास से रघु नम्र हो गए हैं और भलीभांति राज्य सम्भाल सकते हैं' यह जानकर रघुको युवराज बना दिया ॥३५॥

**नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।**
**अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥३६॥**

**सञ्जीविनी**—गुणान्विनयादीन्सौरभ्यादींश्चाभिलषतीति गुणाभिलाषिणी श्रीः राज्यलक्ष्मीः पद्माश्रया च । नरेन्द्रो दिलीप एव मूलायतनं प्रधानस्थानं तस्मात् ।

अपादानात् । अनन्तरं संनिहितम् । युवराज इति संज्ञास्य संजाता युवराजसंज्ञितम् । तारकादित्वादितच्प्रत्ययः। आत्मनः पदं स्थानमास्पदम्। 'आस्पदं प्रतिष्ठायाम्' इति निपातः । स रघुरित्यास्पदं तदास्पदम् । कमलाच्चिरोत्पन्नान्नवावतारमचिरोत्पन्न-मुत्पलमिव । अंशेनागच्छत् । स्त्रियो हि यूनि रज्यन्त इति भावः ॥३६॥

**अन्वयः**—**गुणाभिलाषिणी, श्रीः, नरेन्द्रमूलायतनाद्, अनन्तरं, युवराजसंज्ञितं, तदास्पदं, कमलात्, नवावतारम्, उत्पलम्, इव, अंशेन, अगच्छत् ।**

**वाच्य०**—गुणाभिलाषिण्या श्रिया अंशेनागम्यत ।

**व्याख्या**—गुणान् = विनयादीन् सौरभ्यादींश्च, अभिलषति = अभिकांक्षतीति गुणाभिलाषिणी, श्रीः = राज्यलक्ष्मीः, 'पद्मालया च' नरेन्द्रः = दिलीपः, एव मूलं = प्रधानम्, आयतनं = स्थानं, तस्मात्, नरेन्द्रमूलायतनाद्, अनन्तरम् = संनिहितम्, युवराज इति संज्ञा संजाताऽस्येति तत् युवराजसंज्ञितम् = युवराजनामधेयम्, आत्मनः पदं स्थानमिति, आस्पदं, सः = रघुः एव आस्पदं = प्रतिष्ठा यस्य तत् तदास्पदं, कमलात् = चिरोत्पन्नात्, नवः = नूतनः, अवतारः = अवतरणं यस्य तत् नवावतारम्, उत्पन्नं = कुवलयम्, कमलमित्यर्थः, इव = यथा, अंशेन = भागेन, अगच्छत् = अव्रजत् ।

**समा०**—गुणान् अभिलषतीति गुणाभिलाषिणी । मूलञ्च तद् आयतनञ्च मूलायतनम्, नरेन्द्र एव मूलायतनं नरेन्द्रमूलायतनम्, तस्मात् नरेन्द्रमूलायतनात् । न विद्यते अन्तरं यस्य सः अनन्तरः, तम् अनन्तरम् । युवराज इति संज्ञा अस्य संजाता इति युवराजसंज्ञितः तं युवराजसंज्ञितम् । आत्मनः पदम् आस्पदं 'निपातितः' स इत्यास्पदं तदास्पदम्, तत् तदास्पदम् । नवः अवतारः यस्य तद् नवावतारम्, तत् नवावतारम् ।

**अभि०**—विनयादिगुणैराकृष्टा राज्यलक्ष्मीःपुरातनं वृद्धं दिलीपं विहाय नूतनं युवराजं रघुमंशेन तथैवागच्छत्, यथा सौरभ्यादिगुणाकृष्टा पद्माश्रया लक्ष्मीः चिरोत्पन्नं पुराणं कमलं परित्यज्य नवीनं कमलं गच्छति ।

**हिन्दी**—जिस प्रकार सौरभ्यादिगुणों से आकृष्ट राज्यलक्ष्मी तथा कमलनिवासिनी लक्ष्मी, पुराने मुरझाए कमल को छोड़कर नए कमल पर चली जाती है उसी प्रकार रघु के विनयादि गुणों से आकृष्ट राज्यलक्ष्मी, पुराने वृद्ध राजा दिलीप को छोड़कर नवीन युवराज के पास चली गई ॥३६॥

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव।
बभूव तेनातिततरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः॥३७॥

**सञ्जीविनी**—सारथिना सहायभूतेन। एतद्विशेषणमुत्तरवाक्येष्वप्यनुषञ्जनीयम्। वायुना विभावसुर्वह्निरिव। 'सूर्यवह्नी विभावसू' इत्यमरः। घनव्यपायेन शरत्समयेन सारथिना गभस्तिमान्सूर्य इव। कटो गण्डः। 'गण्डः कटो मदो दानम्' इत्यमरः, तस्य प्रभेदः स्फुटनम्। मदोदय इत्यर्थः, तेन करीव। पार्थिवो दिलीपस्तेन रघुणातितरामत्यन्तं सुदुःसहः सुष्ठ्वसह्यो बभूव॥३७॥

**अन्वयः**—**सारथिना, वायुना, विभावसुः, इव घनव्यपायेन, गभस्तिमान्, इव, कटप्रभेदेन, करी इव, पार्थिवः, तेन, अतितराम्, सुदुःसहः, बभूव।**

**वाच्य०**—विभावसुना इव गभस्तिमता इव करिणा इव पार्थिवेन सुदुःसहेन बभूवे।

**व्याख्या**—सारथिना = सहायभूतेन, वायुना = पवनेन, विभावसुः = अग्निः इव = यथा, घनानां = मेघानां, व्यपायः = नाशः यत्र तेन घनव्यपायेन शरत्कालेनेत्यर्थः, गभस्तयोऽस्य सन्तीति गभस्तिमान् = सूर्यः, इव कटस्य = गण्डस्य, प्रभेदः = प्रस्फुटनं तेन कटप्रभेदेन गण्डस्थलस्फुटनेनेत्यर्थः, करी = गजः, इव पृथिव्या ईश्वरः, पार्थिवः = दिलीपः, सारथिना = सहायभूतेन, तेन = रघुणा, अतितराम् = अत्यन्तं, सुतरां दुःखेन सह्यत इति सुदुःसहः = सोढुमशक्यः, बभूव = जातः।

**समा०**—घनानां व्यापायः यस्मिन् सः घनव्यपायः तेन घनव्यपायेन। गभस्तयः अस्य सन्तीति गभस्तिमान्। कटस्य प्रभेदः कटप्रभेदः तेन कटप्रभेदेन। करः 'शुण्डा' अस्यास्तीति करी। पृथिव्या ईश्वरः पार्थिवः।

**अभि०**—पवनसाहाय्येन वह्निः, शरत्कालसाहाय्येन सूर्यः, मदस्रावेण गजश्च यथा दुःसहा भवन्ति एवं बलवता युवराजेन रघुणापि दिलीपः सुदुःसहो जातः।

**हिन्दी**—वायु की सहायता से अग्नि तथा शरदृऋतु में खुले आकाश को पाकर सूर्य और जवानी का मद बहने से हाथी जिस प्रकार प्रबल प्रचण्ड हो जाता है उसी प्रकार प्रतापी रघु की सहायता से राजा दिलीप भी शत्रुओं के लिये प्रभावशाली एवं प्रचण्ड हो गए॥३७॥

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम्।
अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः॥३८॥

**सञ्जीविनी**—शतक्रतुरिन्द्रः उपमा यस्य स शतक्रतूपमः स दिलीपः। "शतं वै तुल्या राजपुत्रा देवा आशापालाः" इत्यादिश्रुत्या। राजसुतैरनुद्रुतमनुगतं धनुर्धरं तं रघुं होमतुरंगाणां रक्षणे नियुज्य। एकेन क्रतुनाऽपूर्णमेकोनं क्रतूनामश्वमेधानां शतमपविघ्नमपगतविघ्नं यथा तथाऽऽप प्राप ॥३८॥

**अन्वयः**—शतक्रतूपमः, सः, राजसुतैः, अनुद्रुतं, धनुर्धरं, तं, होमतुरंगरक्षणे, नियुज्य, एकेन, अपूर्णं, क्रतूनां शतम्, अपविघ्नं, 'यथा स्यात्तथा' आप।

**वाच्य०**—शतक्रतूपमेन तेन क्रतूनां शतम् आपे।

**व्याख्या**—शतं = शतसंख्यकाः, क्रतवः = अश्वमेधाः, यस्य सः शतक्रतुः = इन्द्रः, उपमा = उपमानं यस्य सः शतक्रतूपमः, सः = राजा दिलीपः, राज्ञां = राजन्यानां, सुताः = पुत्रास्तैः राजसुतैः, अनुद्रुतम् = अनुगतं धरतीति धरः धनुषः धरः धनुर्धरस्तं धनुर्धरं = चापधरं, तं = रघुं, होमार्थाः = यज्ञार्थास्तुरंगाः = घोटकाः, तेषां रक्षणं = रक्षा तस्मिन् होमतुरंगरक्षणे नियुज्य = व्यापार्य, एकेन = केवलेन, क्रतुना अपूर्णं = न्यूनं, क्रतूनाम् = अश्वमेधानां, शतं = शतसंख्यापरिमितम्, अपगताः = नष्टाः, विघ्नाः = अन्तराया यत्र तत् अपविघ्नं 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। 'यथा स्यात्तथा' आप = प्राप्तवान्।

**समा०**—शतं क्रतवो यस्य सः शतक्रतुः, शतक्रतुः उपमा यस्य सः शतक्रतूपमः। राज्ञः सुताः तैः राजसुतैः। धरतीति धरः धनुषः धरः धनुर्धरः, तं धनुर्धरम्। होमस्य तुरंगः होमतुरंगः, होमतुरंगस्य रक्षणं होमतुरंगरक्षणम्, तस्मिन् होमतुरंगरक्षणे। न पूर्णमपूर्णम्, तत् अपूर्णम्। अपगतः विघ्नः यस्मात् तत् अपविघ्नम्। यद्वा अपगतः विघ्नः यस्मिन् कर्मणि तद् यथा भवति तथेति क्रियाविशेषणम्।

**अभि०**—इन्द्रतुल्यो राजा दिलीपोऽश्वमेधयज्ञीयतुरंगरक्षणे रघुं नियुज्य, एकोनशतमश्वमेधान् निर्विघ्नं कृतवान्।

**हिन्दी**—इन्द्र के समान प्रतापी दिलीप ने अश्वमेधयज्ञ के घोड़ों की रक्षा का भार राजकुमारों के साथ धनुर्धारी रघु को सौंपकर बिना विघ्न के एक कम सौ (निन्यानवे) यज्ञ पूर्ण कर लिये ॥३८॥

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥३९॥

**सञ्जीविनी**—ततः परमेकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन

दिलीपेन पुनः पुनरपि मखाय मखं कर्तुम्। 'क्रियार्थोपपदस्य च स्थानिनः' इत्यादिना चतुर्थी। उत्सृष्टं मुक्तमनर्गलमप्रतिबन्धनम्। अव्याहतस्वैरगतिमित्यर्थः। अपर्यावर्तयन्तोऽश्वमनुचरन्ति इत्यास्तम्बस्मरणात् तुरङ्गधनुर्भृतां रक्षिणां रक्षकाणामग्रत एव शक्रो गूढविग्रहः सन्। जहार किल किलेत्यैतिह्ये ॥३९॥

**अन्वयः**—ततः, परं, यज्वना, तेन, पुनः, मखाय, उत्सृष्टम्, अनर्गलं, तुरंगं, धनुर्भृतां, रक्षिणां, अग्रतः, एव, शक्रः, गूढविग्रहः, 'सन्' जहार किल।

**वाच्य०**—उत्सृष्टः अनर्गलः तुरंगः शक्रेण गूढविग्रहेण 'सता' जह्रे।

**व्याख्या**—ततः = तस्मात्, परम् = एकोनशतयज्ञप्राप्त्यनन्तरं, यज्वना = विधिनेष्टवता, तेन = राज्ञा दिलीपेन, पुनः = भयोऽपि, मखाय = यज्ञाय = मखं कर्तुमित्यर्थः, उत्सृष्टं = मुक्तं त्यक्तम्, न विद्यते अर्गला = शृंखलाप्रबन्धो यस्यासौ तमनर्गलं, तुरङ्गं = घोटकं, धनुर्बिभ्रतीति धनुर्भृतस्तेषां धनुर्भृतां = धानुष्काणां रक्षिणां = तुरंगरक्षकाणाम्, अग्रतः = पुरतः एव शक्रः = इन्द्रः, गूढः = गुप्तः, विग्रहः = शरीरं यस्य स गूढविग्रहः 'सन्' जहार = हरणं कृतवान्। किलैतिह्ये।

**समा०**—न विद्यते अर्गलं यस्य सः अनर्गलः, तम् अनर्गलम्। धनुः बिभ्रतीति धनुर्भृतः तेषां धनुर्भृताम्। रक्षन्तीति रक्षिणः तेषां रक्षिणाम्। गूढः विग्रहः यस्य सः गूढविग्रहः।

**अभि०**—शततममश्वमेधयज्ञं कर्तुं राजा दिलीपः पुनरपि यज्ञाश्वं मुक्तवान्। तमश्वं गूढविग्रह इन्द्रः रक्षकाणां रघोश्च पुरत एव अपहृतवान्।

**हिन्दी**—इसके बाद विधिपूर्वक यज्ञ करनेवाले महाराज दिलीप ने सौवाँ अश्वमेधयज्ञ करने के लिये फिर खुला घोड़ा छोड़ा 'इन्द्र यह न सहन कर सका' और उसने अपने को छिपाकर धनुर्धारी रक्षकों के सामने ही उस घोड़े को चुरा लिया ॥३९॥

**विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत्।**
**वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी॥४०॥**

**सञ्जीवनी**—तत्कुमारस्य सैन्यं सेना सपदि। विषाद इष्टनाशकृतो मनोभङ्गः यदुक्तम्—'विषादश्चेतसो भङ्ग उपायाभावनाशयोः' इति। तेन लुप्ता प्रतिपत्तिः कर्तव्यज्ञानं यस्य तत्तथोक्तम्। विस्मितमश्वनाशस्याकस्मिकत्वादाश्चर्याविष्टं सत्। स्थितं तस्थौ। अथ श्रुतप्रभावा यदृच्छया स्वेच्छयाऽऽगता। रघोः स्वप्रसादलब्धत्वा-

दनुजिघृक्षयेति भावः । नन्दिनी नाम वसिष्ठधेनुश्च ददृशे । द्वौ नकारावविलम्बसूचकौ ॥४०॥

**अन्वयः**—तत्, कुमारसैन्यं, सपदि, विषादलुप्तप्रतिपत्ति, विस्मितं, 'सत्' स्थितं, च, अथ, श्रुतप्रभावा, यदृच्छया, आगता, नन्दिनी, 'नाम' वशिष्ठधेनुः, च ददृशे ।

**वाच्य०**—तेन कुमारसैन्येन सपदि विस्मितेन 'सता' स्थितम् । अथ यदृच्छयागतां नन्दिनीं वशिष्ठधेनुं च ददर्श ।

**व्याख्या**—तत् = पूर्वोक्तं, कुमारस्य = रघोः, सैन्यं = सेना इति कुमारसैन्यं, सपदि = सद्यः, विषादेन = इष्टनाशकृतेन मनोभंगेन, लुप्ता = नष्टा, प्रतिपत्तिः = कर्तव्यज्ञानं यस्य तत् विषादलुप्तप्रतिपत्ति, विस्मितं = यज्ञीयतुरंगादर्शनस्याकस्मिकत्वेनाश्चर्ययुक्तं सत् स्थितं = तस्थौ, अथ = पश्चात् श्रुतः = प्रसिद्धः, प्रभावः = वरप्रदानरूपः यस्याः सा श्रुतप्रभावा, यदृच्छया = स्वेच्छया, आगता = सम्प्राप्ता, नन्दिनी = नन्दिनीनाम्नी, वसिष्ठस्य = महर्षेः, धेनुः = गौः इति वसिष्ठधेनुश्च अविलम्बेनेत्यर्थः । ददृशे = अदृश्यत 'सर्वैः सैनिकैः' इति शेष. ।

**समा०**—कुमारस्य सैन्यं कुमारसैन्यम् । विषादेन लुप्ता प्रतिपत्तिः यस्य तत् विषादलुप्तप्रतिपत्ति । श्रुतः प्रभावः यस्याः सा श्रुतप्रभावा । वसिष्ठस्य धेनुः वसिष्ठधेनुः ।

**अभि०**—सहसा घोटकस्य तिरोधानेन चकिते कर्तव्यज्ञानशून्ये ससैन्ये रघौ नन्दिनी नाम्नी वसिष्ठधेनुः स्वेच्छया तत्रागता ।

**हिन्दी**—घोड़े के सहसा गायब हो जाने से कर्तव्यज्ञान से शून्य आश्चर्य में डूबी रघु की सेना तुरन्त रुक गई और उसी क्षण प्रभावशाली वसिष्ठ ऋषि की नन्दिनी दिखाई दी जो कि स्वेच्छा से घूमती फिरती आ गई थी ॥४०॥

**तदंगनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।**
**अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः॥४१॥**

**सञ्जीविनी**—सतां पुरस्कृतः पूजितो दिलीपनन्दनो रघुः पुण्येन तस्या नन्दिन्या यदङ्गं तस्य निस्यन्दो द्रवः स एव जलम् । मूत्रमित्यर्थः । तेन लोचने प्रमृज्य शोधयित्वा । अतीन्द्रियेष्विन्द्रियाण्यतिक्रान्तेषु । 'अत्यादयः क्रान्ताद्यर्थे द्वितीया'

इति वक्तव्यात् समासः। द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधा-द्विशेष्यनिघ्नत्वम्। भावेष्वपि वस्तुषूपपन्नदर्शनः संपन्नसाक्षात्कारशक्तिर्बभूव ॥

**अन्वयः**—सतां, पुरस्कृतः, दिलीपनन्दनः, पुण्येन, तदङ्गनिस्यन्दजलेन, लोचने, प्रमृज्य, अतीन्द्रियेषु, भावेषु, अपि, उपपन्नदर्शनः, बभूव।

**वाच्य०**—पुरस्कृतेन दिलीपनन्दनेन उपपन्नदर्शनेन बभूवे।

**व्याख्या**—सतां=सज्जनानां पुरस्कृतः पूजितः, नन्दयतीति नन्दनः, दिलीपस्य=राज्ञो, नन्दनः=पुत्रः इति दिलीपनन्दनः रघुरित्यर्थः, पुण्येन=पवित्रेण, तस्याः=नन्दिन्याः, अंगं=शरीरमिति तदंगं तस्य निस्यन्दः=द्रव एव जलं=सलिलमिति तेन तदंगनिस्यन्दजलेन मूत्रेणेत्यर्थः, लोचने=नेत्रे, प्रमृज्य=शोधयित्वा प्रक्षाल्येति यावत्, इन्द्रियाणि=अक्षाणि,अतिक्रान्ताः=अतीताः इति अतीन्द्रियास्तेषु अतीन्द्रियेषु, भावेषु=पदार्थेषु, अपिः=समुच्चये, उपपन्नं=सम्पन्नम् दर्शनं=साक्षात्कारशक्तिर्यस्य स उपपन्नदर्शनः, बभूव=जातः।

**समा०**—दिलीपस्य नन्दनः दिलीपनन्दनः। तस्या अङ्गं तदङ्गम्, तदङ्गस्य निस्यन्दः तदङ्गनिस्यन्दः, तदङ्गनिस्यन्द एव जलं तदङ्गनिस्यन्दजलम्, तेन तदङ्गनिस्यन्दजलेन। इन्द्रियाण्यतीता अतीन्द्रियाः, तेषु अतीन्द्रियेषु। उपपन्नं दर्शनं यस्य सः उपपन्नदर्शनः।

**अभि०**—दिलीपपुत्रो रघुः नन्दिनीमूत्रण लोचने संशोध्य दिव्यदृष्टिर्जातः।

**हिन्दी**—सज्जनों के सम्मानित रघु ने तुरन्त नन्दिनी के मूत्र से आँखें धो डाली, इससे उन्हें इन्द्रियों से न दीखने वाले पदार्थों को भी देखने की शक्ति मिल गई ॥४१॥

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥४२॥

**सञ्जीविनी**—नरदेवसंभवः स रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितौद्धत्यं रथस्य रश्मिभिः प्रग्रहैः। 'किरणप्रग्रहौ रश्मी' इत्यमरः। संयतं बद्धमश्वं हरन्तं पर्वतपक्षाणां शातनं छेदकं देवमिन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श ॥४२॥

**अन्वयः**—नरदेवसम्भवः, सः, पुनः पुनः, सूतनिषिद्धचापलं, रथरश्मिसंयतम्, अश्वं, हरन्तं, पर्वतपक्षशातनं, देवं, पूर्वतः, ददर्श।

**वाच्य०**—नरदेवसम्भवेन तेन अश्वं हरन् पर्वतपक्षशातनो देवः पूर्वतो ददृशे।

**व्याख्या**—नराणां = मनुष्याणां,देवः = ईश्वरः, इति नरदेवस्तस्मात् सम्भवः = उत्पत्तिः यस्य स नरदेवसम्भवः, सः = रघुः पुनः पुनः = भूयोभूयः, सूतेन = सारथिना, निषिद्धं = निवारितं, चापलं = चाञ्चल्यं यस्य स तं सूतनिषिद्धचापलम् रथस्य = स्यन्दनस्य, रश्मयः = प्रग्रहाः, तैः संयतः = बद्धस्तं तथोक्तम्, अश्वं = तुरगं हरन्तं = चोरयन्तं, पर्वतानां = गिरीणां, पक्षाः = गरुतः इति पर्वतपक्षास्तेषां शातनः = छेदकस्तं पर्वतपक्षशातनं, देवम् = इन्द्रं, पूर्वतः = पूर्वस्यां ददर्श = अपश्यत् ।

**समा०**—नरदेवात् संभवो यस्य सः नरदेवसंभवः। चपलस्य भावः चापलम्, सूतेन निषिद्धं चापलं यस्य सः सूतनिषिद्धचापलः, तं सूतनिषिद्धचापलम् । रथस्य रश्मयः रथरश्मयः रथरश्मिभिः संयतः रथरश्मिसंयतः, तं रथरश्मिसंयतम् । पर्वतानां पक्षाः पर्वतपक्षाः पर्वतपक्षाणां शातनः पर्वतपक्षशातनः, तं पर्वतपक्षशातनम् ।

**अभि०**—प्राप्तदिव्यदृष्टिः, दिलीपसूनुः रथरश्मिबद्धमश्वं हरन्तमिन्द्रं पूर्वस्यां दिशि दृष्टवान् ।

**हिन्दी**—इस प्रकार दिव्य दृष्टि प्राप्त करके रघु ने, उस घोड़े को चुराकर ले जाते हुए, पर्वतों से पंख काटने वाले इन्द्र को पूर्व दिशा में देखा और रथ की डोरी से बाँधे चपल घोड़े को इन्द्र का सारथी बराबर रोक रहा था ॥ ४२ ॥

शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्त्तयन्निव ॥४३॥

**सञ्जीविनी**—रघुस्तमश्वहर्तारमनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णां शतैर्हरिभिर्हरिद्वर्णैः । 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः । वाजिभिरश्वैश्च हरिमिन्द्रं विदित्वा । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः। एनमिन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गंभीरेण स्वरेण ध्वनिनैव निवर्तयन्निवावोचत् ॥४३॥

**अन्वयः**—रघुः, तम्, अनिमेषवृत्तिभिः, अक्ष्णां शतैः, हरिभिः, वाजिभिः, च, हरिं, विदित्वा, एनं, गगनस्पृशा, धीरेण, स्वरेण, निवर्त्तयन्, इव, अवोचत् ।

**वाच्य०**—रघुणा निवर्त्तयता इव अवोचि ।

**व्याख्या**—रघुः = दिलीपात्मजः, तम् = अश्वहर्त्तारम् = अश्वचौरमित्यर्थः, निमेषस्य वृत्तिः निमेषवृत्तिः अविद्यमाना, निमेषवृत्तिर्येषां तानि अनिमेषवृत्तीनि, तैः अनिमेषवृत्तिभिः = निमेषव्यापारशून्यैः, अक्ष्णां = नेत्राणां, शतैः = शतसंख्याकैः, हरिभिः = हरिद्वर्णैः, हरिम् = इन्द्रं, विदित्वा = ज्ञात्वा, एनम् = इन्द्रं, गगनम् = आकाशं, स्पृशति = व्याप्नोति इति गगनस्पृक्, तेन, गगनस्पृशा धीरेण = गम्भीरेण, स्वरेण = ध्वनिना, निवर्त्तयन् = परावर्तयन् इव = यथा अवोचत् उक्तवान् ।

**समा०**—निमेषस्य वृत्तिः निमेषवृत्तिः, न विद्यते निमेषवृत्तिः येषां तानि अनिमेषवृत्तीनि, तैः अनिमेषवृत्तिभिः । गगनं स्पृशतीति गगनस्पृक्, तेन गगनस्पृशा ।

**अभि०**—रघुः सहस्राक्षतया घोटकानां हरिद्वर्णतया, निमेषव्यापारशून्यदृष्टिमत्त्वेन चाश्वचौरमिन्द्रं ज्ञात्वा, गम्भीरस्वरेण तं निवर्तयन्निव जगाद ।

**हिन्दी**—रघु ने उस घोड़े को चुराकर ले जाने वाले को, पलकें न गिराने वाली हजार आँखों से, और हरे रंग के घोड़े से इन्द्र को पहचान लिया। और आकशव्यापी गम्भीर स्वर से इन्द्र को मानो लौटाते हुए, ललकारा ॥ ४३ ॥

**मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ।**
**अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥४४॥**

**सञ्जीविनी**—हे देवेन्द्र ! मनीषिभिस्त्वमेव मखांशभाजां यज्ञभागभुजां प्रथमः सदा निगद्यसे कथ्यसे । तथाऽप्यजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रियाविघाताय क्रतुविघाताय । क्रियां विहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । कथं प्रवर्तसे ॥४४॥

**अन्वयः—"हे" देवेन्द्र ! मनीषिभिः, त्वम् एव, मखांशभाजां, प्रथमः, सदा, निगद्यसे, "तथापि" अजस्रदीक्षाप्रयतस्य, मद्गुरोः, क्रियाविघाताय, कथं प्रवर्त्तसे।**

**वाच्य०**—"हे" देवेन्द्र ! मनीषिणस्त्वामेव प्रथमं निगदन्ति, त्वया कथं प्रवृत्यते ।

**व्याख्या**—देवानामिन्द्र इति देवेन्द्रस्तत्संबुद्धौ "हे" देवेन्द्र ! मनीषिभिः = विद्वद्भिः, त्वम् = इन्द्रः, एव मखस्य = यज्ञस्य, अंशाः = भागास्तान् भजन्ति भुञ्जते इति मखांशभाजस्तेषां मखांशभाजां देवानां प्रथमः = आदिः सदा = सर्वदा, निगद्यसे = कथ्यसे, "तथापि" अजस्रं = निरन्तरं दीक्षा इति अजस्रदीक्षा तस्यां प्रयतः = संलग्नस्तस्य, अजस्रदीक्षाप्रयतस्य, मम = रघोः, गुरुः = पिता तस्य

मद्गुरोः क्रियायाः = अनुष्ठानस्य, विघातः = नाशस्तस्मै क्रियाविघाताय, कथं = कस्मात्, प्रवर्त्तसे = प्रवृत्तो भवसि ।

**समा०**—देवानामिन्द्रः देवेन्द्रः, तत्सम्बुद्धौ देवेन्द्र ! मनीषा एषामस्तीति मनीषिणः तैः मनीषिभिः । मखस्य अंशा मखांशाः, मखांशान् भजन्तीति मखांशभाजः तेषां मखांशभाजाम् । अजस्रं दीक्षा अजस्रदीक्षा अजस्रदीक्षायां प्रयतः अजस्रदीक्षाप्रयतः, तस्य अजस्रदीक्षाप्रयतस्य । मम गुरुः मद्गुरुः, तस्य मद्गुरोः । क्रियायाः विघातः क्रियाविघातः, तस्मै क्रियाविघाताय ।

**अभि०**—यज्ञभागभुजां मध्ये त्वमेव प्रथमः भूत्वा निजतृप्तिकारणं यज्ञं विहन्तुं अश्वापहरणरूपकर्मणि कथं प्रवृत्तोऽसि ।

**हिन्दी**—हे इन्द्र ! यज्ञ का भाग सबसे पहले तुमको ही मिलता है ऐसा मनीषियों का कहना है, फिर भी, निरन्तर यज्ञ करनें में प्रयत्नशील मेरे पिता के यज्ञ में न जाने आप क्यों विघ्न डाल रहे हैं ।। ४४ ।।

**त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।**
**स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः।।४५।।**

**सञ्जीविनी**—त्रयाणां लोकानां नाथस्त्रिलोकनाथः । 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेनोत्तरपदसमासः । तेन त्रैलोक्यनियामकेन दिव्यचक्षुषाऽतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्या ननु शिक्ष्याः खलु । स त्वं धर्मचारिणां कर्मसु क्रतुषु स्वयमन्तरायो भवसि चेत् । विधिरनुष्ठानं च्युतः क्षतः । लोके सत्कर्मकथैवास्तमियादित्यर्थः ।।४५।।

**अन्वयः—त्रिलोकनाथेन, दिव्यचक्षुषा, त्वया, मखद्विषः, सदा, नियम्याः, ननु, सः, त्वं, धर्मचारिणां, कर्मसु, स्वयम्, अन्तरायः भवसि, चेत्, "तर्हि" विधिः, च्युतः ।**

**वाच्य०**—त्रिलोकनाथो दिव्यचक्षुस्त्वं मखद्विषः सदा नियमयसि ननु, तेन त्वया धर्मचारिणां कर्मसु अन्तरायेण भूयते चेत्, "तर्हि" विधिना च्युतेन भूयेत ।

**व्याख्या**—त्रयाणां लोकानां नाथस्त्रिलोकनाथस्तेन त्रिलोकनाथेन = त्रैलोक्यस्वामिना, दिव्यानि = अलौकिकानि चक्षूंषि = नेत्राणि यस्य स दिव्यचक्षुस्तेन दिव्यचक्षुषा = अतीन्द्रियार्थदर्शिना, त्वया = इन्द्रेण, मखान् = यज्ञान् द्विषन्ति, इति मखद्विषः = यज्ञविघातकाः, सदा = सर्वदा, नियम्याः = शिक्ष्याः ननु =

निश्चयेन, सः यज्ञद्विषां नियन्ता धर्मं चरितुं शीलं येषान्ते धर्मचारिणस्तेषां धर्मचारिणां = सुकृतकारिणां, कर्मसु = क्रियासु, स्वयम् = आत्मना, अन्तरायः = विघ्नः, भवसि = वर्तसे, चेत् = यदि, "तर्हि" विधिः = धर्मानुष्ठानं, च्युतः = नष्टः, "भवेदिति शेषः"।

**समा०**—त्रयश्च ते लोकाश्च त्रिलोकाः, त्रिलोकानां नाथः त्रिलोकनाथः, तेन त्रिलोकनाथेन। दिव्यं चक्षुः यस्य सः दिव्यचक्षुः, तेन दिव्यचक्षुषा, मखान् द्विषन्तीति मखद्विषः। धर्मं चरन्तीति धर्मचारिणः, तेषां धर्मचारिणाम् ॥४५॥

**अभि०**—त्रिलोकनियामकेन त्वया यज्ञादिसत्कार्यविघातका दण्डनीयाः, एवं स्थिते यदि भवान्,एव मे पितुर्यज्ञविनाशं करिष्यति तर्हि धर्मकथैव नष्टा भवेल्लोके।

**हिन्दी**—तीनों लोकों के स्वामी दिव्यदृष्टिवाले आपको चाहिये कि जो संसार में यज्ञादि सत्कर्म के विघातक हैं, उन्हे दण्ड दें। फिर धर्म रक्षक होकर यदि स्वयं आप ही यज्ञ में विघ्न डालेंगे तो यज्ञादि अनुष्ठान लुप्त हो जायेंगे ॥ ४५ ॥

तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥४६॥

**सञ्जीविनी**-हे मघवन्! तत्तस्मात्कारणान्महाक्रतोरश्वमेधस्याग्र्यं श्रेष्ठमङ्गं साधनममुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुमर्हसि। तथाहि। श्रुतेर्वेदस्य पथो दर्शयितारः सन्मार्गप्रदर्शका ईश्वरा महान्तो मलीमसां पद्धतिं मार्गं नाददते न स्वीकुर्वते। असन्मार्गं नावलम्बन्त इत्यर्थः। 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः॥

**अन्वयः**—"हे" मघवन्! तद्, महाक्रतोः, अग्र्यम्, अंगम्, अमुं, तुरंगं, प्रतिमोक्तुम्, अर्हसि, "तथाहि" श्रुतेः, पथः, दर्शयितारः, ईश्वराः, मलीमसां, पद्धतिं, न, आददते।

**वाच्य०**—त्वया अर्ह्यते, पथो दर्शयितृभिः ईश्वरैः मलीमसा पद्धतिर्नादीयते।

**व्याख्या**—"हे" मघवन्! = हे इन्द्र! तद् = तस्मात् कारणात् महांश्चासौ क्रतुः, महाक्रतुस्तस्य महाक्रतोः = अश्वमेधस्य, अग्रे भवम्, अग्र्यं = प्रधानं श्रेष्ठम्, अङ्गम् = अवयवम्, अमुम् = एतं, तुरङ्गं = घोटकं, प्रतिमोक्तुं = प्रतिदातुम्, अर्हसि = योग्योऽसि, "तथाहि" श्रुतेः = वेदस्य, पथः = मार्गस्य, दर्शयितारः = प्रदर्शकाः, ईशितुं शीलं येषान्ते ईश्वराः = महान्तो जनाः, मलीमसां = मलिनां, पद्धतिं = मार्गं न = नहि, आददते = स्वीकुर्वते।

**समा०**—महांश्चासौ क्रतुश्च महाक्रतुः, तस्य महाक्रतोः। अग्रे भवम् अग्र्यम्, तत् अग्र्यम् ॥

**अभि०**—अतो हे इन्द्र ! अश्वमेधयज्ञीयममुं तुरङ्गं मह्यं दत्त्वा धर्मचारिणो मे पितुः यज्ञरक्षां करोतु भवान्, भवादृशा ईदृशी पद्धतिं न स्वीकुर्वते।

**हिन्दी**—इसलिये हे इन्द्र ! आप मेरे पिता के महाक्रतु अश्वमेध यज्ञ के प्रधान अंग इस घोड़े को छोड़ दीजिये, क्योंकि वेद का मार्ग दिखानेवाले महापुरुष ऐसा निन्दनीय कार्य कभी नहीं करते॥ ४६ ॥

इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम्।
निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥४७॥

**सञ्जीविनी**—इति रघुणा समीरितं प्रगल्भं वचो निशम्याकर्ण्य दिवौकसः स्वर्गौकसः। 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः। तेषामधिपतिर्देवेन्द्रो रघुप्रभावात्सविस्मयः सन् रथं निवर्तयामास, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥४७॥

**अन्वयः**—इति, रघुणा, समीरितं, प्रगल्भं, वचः निशम्य, दिवौकसाम् अधिपतिः, सविस्मयः, "सन्" रथं, निवर्त्तयामास, उत्तरं प्रतिवक्तुं, प्रचक्रमे, च।

**वाच्य०**—दिवौकसामधिपतिना सविस्मयेन "सता" रथो निवर्त्तयाञ्चक्रे।

**व्याख्या**—इति=पूर्वोक्तप्रकारेण, रघुणा=दिलीपपुत्रेण, समीरितं=कथितं, प्रगल्भं=धृष्टं, वचः=वचनं, निशम्य=श्रुत्वा, दिवौकसां=देवानाम्, अधिपतिः=स्वामी, इन्द्रः, विस्मयेन=आश्चर्येण, सहितः=युक्तः इति सविस्मयः "सन्" रथं=स्यन्दनं, निवर्त्तयामास=न्यवर्त्तयत्, उत्तरं=प्रतिवचनं, प्रतिवक्तुं=प्रतिकथयितुं, प्रचक्रमे=प्रारम्भं कृतवान्।

**समा०**—दिव् ओकः येषां ते दिवौकसः। विस्मयेन सह वर्तते इति सविस्मयः॥

**अभि०**—रघोः पूर्वोक्तं प्रगल्भं वाक्यं श्रुत्वा देवेन्द्रः आश्चर्यचकितः सन् रथं परावर्तयन् प्रत्युत्तरं दातुं प्रचक्रमे।

**हिन्दी**—इस प्रकार रघु के निर्भय वचन को सुनकर इन्द्र को बड़ा आश्चर्य हुआ, और अपने रथ को लौटाकर जवाब देने लगा॥ ४७ ॥

यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥४८॥

**सञ्जीविनी**—हे राजन्यकुमार ! क्षत्रियकुमार ! 'मूर्धाभिषिक्तो राजन्यो

बाहुजः क्षत्रियो विराट्' इत्यमरः। यद्वाक्यमात्थ ब्रवीषि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्यनेनाहादेशः। तत्तथा सत्यम्। किंतु यशोधनैरस्मादृशैः परतः शत्रुतो यशो रक्ष्यम्। ततः किमत आह—भवद्गुरुस्त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धमशेषं सर्वं मम तद्यशः शतक्रतुत्वरूपं इज्यया यागेन लङ्घयितुं तिरस्कर्तुमुद्यत उद्युक्तः ॥४८॥

**अन्वयः**—"हे" राजन्यकुमार! यद्, आत्थ, तत्, तथा, तु, यशोधनैः, परतः, यशः, रक्ष्यं, भवद्गुरुः, जगत्प्रकाशम्, अशेषं, मम, तद्, इज्यया, लंघयितुम् उद्यतः।

**वाच्य०**—यद् वाक्यं त्वयोच्यते तेन "भूयते" तु यशोधनाः परतो यशो रक्षन्ति, भवद्गुरुणा तद् यशः इज्यया लंघयितुमुद्यतेन "भूयते"।

**व्याख्या**—राजन्यस्य = क्षत्रियस्य, कुमारः = युवराजस्तत्संबुद्धौ "हे" राजन्यकुमार! यत् = पूर्वोक्तं, वचः = वचनम्, आत्थ = कथयसि, "त्वमिति शेषः" तद् = वचः, तथा = सत्यम् तु = किन्तु, यशः = कीर्तिः, एव धनं = वित्तं येषां ते, तैः, यशोधनैः, परतः = शत्रुतः, यशः = कीर्तिः, रक्षितुं योग्यं रक्ष्यं = रक्षणीयं = पालनीयं, भवतः = तव गुरुः = पिता, इति भवद्गुरुः, दिलीपः, जगति = संसारे, प्रकाशं = प्रसिद्धम्, अशेषं = सम्पूर्णं, मम, इन्द्रस्य, तत् = जगत्प्रसिद्धं, यशः = कीर्तिम्, इज्यया = अश्वमेधयज्ञेन, लंघयितुं = लंघनं कर्तुम्, उद्यतः = उद्युक्तः।

**समा०**—राजन्यस्य कुमारः राजन्यकुमारः, तत्सम्बुद्धौ हे राजन्यकुमार! यश एव धनं येषां ते यशोधनाः, तैः यशोधनैः। रक्षितुं योग्यं रक्ष्यम्। भवतः गुरुः भवद्गुरुः। जगति प्रकाशं जगत्प्रकाशम्, तत् जगत्प्रकाशम्। न विद्यते शेषो यस्य तत् अशेषम्, तत् अशेषम्।

**अभि०**—हे क्षत्रियबालक! यत् भवता कथितं तत्सर्वं सत्यं वर्तते, किन्तु शतक्रतुरिन्द्र एव नान्य इति स्वयशो रक्षितुं तव पितुरश्वमेधयज्ञीयोऽश्वो हृत इति न दोषाय।

**हिन्दी**—हे क्षत्रियकुमार! जो तुम ने कहा है वह सब सत्य है, किन्तु यशस्वियों को अपने यश की रक्षा अवश्य करनी चाहिये। मैंने संसार में प्रसिद्ध सौ अश्वमेध यज्ञ करने का जो यश पाया है, उसे सौवां अश्वमेध करके तुम्हारे पिता छीनना चाहते हैं॥ ४८॥

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥ ४९ ॥

**सञ्जीविनी**—पुरुषेषूत्तम इति सप्तमीसमासः । 'न निर्धारणे' इति षष्ठीसमासनिषेधात् । कर्मधारये तु 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इत्युत्तमपुरुष इति स्यात् । यथा हरिर्विष्णुरेक एव पुरुषोत्तमः स्मृतः । यथा च त्र्यम्बकः शिवः महेश्वरः स्मृतः । नापरोऽपरः पुमान्न । तथा मां मुनयः । शतक्रतुं विदुर्विदन्ति । 'विदो लटो वा' इति झेर्जुसादेशः । नोऽस्माकम् । हरिहरयोर्मम चेत्यर्थः । एष त्रितयोऽपि शब्दो द्वितीयगामी एकं विहायान्यगामी नहि । द्वितीयातत्पुरुषप्रकरणे 'गम्यादीनामुपसंख्यानम्' इति समासः ॥४९॥

**अन्वयः**—यथा, हरिः,एकः,पुरुषोत्तमः, स्मृतः, 'यथा च', त्र्यम्बकः, एव, महेश्वरः, स्मृतः, न, अपरः,तथा, मां, मुनयः, शतक्रतुं, विदुः, नः, एषः, शब्दः,द्वितीयगामी नहि ।

**वाच्य०**—हरिणैकेनैव पुरुषोत्तमेन स्मृतेन 'भूयते' त्र्यम्बकेनैकेनैव महेश्वरेण 'भूयते'नापरेण तथाहं मुनिभिःशतक्रतु विद्ये,एतेन शब्देन द्वितीयगामिना नहि भूयते।

**व्याख्या**—यथा = येन प्रकारेण हरति पापानीति, हरिः = विष्णुः, एकः = केवलः एव पुरुषेषु = नरेषु, उत्तमः = श्रेष्ठः इति पुरुषोत्तमः, स्मृतः = कथितः, 'यथा च'त्रीणि अम्बकानि = नेत्राणि यस्य स त्र्यम्बकः = शिवः'एक एव'इति निश्चये, महांश्चासौ ईश्वर इति महेश्वरः = महादेवः, 'स्मृतः' न = नहि, अपरः = अन्यः कश्चिज्जन इत्यर्थः, तथा = तेन प्रकारेण, माम् = इन्द्रं मन्तार इति मुनयः = वेदशास्त्रतत्त्वावगन्तारः शतक्रतुं = शताश्वमेधयज्ञकर्तारं, विदुः = विदन्ति, नः = अस्माकं त्रयाणाम् हरिहरेन्द्राणाम्, एषः = त्रितयोऽपि शब्दः = हरिहरशतक्रतुरूपः द्वितीयम् = अपरं, गन्तुं = यातुं शीलमस्यासौ द्वितीयगामी = अन्यवाचक इत्यर्थः, नहि = न, भवतीतिशेषः ।

**समा०**—पुरुषेषु उत्तमः पुरुषोत्तमः । महांश्चासावीश्वरश्च महेश्वरः । त्रीणि अम्बकानि यस्य सः त्र्यम्बकः । शतं क्रतवो यस्य सः शतक्रतुः, तं शतक्रतुम् । द्वितीयं गन्तुं शीलमस्येति द्वितीयगामी ।

**अभि०**—लोके पुरुषोत्तममहेश्वरशतक्रतुशब्दाः हरिहरेन्द्रानेवाभिदधति नान्यान् पुरुषान् ।

**हिन्दी**—जैसे भगवान् विष्णु को ही पुरुषोत्तम कहा जाता है और त्र्यम्बक अर्थात् शिव को ही महेश्वर कहा जाता है, ठीक उसी प्रकार मुनि लोग मुझ इन्द्र को ही शतक्रतु 'सौ अश्वमेध यज्ञ करनेवाला' कहते हैं। ये तीनों नाम दूसरे व्यक्ति के नहीं हो सकते ॥४९॥

**अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः।**
**अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य सन्ततेः ॥५०॥**

**सञ्जीविनी**—यतोऽहमेव शतक्रतुरतस्त्वदीयस्य पितुरयं शततमोऽश्वः कपिलानुकारिणा कपिलमुनितुल्येन मयापहारितोऽपहृतः अपहारित इति स्वार्थे णिच्। तवात्राश्वे प्रयत्नेनालम्। प्रयत्नं मा कार्षीरित्यर्थः। निषेधस्य निषेधं प्रति करणत्वात्तृतीया। सगरस्य राज्ञः संततेः संतानस्य पदव्यां पदं मा निधाः न निधेहि। निपूर्वाद्धाधातोर्लुङ्। 'न माङ्योगे' इत्यडागमप्रतिषेधः। महदास्कन्दनं ते विनाशमूलं भवेदिति भावः ॥५०॥

**अन्वयः**—अतः, त्वदीयस्य, पितुः, अयम्, अश्वः, कपिलानुकारिणा, मया, अपहारितः, तव, अत्र, प्रयत्नेन, अलं, सगरस्य, सन्ततेः, पदव्यां, पदं, मा निधाः।

**वाच्य०**—अमुमश्वं कपिलानुकार्यहमपहृतवान् पदं त्वया मा निधायि।

**व्याख्या**—अतः = एतस्मात् कारणात् तवायं त्वदीयस्तस्य = भवदीयस्य, पितुः = जनकस्य, दिलीपस्येत्यर्थः, अयम् = एष शततमः, अश्वः = घोटकः, कपिलमनुकर्तुं शीलमस्येति कपिलानुकारी तेन कपिलानुकारिणा = कपिलमुनितुल्येन मया = इन्द्रेण, अपहारितः = चोरितः, तव = रघोः, अत्र = अस्मिन्नश्वे, प्रयत्नेन = प्रयासेन, अलं = साध्यं नास्ति, सगरस्य = सगरनाम्नो नृपस्य, सन्ततेः = सन्तानस्य, पदव्यां = मार्गे, पदं = चरणं, मा = नहि, निधाः = निधेहि।

**समा०**—कपिलमनुकर्तुं शीलमस्येति कपिलानुकारी, तेन कपिलानुकारिणा। तव अयं त्वदीयः, तस्य त्वदीयस्य।

**अभि०**—निजनामरक्षणार्थं तव पितुरयमश्वः कपिलतुल्येन मयापहृतः, अतः तवाश्वग्रहणप्रयासो व्यर्थः, अन्यथा सगरपुत्राणामिव त्वमपि विनंक्ष्यसि।

**हिन्दी**—इसलिये तुम्हारे पिता के इस घोड़े को कपिल मुनि की तरह मैंने हर लिया है, तुम्हारा इसे छुड़ाने का प्रयत्न व्यर्थ है। अतः तुम सगरपुत्रों के मार्ग का अनुसरण मत करो, नहीं तो उनके समान तुम भी नष्ट हो जाओगे ॥५०॥

ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥५१॥

सञ्जीविनी--ततस्तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा। अपभयो निर्भीकः सन्। पुनः पुरंदरं बभाषे। किमिति--हे देवेन्द्र! यद्येषोऽश्वमोचनरूपस्ते तव सर्गो निश्चयः। 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः। तर्हि शस्त्रं गृहाण भवान्रघुं मामनिर्जित्य। कृतकृत्यो न खलु। "इष्टादिभ्यश्च" इतीनिप्रत्ययः। रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥ ५१ ॥

अन्वयः—ततः, तुरगस्य, रक्षिता, प्रहस्य, अपभयः, "सन्", पुनः, पुरन्दरम्, बभाषे, यदि, एष, ते सर्गः, "तर्हि" शस्त्रम्, गृहाण, भवान्, रघुम्, अनिर्जित्य, कृती न, खलु।

वाच्य०—रक्षित्रा अपभयेन "सता" पुरन्दरः बभाषे यदि, एतेन, ते, सर्गेण "भूयते" 'तर्हि' त्वया शस्त्रम् गृह्यताम् भवता कृतिना न भूयते खलु।

व्याख्या—ततः=तदनन्तरम्, तुरगस्य=अश्वस्य, रक्षतीति रक्षिता=पालकः, रघुः, प्रहस्य=प्रहासं कृत्वा, अपगतं भयं यस्मादित्यपभयः=निर्भयः, 'सन्', पुनः=भूयः, पुर दारयतीति पुरन्दरः=इन्द्रः, तं पुरन्दरम्, बभाषे=ऊचे, यदि=चेत्,एषः=अयम् अश्वमोचनरूप इत्यर्थः, ते=तव,सर्गः=निश्चयः 'तर्हि', शस्त्रम्=आयुधम्, गृहाण=स्वीकुरु, भवान्=त्वम्, इन्द्र इत्यर्थः, रघुम्=दिलीपपुत्रम् मामित्यर्थः, अनिर्जित्य=अजित्वा, कृतमनेनेति कृती=कृतकृत्यः, न=नहि, खलु इति निश्चये।

समा०—अपगतं भयं यस्मात्सः अपभयः। कृतमस्यास्तीति कृती।

अभि०—ततः रघुः प्रहस्याकथयत्, यत् हे इन्द्र! यदि तेऽश्वमोचनाभावे निश्चयः तर्हि मया सह संग्रामं कुरुष्व, यतो यावत्त्वं मां न जेष्यसि तावदश्वनयने कुतस्ते शक्तिः।

हिन्दी—तब घोड़े के रक्षक रघुने हँसकर कहा कि हे इन्द्र! यदि तुम्हारा घोड़े को न छोड़ने का ही निश्चय है तो शस्त्र हाथ में उठाओ, क्योंकि जब तक तुम मुझे नहीं जीत लेते तब तक घोड़ा कैसे ले जा सकते हो?॥५१॥

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम्।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥

**सञ्जीविनी**—स रघुरुन्मुखः सन्। मघवन्तमिन्द्रमेवमुक्त्वा शरासनं चापं सशरं करिष्यमाणः। आलीढेनालीढाख्येन स्थानभेदेन विशेषशोभिनातिशयशोभिना वपुःप्रकर्षेण देहौन्नत्येन विडम्बितेश्वरोऽनुसृतपिनाकी सन् अतिष्ठत् स्थितवान्। आलीढलक्षणमाह यादवः—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥ अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढविपर्ययः ॥" इति ॥ ५२ ॥

**अन्वयः**—सः, उन्मुखः 'सन्', मघवन्तम्, एवम् उक्त्वा, शरासनम्, सशरम्, करिष्यमाणः, आलीढविशेषशोभिना, वपुःप्रकर्षेण, विडम्बितेश्वरः, 'सन्', अतिष्ठत्।

**वाच्य०**—तेन उन्मुखेन 'सता', करिष्यमाणेन विडम्बितेश्वरेण 'सता' अस्थीयत।

**व्याख्या**—सः = रघुः, उद्गतं मुखं यस्य स उन्मुखः = ऊर्ध्वीकृताननः, 'सन्', मघवान् = इन्द्रः, तं मघवन्तम्, एवम् = इत्थम्, पूर्वोक्तप्रकारेण, उक्त्वा = कथयित्वा शरोऽस्यते क्षिप्यतेऽनेनेति शरासनः = धनुः, तम्, शरेण = बाणेन सहित इति सशरः, तम् सशरम् बाणयुक्तमित्यर्थः, करिष्यतीति करिष्यमाणः = विधास्यमानः विशेषेण शोभितुं शीलमस्येति विशेषशोभी आलीढेन = तदाख्यस्थानभेदेन, विशेषशोभी = शोभातिशयशाली इति आलीढविशेषशोभी तेन तथोक्तेन वपुषः = देहस्य, प्रकर्षः = औन्नत्यम्, इति वपुःप्रकर्षः, तेन, विडम्बितः = अनुकृतः, ईश्वरः = पिनाकी येन स विडम्बितेश्वरः, 'सन्' अतिष्ठत् = तस्थौ।

**समा०**—उद्गतं मुखं यस्य सः उन्मुखः। शरस्य आसनं शरासनम्, तत् शरासनम्। शरेण सह वर्तते इति सशरम्, तत् सशरम्। आलीढेन विशेषं शोभितुं शीलमस्येति आलीढविशेषशोभी, तेन आलीढविशेषशोभिना। वपुषः प्रकर्षः वपुःप्रकर्षः, तेन वपुःप्रकर्षेण। विडम्बितः ईश्वरः येन सः विडम्बितेश्वरः।

**अभि०**—रघुरेवमिन्द्रमुक्त्वा बाणं धनुषा संयोज्य दक्षिणं चरणमग्रत आकुञ्च्य वामं च पश्चाद्विस्तार्य युद्धोन्मुखस्तथा स्थितो यथा त्रिपुरदाहोद्यतःशम्भुरासीत्,

**हिन्दी**—इन्द्र से इस प्रकार कह कर रघु धनुष पर बाण चढ़ाते हुए, आलीढ नामक स्थानभेद से खड़े हुए अर्थात् दायाँ पैर आगे को झुका कर तथा बायाँ पैर पीछे की ओर तान कर ऐसे सुशोभित हुए जैसे त्रिपुरदाह के समय भगवान् शङ्कर ॥ ५२ ॥

रघोरवष्टम्भमयेन पत्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।
नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥५३॥

**सञ्जीविनी**—रघोरवष्टम्भमयेन स्तम्भरूपेण । 'अवष्टम्भे सुवर्णे च स्तम्भप्रारम्भयोरपि' इति विश्वः । पत्रिणा बाणेन हृदि हृदये क्षतो विद्धः । अत एवामर्षणोऽसहनः क्रुद्ध इत्यर्थः, गोत्रभिदिन्द्रोऽपि । 'संभावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः' इति विश्वः । नवाम्बुदानामनीकस्य वृन्दस्य मुहूर्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि,दिव्ये धनुषीत्यर्थः। अमोघमवन्ध्यं सायकं बाणं समधत्त संहितवान् ।

**अन्वयः**—रघोः, अवष्टम्भमयेन, पत्रिणा, हृदि, क्षतः, 'अतएव', गोत्रभित्, अपि, नवाम्बुदानीकमुहूर्तलाञ्छने, धनुषि, अमोघम्, सायकम्, समधत्त ।

**वाच्य०**—क्षतेन, 'अतएव' अमर्षणेन, गोत्रभिदा, अपि, अमोघः, सायकः, समधीयत ।

**व्याख्या**—रघोः=दिलीपपुत्रस्य, प्राचुर्येणावष्टम्भो यत्रेत्यवष्टम्भमयः=स्तम्भरूपः, तेन तथोक्तेन, पत्रिणा=बाणेन, हृदि=हृदये, क्षतः=विद्धः, 'अतएव', न मर्षितुं शीलमस्य इति अमर्षणः=क्रोधवान्, गां पृथ्वीं त्रायन्ते रक्षन्ति इति गोत्राः=पर्वताः, तान् भिनत्तीति गोत्रभित्=इन्द्रः, अपि, अम्बूनि=जलानि ददति=यच्छन्तीति अम्बुदाः=मेघाः नवा नूतनाश्च ते अम्बुदा इति नवाम्बुदाः तेषाम् अनीकं=सैन्यम्,इति नवाम्बुदानीकं तस्य मुहूर्तं=क्षणमात्रम् यत् लाञ्छनम् =चिह्नम् इति मुहूर्तलाञ्छनम्, तस्मिन् धनुषि=शरासने, अमोघम्=सफलम्, सायकम्=शरम्, समधत्त=सन्दधे ।

**समा०**—प्रचुरः अवष्टम्भः यस्मिन् सः अवष्टम्भमयः तेन, अवष्टम्भमयेन । अम्बु ददतीति अम्बुदाः, नवाश्च ते अम्बुदाश्च नवाम्बुदाः नवाम्बुदानामनीकं नवाम्बुदानीकम् नवाम्बुदानीकस्य मुहूर्तं लाञ्छनं नवाम्बुदानीकमुहूर्तलाञ्छनम्,तस्मिन् नवाम्बुदानीकमुहूर्तलाञ्छने । न मोघः अमोघः, तं अमोघम् ।

**अभि०**—रघोः स्तम्भरूपेण बाणेन हृदये विद्धः शक्रोऽतिक्रुद्धो भूत्वा नवजलधरक्षणमात्रशोभिते स्वधनुषि सफलं बाणं संयोजितवान् ।

**हिन्दी**—रघुके स्तम्भ सदृश दृढ बाण के द्वारा हृदय विंध जाने के कारण इन्द्र को बहुत क्रोध हुआ और उसने भी नवीन मेघ समूह से क्षणमात्र के लिये शोभित होने वाले अपने धनुष पर कभी व्यर्थ न जाने वाला बाण रक्खा ॥५३॥

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

**सञ्जीविनी**—भीमानां भयंकराणामसुराणां शोणिते रुधिर उचितः परिचितः स इन्द्रमुक्त आशुगः सायको दिलीपसूनो रघोर्बृहद्विशालं भुजान्तरं वक्षः प्रविश्य। अनास्वादितपूर्वं पूर्वमनास्वादितम्, सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेनेव पपौ ॥ ५४ ॥

**अन्वयः**—भीमासुरशोणितोचितः, सः, आशुगः, दिलीपसूनोः, बृहद्, भुजान्तरम्, प्रविश्य, अनास्वादितपूर्वम्, मनुष्यशोणितम्, कुतूहलेन, इव, पपौ ।

**वाच्य०**—भीमासुरशोणितोचितेन तेन आशुगेन कुतूहलेन इव पपे ।

**व्याख्या**—भीमाः = भयङ्कराश्च ते असुराः = दैत्याः इति भीमासुराः तेषां शोणितम् रुधिरम्, इति भीमासुरशोणितम् भीमासुरशोणिते उचितः = योग्यः, इति भीमासुरशोणितोचितः, सः = इन्द्रवनुर्मुक्तः,आशु = शीघ्रं गच्छतीति आशुगः = बाणः, दिलीपस्य = तदाख्यनृपस्य सूनुः = पुत्र इति दिलीपसूनुः, तस्य, दिलीपसूनोः, बृहद् = विशालम्, भुजयोः = बाह्वोः 'भुजबाहू प्रवेष्टो दोः', इत्यमरः, अन्तरं = मध्यभागम् इति भुजान्तरम् तत् वक्षः इत्यर्थः । प्रविश्य = प्रवेशं कृत्वा न आस्वादितम् इति अनास्वादितम् पूर्वम् अनास्वादितम् इति अनास्वादितपूर्वम् = पूर्वमनास्वादितम्, मनुष्यस्य = मनुजस्य, शोणितम् = रुधिरम् इति मनुष्यशोणितं तत्, कुतूहलेन = कौतुकेन, इव = यथा, पपौ = अपिबत् ।

**समा०**—भीमाश्च ते असुराश्च भीमासुराः भीमासुराणां शोणितं भीमासुरशोणितम् भीमासुरशोणिते उचितः भीमासुरशोणितोचितः । आशु गच्छतीत्याशुगः । दिलीपस्य सूनुः दिलीपसूनुः तस्य दिलीपसूनोः । भुजयोरन्तरं भुजान्तरम् तत् भुजान्तरम् । पूर्वम् आस्वादितम् आस्वादितपूर्वम् । मनुष्यस्य शोणितम् मनुष्यशोणितम्, तत् मनुष्यशोणितम् ।

**अभि०**—इन्द्रमुक्तो बाणः,यः केवलं भयंकरदैत्यरुधिरपानयोग्य आसीत् रघोः हृदयं प्रविष्टः सन् मनुष्यरुधिरपानासक्त इव जातः ।

**हिन्दी**—इन्द्र के धनुष से छूटा हुआ बाण जो कि केवल दैत्य रक्तपान का ही अभ्यासी था, रघु के हृदय में घुसकर पहले कभी न चखे हुए मनुष्य के रक्त का पान बड़े चाव से करता था।

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ।
भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम्॥५५॥

**सञ्जीविनी**—कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः। 'सप्तम्युपमान' इत्यादिना समासः। कुमारोऽपि रघुरपि सुरद्विपस्यरावतस्यास्फालनेन कर्कशा अंगुलयो यस्य स तस्मिन् शच्याः पत्रविशेषकैरङ्किते शचीपत्रविशेषकाङ्किते हरेरिन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान्। निष्कण्टकराज्यमाप्तस्यायं महानभिभव इति भावः ॥५५॥

**अन्वयः**—कुमारविक्रमः कुमारः, अपि सुरद्विपास्फालनकर्कशाङ्गुलौ, शचीपत्रविशेषकाङ्किते, हरेः, भुजे स्वनामचिह्नं सायकम्, निचखान।

**वाच्य०**—कुमारविक्रमेण, कुमारेण अपि स्वनामचिह्नः सायकः, निचख्ने।

**व्याख्या**—कुमारस्य = कार्तिकेयस्य, विक्रमः इव विक्रमः = पराक्रमः यस्य स तथोक्तः, कुमारः = दिलीपपुत्रः रघुरित्यर्थः। अपि द्वाभ्यां पिबतीति द्विपः = गजः, सुराणाम् = देवानाम् द्विपः इति सुरद्विपः, तस्य, आस्फालनम् = ताडनम् इति सुरद्विपास्फालनम्, तेन कर्कशाः = कठिनाः, अङ्गुलयः = करशाखाः यस्य स सुरद्विपास्फालनकर्कशाङ्गुलिः, तस्मिन् तथोक्ते, शच्याः = इन्द्राण्याः, पत्रविशेषकाणि = पर्णतिलकानि इति शचीपत्रविशेषकाणि तैः, अङ्कितः = चिह्नितः इति शचीपत्रविशेषकाङ्कितः, तस्मिन्, हरेः = इन्द्रस्य, भुजे = बाहौ, स्वस्य = निजस्य, नाम = अभिधेयम् इति स्वनाम, तत् चिह्नं = लक्षणं यस्य स स्वनामचिह्नस्तं तथोक्तम्। सायकम् = बाणम्, निचखान = निखातवान्।

**समा०**—कुमारस्य विक्रम इव विक्रमो यस्य सः कुमारविक्रमः। सुराणां द्विपः सुरद्विपः सुरद्विपस्य आस्फालनं सुरद्विपास्फालनम्, सुरद्विपास्फालनेन कर्कशा अङ्गुलयो यस्य सः सुरद्विपास्फालनकर्कशाङ्गुलिः, तस्मिन् सुरद्विपास्फालनकर्कशाङ्गुलौ। पत्रस्य विशेषकाणि पत्रविशेषकाणि, शच्याः पत्रविशेषकाणि शचीपत्रविशेषकाणि शचीपत्रविशेषकैः अङ्कितः शचीपत्रविशेषकाङ्कितः, तस्मिन् शचीपत्रविशेषकाङ्किते। स्वस्य नाम स्वनाम, स्वनाम्नः चिह्नं यस्य सः स्वनामचिह्नः, तं स्वनामचिह्नम्।

**अभि०**—कार्तिकेयसमपराक्रमेण रघुणापि इन्द्रबाहुमध्ये स्वनामाङ्कितः बाणः निचख्ने।

**हिन्दी**—कार्तिकेय के समान पराक्रमी रघु ने, ऐरावत हाथी के निरन्तर ताडन करते रहनेसे कठिन तथा इन्द्राणी की पत्र-रचनासे अङ्कित इन्द्र की भुजा में अपने नाम से अङ्कित बाण मारा ॥५५॥

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥५६॥

**सञ्जीविनी**—अन्येन मयूरपत्रिणा मयूरपत्रवता शरेण शक्रस्येन्द्रस्य महाशनिध्वजं महान्तमशनिरूपं ध्वजं जहार चिच्छेद च । स शक्रः । सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव । तस्मै रघवे भृशमत्यर्थं चुकोप । तं हन्तुमियेषेत्यर्थः । 'क्रुधद्रुहेर्ष्यासूयार्थानाम्' इत्यनेन संप्रदानाच्चतुर्थी ॥

**अन्वयः**—**अन्येन, मयूरपत्रिणा, शरेण, शक्रस्य, महाशनिध्वजम्, जहार, च, सः, सुरश्रियः, प्रसह्य, केशव्यपरोपणात्, इव, तस्मै, भृशम्, चुकोप ।**

**वाच्य०**—महाशनिध्वजः, जह्रे, तेन तस्मै, भृशम्, चुकुपे ।

**व्याख्या**—अन्येन = अपरेण, शरेण = बाणेन, शक्रस्य = इन्द्रस्य, महान् चासौ अशनिः = वज्रम्, इति महाशनिः, महाशनिरूपं ध्वजम् = वैजयन्ती, इति महाशनिध्वजम् तत्, जहार = अहरत्, च = तथा, सः = इन्द्रः, सुराणाम् = देवानां श्रीः = लक्ष्मी, इति सुरश्रीः तस्याः सुरश्रियः, प्रसह्य = हठात्, केशानां = बालानाम्, व्यपरोपणम् = छेदनम्, इति केशव्यपरोपणं तस्मात्, 'कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः, इव = यथा, तस्मै = रघवे, भृशम् = अत्यन्तम्, चुकोप = कोपं कृतवान् ।

**समा०**—मयूरस्य पत्रं मयूरपत्रम् मयूरपत्रमस्यास्तीति मयूरपत्री, तेन मयूरपत्रिणा । महांश्चासौ अशनिश्च महाशनिः महाशनिरेव ध्वजम् महाशनिध्वजम् तत् महाशनिध्वजम् । सुराणां श्रीः सुरश्रीः तस्याः सुरश्रियः । केशानां व्यपरोपणं केशव्यपरोपणम् तस्मात् केशव्यपरोपणात् ॥

**अभि०**—रघुः अपरेण बाणेन, इन्द्रस्य ध्वजं चिच्छेद । तेन चेन्द्रः तस्मै एवं चुकोप यथा तस्य देवलक्ष्म्याः केशावतारणं केनचित् कृतं भवेत् ।

**हिन्दी**—रघुने दूसरे बाण से इन्द्र की ध्वजा काट डाली, जिससे इन्द्र को इतना क्रोध हुआ कि मानो उसकी राज्यलक्ष्मी के सिर के बाल कोई जबर्दस्ती उतार रहा हो ।

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥५७॥

**सञ्जीविनी**—जयैषिणोरन्योन्यजयाकाङ्क्षिणोस्तयोरिन्द्ररघ्वोः । गरुत्मतः पक्षवन्तः । 'गरुत्पक्षच्छदाः पत्रम्' इत्यमरः । आशीविषाः । आशिषि दंष्ट्रायां विषं येषां ते आशीविषाः सर्पाः । पृषोदरादित्वात्साधुः । 'स्त्री त्वाशीर्हिताशंसाऽहिदंष्ट्रयोः' इत्यमरः । त इव भीमदर्शनाः । सपक्षाः सर्पा इव द्रष्टॄणां भयावहा इत्यर्थः । तैरधोमुखैरूर्ध्वमुखैश्च । धन्विनोरुपर्यधोदेशावस्थितत्वादिति भावः, पत्रिभिर्बाणैरुपान्तस्थितास्तटस्थाः सिद्धा देवा इन्द्रस्य सैनिकाश्च रघोर्यस्मिंस्तत्तथोक्तं तुमुलं संकुलं युद्धं बभूव ।

**अन्वयः**—**जयैषिणोः, तयोः, गरुत्मदाशीविषभीमदर्शनैः, अधोमुखैः, च, ऊर्ध्वमुखैः, पत्रिभिः उपान्तस्थितसिद्धसैनिकम्, तुमुलम्, युद्धम्, बभूव ।**

**वाच्य०**—उपान्तस्थितसिद्धसैनिकेन, तुमुलेन, युद्धेन, बभूवे ।

**व्याख्या**—जयं = विजयम् इच्छतः = अभिलषतः इति जयैषिणौ तयोः जयैषिणोः तयोः = रघ्विन्द्रयोः, गरुतः = पक्षाः सन्ति येषां ते गरुत्मन्तः, आशिषि = दंष्ट्रायां, विषम् = गरलम्, येषां ते, आशीविषाः सर्पा इत्यर्थः, गरुत्मन्तश्च ते आशीविषाः इति गरुत्मदाशीविषाः भीमम् = भयङ्करम् दर्शनम् = अवलोकनम् येषां ते भीमदर्शनाः गरुत्मदाशीविषाः इव भीमदर्शना इति तैस्तथोक्तैः अधः = नीचैः मुखम् = आननम्, येषां ते, अधोमुखाः तैः अधोमुखैः, ऊर्ध्वम् = उपरि, मुखम् = आननम् येषां ते ऊर्ध्वमुखाः तैः ऊर्ध्वमुखैः च = तथा पत्रिभिः = बाणैः अन्तस्य = अवसानस्य समीपम् = पार्श्वम् इति उपान्तम् उपान्ते स्थिताः = वर्तमानाः इति उपान्तस्थिताः तादृशाः सिद्धाः = देवयोनिविशेषाः सैनिकाः = सेनापुरुषाः यस्मिंस्तत्तथोक्तम् उपान्तस्थितसिद्धसैनिकम् तुमुलम् = भयङ्करम् युद्धम् = जन्यम् बभूव = अभूत् ।

**समा०**—जयमेषितुं शीलमनयोरिति जयैषिणौ, तयोः जयैषिणोः । गरुत एषां सन्तीति गरुत्मन्तः गरुत्मन्तश्च ते आशीविषाश्च गरुत्मदाशीविषाः गरुत्मदाशीविषा इव भीमं दर्शनं येषां ते गरुत्मदाशीविषभीमदर्शनाः, तैः गरुत्मदाशीविषभीमदर्शनैः । अधः मुखं येषां ते अधोमुखाः तैः । अधोमुखैः ऊर्ध्वं मुखं येषां ते ऊर्ध्वमुखाः तैः ऊर्ध्वमुखैः । पत्रमेषामस्तीति पत्रिणः तैः पत्रिभिः । सिद्धाश्च

सैनिकाश्च सिद्धसैनिकाः अन्तस्य समीपम् उपान्तम् उपान्ते स्थिताः उपान्तस्थिताः, उपान्तस्थिताः सिद्धसैनिकाः यस्मिन् तत् उपान्तस्थितसिद्धसैनिकम्।

अभि०——एवं रघोरिन्द्रस्य च परस्परं सैनिकेषु सिद्धेषु च पश्यत्सु घोरं युद्धं बभूव। इन्द्रस्य बाणाः अधोमुखाः रघोश्च ऊर्ध्वमुखा आसन्।

हिन्दी—इस प्रकार रघु और इन्द्र का, परस्पर जय की अभिलाषा से, सिद्धों तथा सैनिकों के देखते हुए, भयंकर युद्ध आरम्भ हुआ। दोनों के बाण ऊपर से नीचे तथा नीचे से ऊपर की ओर इस प्रकार चल रहे थे मानो उड़ने वाले साँप हों॥ ५७॥

अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः॥५८॥

सञ्जीविनी—वासवोऽतिप्रबन्धेनातिसातत्येन प्रहिताभिः प्रयुक्ताभिरस्त्रवृष्टिभिर्दुष्प्रसहस्य दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य। दुःखेनाप्यसह्यस्येत्यर्थः। तेजसः प्रतापस्याश्रयं तं रघुम्। अम्बुदोऽद्भिः स्वतश्च्युतं निर्गतं वह्निमिव। निर्वापयितुं न शशाक। रघोरपि लोकपालात्मकस्येन्द्रांशसंभवत्वादिति भाव.॥५८॥

अन्वयः——वासवः, अतिप्रबन्धप्रहितास्त्रवृष्टिभिः, दुष्प्रसहस्य, तेजसः आश्रयम्, तम्, अम्बुदः, अद्भिः, स्वतः, च्युतम्, वह्निम्, इव, निर्वापयितुम्, न, शशाक।

वाच्य०——वासवेन, अम्बुदेन, अद्भिः, स्वतः च्युतम्, वह्निम्, इव, निर्वापयितुम्, न, शेके।

व्याख्या—वासवः = इन्द्रः अस्त्राणाम् = आयुधानाम् वृष्टयः = वर्षणानि, इति अस्त्रवृष्टयः अतिशयितः प्रबन्धः अतिप्रबन्धः = अतिसातत्यम्, तेन, प्रहिताः = प्रयुक्ताः इति अतिप्रबन्धप्रहिताः तादृश्यः अस्त्रवृष्टयः इति अतिप्रबन्धप्रहितास्त्रवृष्टयः ताभिः अतिप्रबन्धप्रहितास्त्रवृष्टिभिः दुःखेन = कष्टेन प्रसह्यते = सोढुं शक्यते, इति दुष्प्रसहः तस्य दुष्प्रसहस्य, तेजसः = प्रतापस्य, आश्रयम् = स्थानम्, तम् = रघुम्, अम्बूनि = जलानि, ददाति = प्रयच्छतीति, अम्बुदः = मेघ इत्यर्थः, अद्भिः = जलैः स्वतः = स्वस्मात् च्युतम् = निर्गतम्, वह्निम् = अग्निम्, विद्युतमित्यर्थः इव = यथा, निर्वापयितुम् = शान्तं कर्तुम्, न = नैव, शशाक = समर्थोऽभूत्।

समा०——अतिप्रबन्धेन प्रहिताः अतिप्रबन्धप्रहिताः अस्त्राणां वृष्टयः अस्त्रवृष्टयः अतिप्रबन्धप्रहिताश्च ता अस्त्रवृष्टयश्च अतिप्रबन्धप्रहितास्त्रवृष्टयः ताभिः

अतिप्रबन्धप्रहितास्त्रवृष्टिभिः । दुःखेन प्रसह्यत इति दुष्प्रसहम् तस्य दुष्प्रसहस्य । अम्बूनि ददातीति अम्बुदः ।

**अभि०**—स्वस्मादप्युत्पन्नां विद्युतं यथा मेघः शान्तां कर्तुं न समर्थःतथैव स्वांशादुत्पन्नमपि (राज्ञो लोकपालांशत्वात्) बाणवर्षैः रघुं शक्रः स्वयं जेतुं न समर्थोऽभूत् ।

**हिन्दी**—जैसे कि मेघ अपने से ही उत्पन्न बिजली के तेज को वृष्टि द्वारा शान्त नहीं कर सकता, उसी प्रकार अपने ही अंश (राजा लोकपालकों का अंश होता है) से उत्पन्न रघु को इन्द्र अस्त्रों की वृष्टि से न जीत सका ॥५८॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद् विडौजसः ॥५९॥

**सञ्जीविनी**—ततो रघुर्हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम् । वेवेष्टि व्याप्नोतीति विट् व्यापकमोजो यस्य स तस्य बिडौजस इन्द्रस्य । पृषोदरादित्वात्साधुः । शरासनज्यां धनुर्मौर्वीम् । शशांकस्यार्धः खण्ड इव मुखं फलं यस्य तेन पत्रिणालुनादच्छिनत् ॥५९॥

**अन्वयः**—ततः रघुः हरिचन्दनाङ्किते, प्रकोष्ठे, प्रमथ्यमानार्णवधीरनादिनीम्, विडौजसः शरासनज्याम् शशाङ्कार्धमुखेन, पत्रिणा, अलुनात् ।

**वाच्य०**—ततः रघुणा हरिचन्दनाङ्किते, प्रकोष्ठे, प्रमथ्यमानार्णवधीरनादिनी, विडौजसः शरासनज्या, अलूयत ।

**व्याख्या**—ततः = तदनन्तरम्, रघुः = दिलीपसूनुः हरिचन्दनेन = कल्पवृक्षेण, अङ्कितः = चिह्नितः इति हरिचन्दनाङ्कितः तस्मिन् हरिचन्दनाङ्किते, प्रकोष्ठे = मणिबन्धस्थाने, प्रमथ्यते = आलोड्यते, इति प्रमथ्यमानः स चासौ अर्णवः = समुद्रः इति प्रमथ्यमानार्णवः धीरम् = गभीरम् नदितुं ध्वनितुं शीलमस्या धीरनादिनी, प्रमथ्यमानार्णव इव धीरनादिनी इति तथोक्ता ताम्, विट् = व्यापकम्, ओजः = तेजः यस्यासौ विडौजाः = इन्द्रः तस्य विडौजसः, शरः = बाणः, अस्यते = क्षिप्यते अनेन इति शरासनम् धनुरित्यर्थः तस्य ज्या = मौर्वी इति शरासनज्या, तां शरासनज्याम् शशः = मृगविशेषः, अङ्के = क्रोडे, यस्यासौ शशाङ्कः तस्यार्धः = खण्डः इति शशाङ्कार्धः स इव मुखम् = आननम्, अग्रभाग इत्यर्थः यस्यासौ

शशाङ्कार्धमुखः तेन तथोक्तेन पत्रम्=दलम् अस्यास्तीति पत्री=बाणः तेन पत्रिणा अलुनात्=चिच्छेद।

**समा०**—हरिचन्दनेन अङ्कितः हरिचन्दनाङ्कितः तस्मिन् हरिचन्दनाङ्किते। प्रमथ्यते इति प्रमथ्यमानः, प्रमथ्यमानश्चासौ अर्णवश्च प्रमथ्यमानार्णवः, धीरं नदितुं शीलमस्या इति धीरनादिनी, प्रमथ्यमानार्णववत् धीरनादिनी प्रमथ्यमानार्णवधीरनादिनी, तां प्रमथ्यमानार्णवधीरनादिनीम्। विड् व्यापकं ओजो यस्य सः विडौजाः, तस्य विडौजसः। शरासनस्य ज्या शरासनज्या, तां शरासनज्याम्। शशस्य अङ्को यस्य सः शशाङ्कः शशाङ्कस्य अर्द्धः शशाङ्कार्द्धः, शशाङ्कार्द्ध इव मुखं यस्य सः शशाङ्कार्द्धमुखः, तेन शशाङ्कार्द्धमुखेन।

**अभि०**—ततः रघुणा, इन्द्रस्य गम्भीरशब्दवती मौर्वी अर्द्धचन्द्राकृतिना बाणेन छिन्ना।

**हिन्दी**—तब रघु ने इन्द्र की कलाई पर स्थित धनुष की डोरी को जो कि मथे जाते हुए समुद्र के समान गम्भीर शब्द कर रही थी, अर्धचन्द्राकार फल वाले बाण से काट डाला ॥५९॥

स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥६०॥

**सञ्जीविनी**—विवृद्धमत्सरः प्रवृद्धवैरः स इन्द्रश्चापमुत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय वधाय। महीं धारयन्तीति महीध्राः पर्वताः। मूलविभुजादित्वात्कप्रत्ययः। तेषां पक्षव्यपरोपणे पक्षच्छेद उचितं स्फुरत्प्रभामण्डलमस्त्रं वज्रमायुधमाददे जग्राह ॥६०॥

**अन्वयः—विवृद्धमत्सरः, सः चापम्, उत्सृज्य, प्रबलस्य, विद्विषः, प्रणाशनाय महीध्रपक्षव्यपरोपणोचितम्, स्फुरत्प्रभामण्डलम्, अस्त्रम्, आददे।**

**वाच्य०**—विवृद्धमत्सरेण, तेन स्फुरत्प्रभामण्डलम्, अस्त्रम्, आददे।

**व्याख्या**—विवृद्धः=वृद्धिं गतः, मत्सरः=क्रोधः यस्यासौ विवृद्धमत्सरः, सः=इन्द्रः, चापम्=धनुः, उत्सृज्य=परित्यज्य प्रकृष्टं बलम्=शक्तिः यस्यासौ प्रबलः तस्य प्रबलस्य, विशेषेण द्वेष्टि=द्वेषं करोति इति विद्विट् तस्य विद्विषः, शत्रोरित्यर्थः प्रणाशनाय=मारणाय, महीम्=पृथ्वीं धारयन्ति=धारणं कुर्वन्ति इति महीध्राः पर्वताः इत्यर्थः तेषां पक्षाः=गरुतः इति महीध्रपक्षाः तेषां व्यपरो-

पणम् = कर्तनम् इति महीध्रपक्षव्यपरोपणम् तत्र उचितम् = अभ्यस्तम् इति महीध्रपक्षव्यपरोपणोचितम् तत्तथोक्तम् अस्त्रम् = आयुधम्, वज्रमित्यर्थः, आददे = जग्राह।

**समा०**—विवृद्धः मत्सरः यस्य सः विवृद्धमत्सरः। महीं धारयन्तीति महीध्राः महीध्राणां पक्षाः महीध्रपक्षाः महीध्रपक्षाणां व्यपरोपणं महीध्रपक्षव्यपरोपणम्, महीध्रपक्षव्यपरोपणे उचितं महीध्रपक्षव्यपरोपणोचितम्, तत् महीध्रपक्षव्यपरोपणोचितम्। प्रभायाः मण्डलं प्रभामण्डलम्, स्फुरत् प्रभामण्डलं यस्य तत् स्फुरत्प्रभामण्डलम्, तत् स्फुरत्प्रभामण्डलम्।

**अभि०**—ततः इन्द्रः रघोर्वधाय खण्डितं धनुः परित्यज्य गिरिपक्षकर्तनप्रसिद्धं स्ववज्रं गृहीतवान्।

**हिन्दी**—तब इन्द्र ने रघु का वध करने के लिये टूटा हुआ धनुष छोड़ कर पर्वतों के पर काटने में प्रसिद्ध अपना अस्त्र वज्र उठाया ॥६०॥

**रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः।**
**निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥६१॥**

**सञ्जीविनी**—रघुस्तेन वज्रेण भृशमत्यर्थं वक्षसि ताडितो हतः सन्। सैनिकानामश्रुभिः सह भूमौ पपात। तस्मिन्पतिते ते रुरुदुरित्यर्थः। निमेषमात्रात्तद्व्यथां दुःखमवधूय तिरस्कृत्य सैनिकानां हर्षेण ये निःस्वनाः क्ष्वेडास्तैः सहोत्थितश्च। तस्मिन्नुत्थिते हर्षात्सिंहनादांश्चक्रुरित्यर्थः ॥६१॥

**अन्वयः—रघुः तेन, भृशम्, वक्षसि, ताडितः, 'सन्' सैनिकाश्रुभिः सह, भूमौ, पपात, निमेषमात्रात्, तद्व्यथाम्, अवधूय, सैनिकहर्षनिःस्वनैः, सह, उत्थितः।**

**वाच्य**—रघुणा, तेन, भृशम्, ताडितेन, 'सता' पेते, उत्थितम्।

**व्याख्या**—रघुः = दिलीपसूनुः, तेन = वज्रेण, भृशम् = अत्यर्थम्, वक्षसि = उरसि, ताडितः = विद्धः 'सन्' सेनायां समवेताः सैनिकाः = सेनापुरुषाः तेषाम्, अश्रूणि = नेत्रजलानि, इति सैनिकाश्रूणि तैः सैनिकाश्रुभिः सह = सार्धम् भूमौ = पृथिव्याम्, पपात = अपतत्, निमेष एव निमेषमात्रम् = क्षणमात्रम् तस्मान्निमेषमात्रात्, तस्य = वज्रस्य, व्यथा = पीडा इति तद्व्यथा ताम् तद्व्यथाम् अवधूय = विरस्य सेनायां समवेताः सैनिकाः = सेनापुरुषाः, तेषां हर्षेण = आमोदेन, निःस्वनाः = शब्दाः इति सनिकहर्षनिःस्वनाः तैः सैविकहर्षनिस्वनैः सह = सार्धम्, उत्थितः = उत्तस्थौ।

**समा०**—सैनिकानामश्रूणि सैनिकाश्रूणि, तैः सैनिकाश्रुभिः। केवलं निमेषः निमेषमात्रम् तस्मात् निमेषमात्रात्। तस्य व्यथा तद्व्यथा, तां तद्व्यथाम्। हर्षेण निःस्वनाः हर्षनिःस्वनाः सैनिकानां हर्षनिःस्वनाः सैनिकहर्षनिःस्वनाः, तैः सैनिकहर्षनिःस्वनैः।

**अभि०**—यथैव वज्रेण ताडितो रघुः पृथिव्यां पपात तथैव सैनिकानामपि दुःखेनाश्रूणि भूमौ पतितानि। क्षणमात्रेणैव च यथा तत्पीडां तिरस्कृत्य रघुरुत्थितस्तथैव सैनिकानामपि हर्षेण जयशब्दा बभूवुः।

**हिन्दी**—जैसे ही रघु वज्र की चोट से पृथिवी पर गिरा, सैनिकों के भी आँसू गिरे, एवं ज्योंही क्षणमात्र में वज्र की पीडा भूल कर रघु पृथ्वी से उठा, सैनिकों में हर्ष से जयध्वनि गूंज उठी ॥६१॥

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥६२॥

**सञ्जीविनी**—तथापि वज्राघातेऽपि शस्त्राणामायुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतोऽस्य रघोर्वीर्यातिशयेन। वृत्रं हतवानिति वृत्रहा। 'ब्रह्मभ्रूणवृत्रेषु क्विप्'। तुतोष स्वयं वीर एव वीरं जानातीति भावः। कथं शत्रोः संतोषोऽत आह—गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदमङ्घ्रिर्निधीयते। गुणैः सर्वत्र संक्रम्यत इत्यर्थः। गुणाः शत्रूनप्यावर्जयन्तीति भावः॥

**अन्वयः**—**तथापि शस्त्रव्यवहारनिष्ठुरे, विपक्षभावे, चिरम्, तस्थुषः, अस्य, वीर्यातिशयेन, वृत्रहा तुतोष, हि, सर्वत्र, गुणैः, पदम्, निधीयते।**

**वाच्य०**—वृत्रघ्ना तुतुषे, हि गुणाः सर्वत्र पदम् निदधति।

**व्याख्या**—तथापि = वज्रप्रहारेऽपि, शस्यन्ते = हन्यन्ते शत्रवः एभिः इति शस्त्राणि तेषां व्यवहारः प्रयोगः इति शस्त्रव्यवहारः तेन निष्ठुरः = क्रूर इति शस्त्रव्यवहारनिष्ठुरः तस्मिंस्तथोक्ते, विरुद्धः पक्षो यस्यासौ विपक्षः तस्य भावः = शत्रुता तस्मिन् विपक्षभावे, चिरम् = बहुकालम्, तस्थुषः = स्थितवतः, अस्य = एतस्य, रघोः, वीर्यस्य = तेजसः, अतिशयः = आधिक्यम् इति वीर्यातिशयः तेन वीर्यातिशयेन वृत्रं = तन्नामानमसुरम्, हतवान् = व्यापादितवान्, स वृत्रहा = इन्द्रः, इत्यर्थः, तुतोष = तुष्टिं लेभे, हि = यतः, सर्वत्र = शत्रुमित्रोदासीनेषु, गुणैः शौर्यादिभिः, पदम् = चरणः, निधीयते = स्थाप्यते।

**समा०**—शस्त्राणां व्यवहारः शस्त्रव्यवहारः शस्त्रव्यवहारेण निष्ठुरः शस्त्रव्यवहारनिष्ठुरः तस्मिन् शस्त्रव्यवहारनिष्ठुरे। विपक्षस्य भावः विपक्षभावः तस्मिन् विपक्षभावे। तस्थौ इति तस्थिवान् तस्य तस्थुषः। वीर्यस्य अतिशयः वीर्यातिशयः तेन वीर्यातिशयेन।

**अभि०**—शस्त्रव्यवहारेण शत्रुत्वं प्रकाशयतोऽपि रघोः पराक्रमेणेन्द्रः प्रसन्नो बभूव। यतः शौर्यादयो गुणाः शत्रूनपि प्रसन्नान् कुर्वन्ति।

**हिन्दी**—शस्त्र प्रयोग के कारण क्रूर शत्रुता में देर तक टिकनेवाले रघु के अतिशय पराक्रम से इन्द्र प्रसन्न हुए, क्योंकि गुणों का आदर शत्रु भी करते हैं।।

असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम्।
अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥६३॥

**सञ्जीविनी**—सारवत्तया द्रिष्वप्यसङ्गमप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न विसोढम् नासह्यत। अतो मां प्रीतं सन्तुष्टमवेहि। तुरंगमादृते तुरंगं वर्जयित्वा। "अन्यारादितरर्ते" इति पञ्चमी। किमिच्छसीति स्फुट वासव आह। तवेयता पराक्रमेण प्रसन्नस्य मे तुरंगमादन्यददेयं नास्तीति भावः ॥ ६३ ॥

**अन्वयः**—**सारवत्तया, अद्रिषु, अपि, असङ्गम्, मे, आयुधम्, त्वदन्येन, न, विसोढम्, अतः, माम्, प्रीतम्, अवेहि, तुरङ्गमात्, ऋते, किम्, इच्छसि, इति, स्फुटम्, वासवः, आह।**

**वाच्य०**—त्वदन्यः न विसोढवान्। अहम् प्रीतः अवेयै। किम् इष्यते इति वासवेन औच्यत।

**व्याख्या**—सारः=बलम् अस्त्यस्मिन्निति सारवत् तस्य भावः सारवत्ता तया सारवत्तया अद्रिषु=पर्वतेषु, अपि, असङ्गम्=प्रतिबन्धरहितम्, मे=मम, इन्द्रस्य, आयुधम्=शस्त्रम्, वज्ररूपम्, त्वत्तः=त्वत्सकाशात् अन्यः=अपरः, इति त्वदन्यः, तेन त्वदन्येन, न=नहि, विसोढम्=सहनं कृतम्, अतः, माम्=इन्द्रम्, प्रसन्नम्=हृष्टम्, अवेहि=जानीहि, तुरङ्गमात्=अश्वात्, ऋते=विना, किम्=वस्तु, इच्छसि=अभिलषसि, इति=एवम्, स्फुटम्=स्पष्टम्, वासवः=इन्द्रः, आह=अकथयत्।

**समा०**—सारः अस्यास्तीति सारवत्, सारवतः भावः सारवत्ता तया सारवत्तया। न विद्यते सङ्गो यस्य तत् असङ्गम्। त्वत् (पं०ए०) अन्यः त्वदन्यः तेन त्वदन्येन।

**अभि०**—अतीव बलवन्ममेदं वज्रं त्वां विहाय न केनचित्सोढम्, अतोऽहं त्वयि प्रसन्नः, तुरङ्गमं विहाय यद्वाञ्छसि तद्ददामीति रघुमिन्द्र उवाच ।

**हिन्दी**—पर्वतों के छेदन में भी जिसकी गति कुण्ठित न हो सकी ऐसे इस मेरे वज्र को तुम्हें छोड़ कर आज तक कोई भी सहन नहीं कर सका है। मैं तुमपर प्रसन्न हूँ । घोड़े को छोड़कर चाहे कुछ भी माँग लो, इस प्रकार इन्द्र ने रघु से स्पष्ट शब्दों में कहा ।।६३।।

ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुंखद्युतिरञ्जिताङ्गुलिम् ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदं प्रत्यवदत्सुरेश्वरम् ।।६४।।

**सञ्जीविनी**–तत इन्द्रवचनोत्तरं निषङ्गात्तूणीरादसमग्रं यथा तथोद्धृतं सुवर्णपुंखद्युतिभी रञ्जिता अंगुलयो येन तमिषुं प्रतिसंहरन्निवर्तयन् । न प्रहरन्तं प्रहरेदिति निषेधादिति भावः। प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्', इत्यनेन मुमागमः । नरेन्द्रसूनू रघुः सुरेश्वरमिन्द्रं प्रत्यवदत् प्रत्युक्तवान् । न तु प्राहरदिति भावः ।। ६४ ।।

**अन्वयः**—ततः, निषङ्गात्, असमग्रम्, 'यथा स्यात्तथा' उद्धृतम्, सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्, इषुम् प्रतिसंहरन्, प्रियंवदः, नरेन्द्रसूनुः, सुरेश्वरम्, प्रति, अवदत् ।

**वाच्य०**—प्रतिसंहरता प्रियंवदेन नरेन्द्रसूनुना सुरेश्वरः प्रत्यौच्यत ।

**व्याख्या**—ततः = तदनन्तरम्, निषङ्गात् = तूणीरात्, न समग्रमित्यसमग्रम् = असम्पूर्णम्, 'यथा स्यात्तथा' उद्धृतम् = निष्कासितम्, सुवर्णस्य = कनकस्य, पुङ्खः = बाणमूलभागः इति सुवर्णपुङ्खः, तस्य द्युतयः = कान्तयः, इति सुवर्णपुङ्खद्युतयः, ताभिः, रञ्जिताः = रञ्जनत्वमापादिताः अङ्गुलयः = करशाखाः येन सः सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिः तं तथोक्तम् इषुम् = बाणम्, प्रतिसंहरन् = निवर्त्तयन्, प्रियम् = इष्टम्, वदति = कथयति, इति प्रियंवदः, नराणां = मनुष्याणामिन्द्रः = स्वामी, इति नरेन्द्रः = राजा दिलीप इत्यर्थः, तस्य सूनुः = पुत्रः रघुः सुराणाम् = देवानाम्, ईश्वरः = स्वामी, सुरेश्वरः = इन्द्रः तं सुरेश्वरम्, प्रत्यवदत् = जगाद ।

**समा०**—न समग्रम् असमग्रम् 'क्रियाविशेषणम्' । सुवर्णस्य पुङ्खः सुवर्णपुङ्खः सुवर्णपुङ्खस्य द्युतयः सुवर्णपुङ्खद्युतयः सुवर्णपुङ्खद्युतिभिः रञ्जिता अङ्गुलयो येन

सः सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिः तं सुवर्णपुङ्खद्युतिरञ्जताङ्गुलिम् । नराणामिन्द्रः नरेन्द्रः नरेन्द्रस्य सूनुः नरेन्द्रसूनुः । सुराणामीश्वरः सुरेश्वरः तं सुरेश्वरम् ।

**अभि०**—स्वतूणीरादर्धं निष्कासितं बाणं पुनस्तूणीरे एव कुर्वन् रघुः मधुरेण-स्वरेण इन्द्रं प्रत्युवाच ।

**हिन्दी**—अपने तरकस से आधे निकाले बाण को फिर वापस तरकस में करते हुये रघु ने मधुर स्वर से कहा ।।६४।।

**अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।**
**अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ।।६५।।**

**सञ्जीविनी**—हे प्रभो इन्द्र ! अश्वममोच्यं मन्यसे यदि ततस्तर्ह्यजस्रदीक्षायां प्रयतः स मद्गुरुर्मम पिता विधिनैव कर्मणि समाप्ते सति क्रतोर्यत्फलं तेन फलेनाशेषेण कृत्स्नेन युज्यतां युक्तोऽस्तु । अश्वमेधफललाभे किमश्वेनेति भावः ।।६५।।

**अन्वयः**—**हे प्रभो, यदि, अश्वम्, अमोच्यम्, मन्यसे, ततः अजस्रदीक्षाप्रयतः सः मद्गुरुः विधिना, एव, कर्मणि, समाप्ते, 'सति', क्रतोः, अशेषेण, फलेन, युज्यताम् ।**

**वाच्य०**—यदि, त्वया, अश्वः, अमोच्यः, मन्यते, ततः अजस्रदीक्षाप्रयतेन, तेन, मद्गुरुणा, क्रतोः अशेषेण, फलेन, युज्यताम् ।

**व्याख्या**—प्रभवति = समर्थो भवति, इति प्रभुः, संबुद्धौ हे प्रभो, यदि = चेत्, अश्वम् = तुरङ्गमम्, मोक्तुं = परित्यक्तुं योग्यः मोच्यः न मोच्यः अमोच्यः तम्, अमोच्यम्, मन्यसे = जानासि, ततः = तदा, अजस्रं = निरन्तरं, दीक्षा = यज्ञदीक्षा तत्र प्रयतः तत्परः इति अजस्रदीक्षाप्रयतः सः = प्रसिद्धः, मम = रघोः, गुरुः = पिता इति मद्गुरुः, 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः, विधिना = शास्त्रानुकूलविधानेन एव कर्मणि = कार्ये, समाप्ते = अवसिते, 'सति', क्रतोः = यज्ञस्य अशेषेण = सम्पूर्णेन, फलेन = लाभेन, युज्यताम् = युक्तो भवतु ।

**समा०**—मोक्तुं योग्यः मोच्यः न मोच्यः अमोच्यः तम् अमोच्यम् । अजस्रं दीक्षा अजस्रदीक्षा, अजस्रदीक्षायां प्रयतः अजस्रदीक्षाप्रयतः । मम गुरुः मद्गुरुः । न विद्यते शेषो यस्य तत् अशेषम् तेन अशेषेण ।

**अभि०**—हे इन्द्र, यदि त्वमश्वस्य मोचनं न कर्तुमिच्छसि तर्हि मम पिता, अश्वं विनैव अश्वमेधयज्ञस्य सकलं फलं यथा प्राप्नोति तथा कुरु ।

**हिन्दी**—रघु ने कहा कि हे इन्द्र, यदि आप घोड़े को छोड़ना उचित नहीं समझते तो मेरे पिता, प्रारम्भ किये हुए, अश्वमेध यज्ञ के विधिवत् समाप्त होने पर जो फल प्राप्त होता है, उस सम्पूर्ण फल को प्राप्त करें ॥६५॥

यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशांपतिः शृणोति लोकेश ! तथा विधीयताम्॥६६॥

**सञ्जीविनी**—सदोगतः सदोगृहं गतस्त्रिलोचनस्येश्वरस्यैकांशतयाष्टानामन्यतममूर्तित्वात् । दुरासदोऽस्मादृशैर्दुष्प्राप्यो विशांपतिर्यथेमं वृत्तान्तं तव संदेशहराद्वार्ताहरादेव शृणोति च । हे लोकेशेन्द्र तथा विधीयताम् ॥६६॥

**अन्वयः**—सदोगतः, त्रिलोचनैकांशतया दुरासदः, विशांपतिः, यथा, इमम्, वृत्तान्तम्, तव, सन्देशहरात् एव, शृणोति, च, 'हे' लोकेश, तथा, विधीयताम् ।

**वाच्य०**—सदोगतेन, दुरासदेन, विशां पत्या, यथा, अयं, वृत्तान्तः, श्रूयते, तथा, त्वं, विधेहि ।

**व्याख्या**—सदः = सभाम् गतः = प्राप्तः इति सदोगतः, त्रीणि = त्रिसंख्यकानि लोचनानि नेत्राणि यस्य सः त्रिलोचनः शिव इत्यर्थः, एकः = केवलः चासौ, अंशः = भागः इति एकांशः, त्रिलोचनस्यैकांशः इति त्रिलोचनैकांशः तस्य भावः त्रिलोचनैकांशता तया तथोक्तया, दुःखेन = कष्टेन, आसादयितुम् = लब्धुं योग्यः इति दुरासदः, विशांपतिः = नरेन्द्रः यथा = येन प्रकारेण, इमम् = एतम्, वृत्तान्तम् = वार्ताम्, तव = भवतः, सन्देशम् = वाचिकं सन्देशवचनमिति यावत्, हरति = नयति, इति सन्देशहरः 'सन्देशवाग्वाचिकं स्याद्' इत्यमरः, तस्मात् सन्देशहरात् एव इति अवधारणेऽर्थेऽव्ययम् च लोकानां = जनानाम् ईशः = स्वामी तत्सम्बुद्धौ, तथा = तेनैव प्रकारेण, विधीयताम् = क्रियताम् ।

**समा०**—सदः (द्वितीया) गतः सदोगतः । त्रीणि लोचनानि यस्य सः त्रिलोचनः एकश्चासौ अंशश्च एकांशः त्रिलोचनस्यैकांशः त्रिलोचनैकांशः त्रिलोचनैकांशस्य भावः त्रिलोचनैकांशता तया त्रिलोचनैकांशतया । दुःखेनासाद्यते इति दुरासदः । हरतीति हरः सन्देशस्य हरः सन्देशहरः तस्मात् सन्देशहरात् । लोकानामीशः लोकेशः तत्सम्बुद्धौ हे लोकेश ।

**अभि०**—किंच, हे इन्द्र ! मम पिता यज्ञमण्डपे स्थित आस्ते, स चावयोर्वृत्तं यथा तव सन्देशहरादेव शृणुयात्, तथा त्वया विधेयम् ।

**हिन्दी**—और हे इन्द्र शिवांश होने के कारण दुरामद मेरे पिता इस समय यज्ञ मण्डप में स्थित हैं। वे हमारे इस वृत्तान्त को आपके दूत के द्वारा ही जिस प्रकार सुन सकें, ऐसा प्रबन्ध करें ॥६६॥

**तथेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्ययौ।**
**नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥६७॥**

**सञ्जीविनी**—मातलिसारथिरिन्द्रो रघोः सम्बन्धिनं कामं मनोरथं तथेति तथास्त्विति प्रतिशुश्रुवान्। 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः। यथागतं ययौ। सुदक्षिणासूनू रघुरपि नातिप्रमना विजयलाभेऽप्यश्वनाशान्नातीव तुष्टः सन्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः नृपस्य सदोगृहं प्रति न्यवर्तत ॥६७॥

**अन्वयः**—मातलिसारथिः, रघोः कामम्, तथा इति, प्रतिशुश्रुवान् यथाऽऽगतम्, ययौ, सुदक्षिणासूनुः अपि नातिप्रमनाः 'सन्' नृपस्य, सदोगृहम्, न्यवर्तत।

**वाच्य०**—मातलिसारथिना, रघोः कामः, तथा इति, प्रतिशुश्रुवम्, यथाऽऽगतम् यये, सुदक्षिणासूनुना, अपि नातिप्रमनसा नृपस्य, सदोगृहम् न्यवृत्यत।

**व्याख्या**—मातलिः = तन्नामकः, सारथिः = सूतः यस्यासौ मातलिसारथिः, इन्द्रः इत्यर्थः, रघोः = दिलीपसूनोः, कामम् = मनोरथम्, तथा = तथास्तु इति = एवम्, प्रतिशुश्रुवान् = प्रतिज्ञातवान् येनायातस्तेनैव मार्गेण, ययौ = जगाम, सुदक्षिणायाः = दिलीपपत्न्याः, सूनुः = पुत्रः इति सुदक्षिणासूनुः, अपि, प्रहृष्टम् = अति प्रसन्नम्, मनः = चित्तम् यस्यासौ प्रमनाः, अत्यन्तम् = अधिकम् प्रमनाः इति अतिप्रमनाः, न अतिप्रमनाः इति नातिप्रमनाः सन्, नॄन् = मनुष्यान् पाति = रक्षति इति नृपः राजा तस्य दिलीपस्येत्यर्थः, सदसः = सभायाः, गृहम् = भवनम्, न्यवर्तत = निवृत्तोऽभूत्।

**समा०**—मातलिः सारथिर्यस्य सः मातलिसारथिः। प्रतिशुश्राव इति प्रतिशुश्रुवान्। आगतमनतिक्रम्य यथागतम्। सुदक्षिणायाः सूनुः सुदक्षिणासूनुः। प्रहृष्टं मनः यस्य सः प्रमनाः, न अत्यन्तं प्रमनाः नातिप्रमनाः। सदसो गृहं सदोगृहम्, तत् सदोगृहम्।

**अभि०**—इन्द्रः, रघोः प्रस्तावं तथैवास्तु, इति स्वीकृत्य स्वीयसारथिना मातलिना सह येन मार्गेणायात आसीत्तेनैव स्वपुरीं प्रति निवृत्तः। रघुरपि विजयलाभेऽप्यश्वालाभान्नाति प्रहृष्टो दिलीपसभाभवनं प्रत्याजगाम।

**हिन्दी**—इन्द्र ने रघु की प्रार्थना स्वीकार की और अपने सारथि मातलि के साथ जिस मार्ग से आया था उसी मार्ग से अपनी नगरी की ओर प्रस्थान किया इधर रघु भी विजयी होने पर भी घोड़ा प्राप्त न होने के कारण विशेष प्रसन्न न होते हुए दिलीप के सभा-भवन की ओर लौटे ।।६७।।

तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥६८॥

**सञ्जीविनी**—हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधितो ज्ञापितः । वृत्तान्तमिति शेषः । प्रजेश्वरो दिलीपो हर्षजडेन हर्षशिशरेण पाणिना कुलिशव्रणाङ्कितम् । तस्य रघोरिदं तदीयम् । अङ्गं शरीरं परामृशंस्तं रघुमभ्यनन्दत् ।६८।

**अन्वयः**—हरेः, शासनहारिणा, प्रथमम्, प्रबोधितः, प्रजेश्वरः, हर्षजडेन, पाणिना, कुलिशव्रणाङ्कितम् तदीयम्, अङ्गम् परामृशन् तम्, अभ्यनन्दत् ।

**वाच्य०**—प्रबोधितेन, प्रजेश्वरेण, परामृशता, सः, अभ्यनन्द्यत ।

**व्याख्या**—हरेः = इन्द्रस्य, शासनम् = आज्ञाम्, हरति = नयति तच्छीलः शासनहारी, दूत इत्यर्थः तेन शासनहारिणा, प्रथमम् = पूर्वमेव, प्रबोधितः = वृत्तान्तं विज्ञापितः, प्रकर्षेण जायन्त इति प्रजाः = लोकाः, तेषाम्, ईश्वरः = स्वामी इति प्रजेश्वरः, राजा दिलीप इत्यर्थः, हर्षेण = आनन्देन, जडः = शिथिलः इति हर्षजडः तेन हर्षजडेन, पाणिना = करेण, कुलिशस्य = वज्रस्य, 'ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरः, व्रणाः = ईर्माणि, 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः, इति कुलिशव्रणाः, तैः, अङ्कितम् = चिह्नितम् इति कुलिशव्रणाङ्कितम् तत्तथोक्तम्, तस्य = रघोः, इदम् = सम्बन्धि इति तदीयम् तत्, अङ्गम् = शरीरम्, परामृशन् = स्पृशन्, तम् = रघुम्, अभ्यनन्दत् = अभिनन्दितवान् ।

**समा०**—शासनं हरतीति शासनहारी तेन शासनहारिणा । प्रजानामीश्वरः प्रजेश्वरः । हर्षेण जडः हर्षजडः, तेन हर्षजडेन । कुलिशस्य व्रणः कुलिशव्रणः कुलिशव्रणेन अङ्कितं कुलिशव्रणाङ्कितम्, तत् कुलिशव्रणाङ्कितम् ।

**अभि०**—रघुशक्रवृत्तान्तो दिलीपेन दूतमुखात्पूर्वमेव ज्ञातः, अतः गृहागतं रघुं हर्षशिथिलेन पाणिना परामृशता तेन परा तुष्टिर्लब्धा ।

**हिन्दी**—रघु और इन्द्र के वृत्तान्त को राजा दिलीप दूत के मुख से पहले ही

चुक चुके थे, अतः रघु के आने पर उसके वज्र के घाव से चिह्नित शरीर पर हर्ष से शिथिल हाथ फेरते हुए उन्होंने उसका अभिनन्दन किया ॥६८॥

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ ६९ ॥

**सञ्जीविनी**—महनीयशासनः पूजनीयाज्ञः क्षितीश इत्यनेन प्रकारेण । 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इत्यमरः । महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिमेकोनशतमायुषः क्षये सति दिवं स्वर्गं समारुरुक्षुरारोढुमिच्छुः सोपानानां परम्परां पंक्तिमिव ततान ॥६९॥

**अन्वयः—महनीयशासनः, क्षितीशः, इति, महाक्रतूनाम्, नवाधिकाम्, नवतिम्, आयुषः, क्षये, 'सति' दिवम्, समारुरुक्षुः, सोपानपरम्पराम्, इव, ततान ।**

**वाच्य०**—महनीयशासनेन, क्षितीशेन इति महाक्रतूनाम् नवाधिका नवतिः आयुषः क्षये समारुरुक्षुणा सोपानपरम्परेव तेने ।

**व्याख्या**—महनीयम् = पूजनीयम्, शासनम् = आज्ञा यस्य सः महनीयशासनः, क्षितेः = भूमेः, ईशः = स्वामी इति क्षितीशः राजा दिलीप इत्यर्थः, इति = इत्थम्, महान्तः = बृहन्तश्च, ते क्रतवः = यज्ञाः इति महाक्रतवः तेषाम् महाक्रतूनाम् अश्वमेधयज्ञानामित्यर्थः, नवभिः = नवसंख्याभिः, अधिका = विशेषा इति नवाधिका नवोत्तरा इत्यर्थः, ताम् नवाधिकाम्, नवतिम् = नवतिसंख्याम् एकोनशतसंख्यामिति यावत्, आयुषः = जीवितकालस्य, क्षये = नाशे, 'सति' दिवम् = स्वर्गम्, सम्यगारोढुम् = आरोहणं कर्तुम् इच्छति इति समारुरुक्षति समारुरुक्षतीति समारुरुक्षुः समारोढुमिच्छुरित्यर्थः, सोपानानाम् = आरोहणानाम्, परम्परा = श्रेणी इति सोपानपरम्परा ताम् इव ततान = अतनोत् ।

**समा०**—महनीयं शासनं यस्य सः महनीयशासनः । क्षितेः ईशः क्षितीशः । महान्तश्च ते क्रतवश्च महाक्रतवः तेषां महाक्रतूनाम् । नवभिरधिका नवाधिका तां नवाधिकाम् । सोपानानां परम्परा सोपानपरम्परा तां सोपानपरम्पराम् ॥

**अभि०**—एवं नृपो दिलीपः एकोनशतसंख्यकानश्वमेधयज्ञाञ्जीवनकालान्ते स्वर्गं समारोढुमिच्छुः सोपानश्रेणितुल्यानिव सम्पादितवान् ।

हिन्दी—इस प्रकार दिलीप ने निन्यानवे अश्वमेधयज्ञ, स्वजीवनकाल के पश्चात् स्वर्ग में जाने के लिये सीढ़ियों की पंक्ति के समान यथाविधि पूर्ण किये ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

सञ्जीविनी—अथ विषयेभ्यो व्यावृत्तात्मा निवृत्तचित्तः स दिलीपो यथाविधि यथाशास्त्रं यूने तरुणाय यौवराज्येस्थिताय सूनवे रघवे नृपतिककुदं राजचिह्नम् 'ककुद्वत्ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि' इति विश्वः। सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोश्छायां शिश्रिये श्रितवान् । वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः। तथाहि । गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् । इदं वनगमनं कुलव्रतम् । देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः। तथा च याज्ञवल्क्यः—'सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥' इति। हरिणीवृत्तमेतत् । तदुक्तम्—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति ।।७०॥

अन्वयः—अथ, विषयव्यावृत्तात्मा, सः, यथाविधि, यूने, सूनवे, नृपतिककुदम्, सितातपवारणम्, दत्त्वा, तया, देव्या, सह, मुनिवनतरुच्छायाम्, शिश्रिये, हि, गलितवयसाम्, इक्ष्वाकूणाम् इदम्, कुलव्रतम्, 'अस्ति' ।

वाच्य०—विषयव्यावृत्तात्मना तेन मुनिववतरुच्छाया शिश्रिये अनेव कुलव्रतेन भूयते ।

व्याख्या—अथ = अनन्तरम्, विषयेभ्यः = इन्द्रियग्राह्यपदार्थेभ्यः, व्यावृत्तः = निवृत्तः, आत्मा = चित्तम् यस्य सः विषयव्यावृत्तात्मा, सः = राजा दिलीपः, विधिम् = विधानम् अनतिक्रम्य यथाविधि यथाशास्त्रमित्यर्थः, यूने = युवकाय, सूनवे = पुत्राय, नृपतेः = राज्ञः, ककुदम् = चिह्नम्, आतपस्य = घर्मस्य, वारणम् = निवारकम्, इति आतपवारणम्, सितम् = धवलम्, यत् आतपवारणम् इति सितातपवारणम् तत्, दत्त्वा = वितीर्य, तया = प्रसिद्धया देव्या = राजमहिष्या सुदक्षिणया, सह = सार्धम्, मुनीनाम् = ऋषीणाम्, वनम् = काननम् इति मुनि-

वनम् मुनिवनस्य तरवः = वृक्षाः इति मुनिवनतरवः तेषां छाया इति मुनिवनतरुच्छाया तां तथोक्ताम् शिश्रिये = सिषेवे, हि = यतः, गलितम् = नष्टम्, वयः = अवस्था येषां ते गलितवयसः तेषाम् गलितवयसाम् जीर्णावस्थानाम् इक्ष्वाकूणाम् = इक्ष्वाकुवंशोद्भवानां राज्ञाम्, इदम् = एतत्, कुलस्य = वंशस्य, व्रतम् = नियमः, अस्तीति शेषः ।

**समा०**—विषयेभ्यो व्यावृत्त आत्मा यस्य सः विषयव्यावृत्तात्मा । विधिमनक्रम्येति यथाविधि । नृणां पतिः नृपतिः नृपतेः ककुदं नृपतिककुदम्, तत् नृपतिककुदम् । आतपस्य वारणम् आतपवारणम् सितञ्च तत् आतपवारणञ्च सितातपवारणम्, तत् सितातपवारणम । मुनीनां वनं मुनिवनं मुनिवनस्य तरुः मुनिवनतरुः मुनिवनतरोः छाया मुनिवनतरुच्छाया तां मुनिवनतरुच्छायाम् । गलितं वयः येषां ते गलितवयसः, तेषां गलितवयसाम् । इक्ष्वाकोः गोत्रापत्यानि इक्ष्वाकवः तेषामिक्ष्वाकूणाम् । कुलस्य व्रतं कुलव्रतम् ।

**अभि०**—यदा राजा दिलीपो वृद्धो जातस्तदा तरुणाय स्वपुत्राय रघवे राज्यं दत्त्वा स्वमहिष्या सुदक्षिणया सह वानप्रस्थाश्रमधर्मेण तपसे वनगमनमकरोत् । यत इदं कुलव्रतमिक्ष्वाकूणामासीत् ।

**हिन्दी**—जब कि राजा दिलीप बूढ़े हुए तो अपने तरुण पुत्र रघु को राज्य देकर अपनी रानी सुदक्षिणा के साथ वानप्रस्थ धर्म के द्वारा तपस्या के लिये वन में चले गये, क्योंकि इक्ष्वाकुकुल के राजाओं का यही कुलनियम था ॥७०॥

इति श्रीशांकरिधारादत्तशास्त्रिमिश्रविरचितया छात्रोपयोगिनी-
व्याख्यया समलङ्कृते रघुवंशे महाकाव्ये रघुराज्याभि-
षेको नाम तृतीयः सर्गः ॥३॥

# चतुर्थ सर्ग की संक्षिप्त कथा

अपने पिताके दिये हुए राज्यको प्राप्त करके, महाराज रघु बड़े ही तेजस्वी हो गये। इससे जो राजा रघु के पराक्रम को देख कर ईर्ष्या करते थे, अब तो उनके हृदय में आग धधक उठी समस्त प्रजा ने रघु का अभिनन्दन किया। इस समय नीति विशारद अमात्यों ने रघु के सामने धर्मपक्ष तथा अधर्मपक्ष दोनों ही रखे, किन्तु रघु ने सद्धर्म पक्ष को ही स्वीकार किया। अतः रघु ने न्याय से प्रजा, तथा पराक्रम से शत्रुओं को वश में कर लिया। इधर शरद् ऋतु भी मानो रघु को विजय यात्रा के लिये प्रेरित करती हुई आ गई और रघु ने विधिपूर्वक नीराजना नामक शांति कर्म करके तथा राजधानी की रक्षा का प्रबंध करके, दिग्विजय के लिये प्रस्थान कर दिया। इन्द्र के तुल्य पराक्रमी रघु पहले पूर्व दिशा की ओर चले। रघु की सेना रथ तथा घोड़ों की टापों से उड़ी धूल से तथा मेघों के समान हाथियों से आकाश को पृथिवी तल और पृथिवी को आकाश-सा बनाती हुई चल रही थी। आगे आगे रघु का प्रताप और प्रताप के पीछे शब्द ( होहल्ला ) इसके पीछे धूलि, और सबसे पीछे सेना, इस प्रकार मानों चतुर्व्यूह बनाकर सेना जा रही थी। रघु ने अपनी शक्ति से मरुस्थल को जलवाला प्रदेश, और नदियों को पुल बना कर सुगम्य, तथा घने जंगलों को काट कर साफ कर दिया था। रघु जिस राजा को जीत लेते थे उसे पुनः वहीं का राजा बना देते थे। इस प्रकार उनका मार्ग निष्कण्टक हो रहा था।

इस प्रकार पूर्वी राजाओं को जीतते जीतते रघु समुद्रतीर पर पहुँचे वहाँ सुह्म देश के राजा बिना लड़ाई के ही रघु के आधीन हो गये। और वहाँ से आगे चलकर बंगाली राजाओं को जीतकर गंगासागर के द्वीपों में अपने जय-स्तम्भ गाड़ दिये।

फिर वहाँ से हाथियों का पुल बनाकर कपिशा नदी को पार कर, उत्कल प्रदेश में पहुँचे और उत्कलों के बतायें मार्ग से कलिंग देश में पहुँचे। कलिंग के राजा को पराजित करके महेन्द्र पर्वत पर अपना दुःसह प्रताप स्थापित करके,

वहाँ नारियल का आसव पीकर सैनिकों ने विश्राम किया। पश्चात् वहाँ से समुद्र के किनारे २ दक्षिण की ओर चले। कावेरी को पारकर मलयागिरि की तराई में होकर ताम्रपर्णी नदी तथा सागर के संगम पर पाण्डयवंश के राजा को परास्त किया; और पाण्डय राजा ने प्रणाम करके रघु को मोतियों का हार भेंट में दिया। वहाँ से चल कर केरल को जीतकर पश्चिम के राजाओं को जीता, फिर स्थल मार्ग से पारस में गये और पाश्चात्य यवनों से खूब लड़ाई हुई। जब यवनों को परास्त कर चुके तो वहाँ से उत्तर में गये।

हूण तथा कम्बोजो को जीतते हुए, हिमालय में पहुँचे। वहाँ पहाड़ी गणों से घोर युद्ध करके उन्हें परास्त किया। फिर कामरूप देश में आकर वहाँ के राजा से हाथियों को भेंट में लेकर अयोध्या में लौट आये और सर्वस्व दक्षिणा जिसमें दे दी जाय ऐसा विश्वजित् नामक यज्ञ किया। यज्ञ के अन्त में प्रचुर भेंट पूजा देकर तब राजाओं को अपनी राजधानियों में जाने की आज्ञा दे दी।

———

# श्रीरघुवंश-महाकाव्यम्

## चतुर्थः सर्गः

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

**सञ्जीविनी**—स रघुर्गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म प्रजापरिपालनात्मकम् । पुरोहितादित्वाद्यक् । प्रतिपद्य प्राप्य । दिनान्ते सायंकाले सवित्रा सूर्येण निहितं तेजः प्रतिपद्य हुताशनोऽग्निरिव । अधिकं बभौ । 'सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । अग्नि वा आदित्यः सायं प्रविशति' इत्यादिश्रुतिः प्रमाणम् ॥ १ ॥

**अन्वयः**—सः, गुरुणा, दत्तम्, राज्यम्, प्रतिपद्य, दिनान्ते, सवित्रा, निहितम्, तेजः, 'प्रतिपद्य' हुताशनः, इव, अधिकम्, बभौ ।

**वाच्य०**—तेन हुताशनेन इव अधिकं बभे ।

**व्याख्या**—सः = रघुः, गुरुणा = पित्रा दिलीपेन, दत्तम् = विसृष्टम्, राज्यम् = राष्ट्रमण्डलम्, प्रतिपद्य = प्राप्य, दिनस्य = दिवसस्यान्तस्तस्मिन् दिनान्ते = सायङ्काले, सवित्रा = सूर्येण, निहितं = स्थापितं, तेजः = दीप्तिं, 'प्रतिपद्य' हुताशनः = हुतं दत्तमश्नातीति सः, वह्निः, इव = यथा, अधिकम् अत्यन्तम्, बभौ = शुशुभे ।

**समा०**—राज्ञः कर्म भावो वा राज्यम्, तत् राज्यम् । दिनस्य अन्तः दिनान्तः, तस्मिन् दिनान्ते । हुतमशनं यस्य सः हुताशनः ।

**अभि०**—स्वजनकेन दिलीपेन दत्तं राष्ट्रमण्डलं प्राप्य रघुस्तथा शोभामाप यथा सायङ्काले सूर्येऽस्तंगते वह्निरतिशयं प्रकाशते ।

**हिन्दी**—रघु अपने पिता द्वारा दिये गये राज्य को पाकर इस प्रकार अधिक सुशोभित हुए, जिस प्रकार सायङ्काल के समय सूर्य द्वारा निहित तेज को पाकर अग्नि की शोभा अधिक हो जाती है ॥१॥

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम्।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥

**सञ्जीविनी**—दिलीपानन्तरं राज्ये प्रतिष्ठितमवस्थितं तं रघुं निशम्याकर्ण्य पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य संजातः प्रधूमितोऽग्निरुत्थित इव प्रज्वलित इव। पूर्वेभ्योऽधिकसंतापोऽभूदित्यर्थः राजकर्तृकस्यापि निशमनस्याग्नावुपचारान्न समानकर्तृकत्वविरोधः ॥ २ ॥

**अन्वयः**—दिलीपानन्तरम्, राज्ये, तं, प्रतिष्ठितम्, निशम्य, पूर्वम्, राज्ञाम्, हृदये, प्रधूमितः, अग्निः, उत्थितः, इव 'अभूत्'।

**वाच्य०**—प्रधूमितेनाग्निना उत्थितेन इव अभावि।

**व्याख्या**—दिलीपानन्तरम्=दिलीपस्यानन्तरं, दिलीपे वनं गते सतीत्यर्थः, राज्ये=राज्ञो भावः कर्म वा तस्मिन्, राष्ट्रमण्डले, प्रतिष्ठितम्=कृताधिष्ठानम्, 'रघुम्' निशम्य=श्रुत्वा, पूर्वम्=दिलीपराज्यसमये, राज्ञाम्=महीपालानाम्, हृदये=मनसि, प्रधूमितः=प्रकर्षेण धूमोऽस्य संजातः, धूमयुक्तः, अग्निः=सन्तापवह्निः, उत्थितः=प्रज्वलितः इव 'अभूत्'।

**समा०**—दिलीपस्य अनन्तरं दिलीपानन्तरम्, तत् दिलीपानन्तरम्। प्रतिष्ठा अस्य संजाता इति प्रतिष्ठितः, तं प्रतिष्ठितम्। प्रकृष्टो धूमः प्रधूमः, प्रधूमः अस्य संजातः प्रधूमितः।

**अभि०**—दिलीपराज्यकाले यः नृपाणां हृदि धूमयुक्तः सन्तापाग्निः आसीत् स रघुं राज्ये प्रतिष्ठितं श्रुत्वा प्रज्वलित इव बभूव। राजानोऽधिकं सन्तेपुः।

**हिन्दी**—राजा दिलीप के राज्यकाल में जिन राजाओं के हृदयों में धूमिल संतापाग्नि स्थित थी वह रघु के राजपदारूढ़ होते ही धधक उठी ॥२॥

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥

**सञ्जीविनी**—पुरुहूतध्वज इन्द्रध्वजः। स किल राजभिर्वृष्ट्यर्थं पूज्यत इत्युक्तं भविष्योत्तरे—'एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर। पर्जन्यः कामवर्षी स्यात्तस्य राज्ये न संशयः ॥" इति। "चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम्। आहुः शक्रध्वजं नाम पौरलोकसुखावहम् ॥" पुरुहूतध्वजस्येव तस्य रघोर्नवमभ्युत्थानमभ्युन्नतिमभ्युदयं च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः। उदूर्ध्वं प्रस्थिता उल्लसि-

ताश्च नयनपंक्तयो यासां ताः सप्रजाः ससंतानाः प्रजा जनाः । 'प्रजा स्यात्संततौ जने' इत्युभयत्राप्यमरः । ननन्दुः ॥ ३ ॥

**अन्वयः**—पुरुहूतध्वजस्य, इव तस्य नवाभ्युत्थानदर्शिन्यः, उन्नयनपङ्क्तयः, सप्रजाः, प्रजाः, ननन्दुः ।

**व्याख्या**—पुरुहूतस्येन्द्रस्य ध्वजस्य = पताकाया इव = यथा, तस्य = रघोः, नवं = नूतनं यदभ्युत्थानमभ्युदयस्तत् पश्यन्तीति तादृश्यः ऊर्ध्वं प्रस्थिताः नयनानां = नेत्राणां पङ्क्तयो यासां ताः उन्नयनपङ्क्तयः = ऊर्ध्वदर्शनोन्मुखाः प्रजाभिः = सन्तानैः सह वर्तमानाः सप्रजाः, प्रजाः = जनाः "प्रजा स्यात्सन्ततौ जने" इत्यमरः । ननन्दुः = अनन्दन् ।

**समा०**—पुरुहूतस्य ध्वजः पुरुहूतध्वजः तस्य पुरुहूतध्वजस्य । नवञ्च तदभ्युत्थानञ्च नवाभ्युत्थानं नवाभ्युत्थानं पश्यन्तीति नवाभ्युत्थानदर्शिन्यः । नयनानां पङ्क्तयः नयनपङ्क्तयः, उद्गताः नयनपङ्क्तयो यासां ता उन्नयनपङ्क्तयः । प्रजाभिः सह वर्तन्त इति सप्रजाः ।

**अभि०**—यथा सन्तानसहिताः प्रजा इन्द्रध्वजाभ्युत्थानं दृष्ट्वा प्रसन्नाः भवन्ति तथैव रघोरपि नवाभ्युदयमवलोक्य बभूवुः ।

**हिन्दी**—जिस प्रकार इन्द्रध्वजोत्थान से सन्तान सहित प्रजा ऊपर को दृष्टि किये प्रसन्न होती है उसी प्रकार रघु के अभ्युदय से भी समस्त प्रजा प्रसन्न हुई ॥

समसेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४ ॥

**सञ्जीविनी**—द्विरद इव तेव द्विरदैश्च गच्छतीति द्विरदगामिना । 'कर्तर्युपमाने' इति 'सुप्यजातौ' इति च णिनिः । तेन रघुणा समं युगपदेव द्वयं समाक्रान्तमधिष्ठितम् । किं तद्द्वयम् । पितुरागतं पित्र्यम् । 'पितुर्यत्' इति यत्प्रत्ययः । सिंहासनम् । अखिलमरीणां मण्डलं राष्ट्रं च ॥४॥

**अन्वयः**—द्विरदगामिना, तेन, समम्, एव, द्वयम्, समाक्रान्तम्, पित्र्यम्, सिंहासनम्, अखिलम्, अरिमण्डलम्, च ।

**वाच्य०**—द्विरदगामी, सः, समम्, एव, द्वयम्, समाक्रान्तवान् ।

**व्याख्या**—द्वौ रदौ यस्य स द्विरदो = गजः, स इव गच्छतीति तेन द्विरदगामिना = गजगामिनेत्यर्थः, तेन = रघुणा, समम् = युगपत्, एव, द्वयम् = द्वितयम्, समा-

क्रान्तम् = समधिष्ठितम्, किन्तत् ? पितुरागतं पित्र्यं = स्वजनकादधिगतं सिंहासनं = राजासनम्, अखिलम् = सम्पूर्णम्, अरीणां = शत्रूणां मण्डलं राष्ट्रमण्डलं च ।

**समा०**—द्वौ रदौ यस्य सः द्विरदः, द्विरद इव गच्छतीति द्विरदेन गच्छतीति वा द्विरदगामी, तेन द्विरदगामिना । अरीणां मण्डलम् अरिमण्डलम् ॥४॥

**अभि०**—यदैव गजगमनशीलेन रघुणा सिंहासनं प्राप्तं तदैव सकलशत्रुसमूहोऽपि तेन पदाक्रान्तः कृतः ।

**हिन्दी**—हाथी की तरह मस्त चलने वाले रघु ने पिता से प्राप्त सिंहासन को तथा सम्पूर्ण शत्रुमण्डल को एक साथ ही पदाक्रान्त किया ॥४॥

छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥

**सञ्जीविनी**—अत्र रघोस्तेजोविशेषेण स्वयं संनिहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्षते । पद्मा लक्ष्मीः । 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । सा स्वयमदृश्या किल । किलेति संभावनायाम् । सती छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन । न तु स्वरूपतो दृश्येन । छायामण्डलमित्यनेनानातपज्ञानं लक्ष्यते । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्युभयत्राप्यमरः । पद्मातपत्रेण पद्ममेवातपत्रं तेन कारणभूतेन साम्राज्यदीक्षितं साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितमभिषिक्तं तं भेजे सिषेवे । अन्यथा कथमेतादृशी कान्तिसंपत्तिरिति भावः ॥५॥

**अन्वयः—पद्मा, स्वयम् अदृश्या, किल, छायामण्डललक्ष्येण, पद्मातपत्रेण, साम्राज्यदीक्षितम्, तं, भेजे ।**

**वाच्य०**—पद्मया, स्वयम् अदृश्यया, किल, साम्राज्यदीक्षितः, सः, भेजे ।

**व्याख्या**—पद्मा = लक्ष्मीः, स्वयम् = आत्मना, अदृश्या = अलक्ष्या, किलेति-सम्भावनायाम्, छायायाः = अनातपस्य यन्मण्डलं = चक्रं, तेन लक्ष्येणानुमेयेन, पद्मं = कमलमेवातपत्रं = छत्रं तेन छायामण्डललक्ष्येण करणेन, साम्राज्ये = सम्राट्कर्मणि दीक्षितमभिषिक्तम्, तम् = रघुम्, भेजे = सिषेवे ।

**समा०**—न दृश्या अदृश्या । छायाया मण्डलं छायामण्डलं तेन लक्ष्यं छायामण्डललक्ष्यम्, तेन छायामण्डललक्ष्येण । पद्ममेव आतपत्रं तेन पद्मातपत्रेण । सम्राजः कर्म साम्राज्यं, साम्राज्ये दीक्षितः साम्राज्यदीक्षितः, तं सम्राज्यदीक्षितम् ।

**अभि०**—सिंहासनारूढं रघुमवलोक्य तत्तेजोविशेषेणाकृष्टा लक्ष्मीः स्वयमदृश्या सती प्रभापुञ्जानुमेयकमलच्छत्रेण तं सेवितवती।

**हिन्दी**—सिंहासन पर विराजमान रघु को देख कर लक्ष्मी स्वयम् अदृश्य रूप से कान्तिमण्डल से अनुमाव करने योग्य कमलरूप छत्र से उनकी सेवा करने में तत्पर हुई ॥५॥

परिकल्पितसान्निध्या काले काले च वन्दिषु।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥६॥

**सञ्जीविनी**—सरस्वती च काले काले सर्वेष्वपि योग्यकालेषु। 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचनम्। वन्दिषु परिकल्पितसान्निध्या कृतसन्निधाना सती स्तुत्यं स्तोत्रार्हं तं रघुम्। अर्थ्याभिरर्थादनपेताभिः। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। स्तुतिभिः स्तोत्रैरुपतस्थे। देवताबुद्धया पूजितवतीत्यर्थः। देवतात्वं च 'नाविष्णुः पृथिवीपतिः' इति वा, लोकपालात्मकत्वाद्वेत्यनुसन्धेयम्। एवं च सति 'उपाद्देवपूजासंगतिकरण' इति वक्तव्यादात्मनेपदं सिद्ध्यति ॥६॥

**अन्वयः**—**सरस्वती, च काले काले, वन्दिषु, परिकल्पितसान्निध्या, 'सती' स्तुत्यं तम्, अर्थ्याभिः, स्तुतिभिः, उपतस्थे।**

**वाच्य०**—सरस्वत्या, परिकल्पितसान्निध्यया, सत्या स्तुत्यः, सः उपतस्थे।

**व्याख्या**—सरस्वती = वाग्देवता, च = अपि, काले-काले = समये-समये, योग्यसमयेष्वित्यर्थः, वन्दिषु = स्तुतिपाठकेषु, परिकल्पितं = परिनिष्ठितं, सान्निध्यं = सामीप्यं यया सा कृतसंनिधानेत्यर्थः, स्तोतुं योग्यः स्तुत्यस्तं = स्तवार्हं, तम् = रघुम्, अर्थादनपेताः = अर्थ्यास्ताभिः = अर्थादनपेताभिः शोभनार्थाभिरित्यर्थः, स्तुतिभिः = स्तुतिवचनैः, उपतस्थे = उपस्थानं चकार।

**समा०**—परिकल्पितं सान्निध्यं यया सा परिकल्पितसान्निध्या।

**अभि०**—वाचामधिष्ठात्री देवी सरस्वत्यपि योग्यप्रसङ्गेषु वन्दिजनमुखवर्तिनी भूत्वा, स्तवनार्हं रघुं, शोभनार्थैः स्तोत्रैः सेवितवती।

**हिन्दी**—सरस्वती देवी भी उचित अवसरों पर वन्दिजनों में स्थित होकर स्तुति करने योग्य रघु की अच्छे अर्थवाले स्तोत्रों से स्तुति करने लगी ॥६॥

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥७॥

**सञ्जीविनी**—वसुंधरा मनुप्रभृतिभिर्मान्यैः पूज्यै राजभिर्भुक्ता यद्यपि। भुक्तैवेत्यर्थः। यद्यपीत्यवधारणे। 'अप्यर्थे यदिवार्थे स्यात्' इति केशवः। तथापि तस्मिन्राज्ञि। अन्यः पूर्वो यस्याः सान्यपूर्वा अन्यपूर्वा न भवतीत्यनन्यपूर्वा। अनन्योपभुक्तेवासीत् तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः ॥७॥

**अन्वयः**—**वसुन्धरा, मनुप्रभृतिभिः, मान्यैः, राजभिः, यद्यपि भुक्ता, तथापि, तस्मिन्, अनन्यपूर्वा, इव, आसीत्।**

**वाच्य०**—वसुन्धरां, मनुप्रभृतयः मान्याः राजानः यद्यपि, भुक्तवन्तः, तथापि तया तस्मिन्, अनन्यपूर्वया इव अभूयत।

**व्याख्या**—वसूनि धरतीति वसुन्धरा=पृथिवी, मनुः प्रभृतिरादिर्येषां तादृशैः =वैवस्वतमन्वादिभिः, मान्यैः=प्रतिष्ठितैः, राजभिः=नृपैः यद्यपि, भुक्ता= उपभुक्ता, तथापि तस्मिन्=रघौ न अन्यः पूर्वो यस्यास्तादृशी अनन्योपभुक्ता इव=यथा, आसीत्=अभूत्।

**समा०**—मनुः प्रभृतिः येषां ते मनुप्रभृतयः, तैः मनुप्रभृतिभिः। मानितुं योग्याः मान्याः, तैः मान्यैः। अन्यः पूर्वो यस्याः सा अन्यपूर्वा, अन्यपूर्वा न भवतीति अनन्यपूर्वा।

**अभि०**—यद्यपि रघोः पूर्वमन्येऽपि मनुप्रभृतयो राजानः पृथिव्या उपभोगं चक्रुः, तथापि रघौ राज्ये प्रशासति सा अभुक्तपूर्वाऽतिनवा प्रतिभाति स्म।

**हिन्दी**—यद्यपि पृथ्वी का पहले भी मनु आदि मान्य राजाओं ने भलीभाँति उपभोग किया था, तथापि रघु को पाकर वह उसमें इस प्रकार अनुरक्त हुई कि जैसे वह अन्य से न भोगी गई हो ॥७॥

स हि सर्वस्य लोकस्य युक्तदण्डतया मनः।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥८॥

**सञ्जीविनी**—हि यस्मात्कारणात्स रघुर्युक्तदण्डतया यथापराधदण्डतया सर्वस्य लोकस्य मन आददे जहार। क इव। अतिशीतोऽत्युष्णो वा न भवतीति नातिशीतोष्णः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। दक्षिणो दक्षिणदिग्भवो नभस्वान्वायुरिव। मलयानिल इवेत्यर्थः। युक्तदण्डतयेत्यत्र कामन्दकः—'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥' इति॥८॥

**अन्वयः**—**हि, सः, युक्तदण्डतया, सर्वस्य, लोकस्य, मनः, नातिशीतोष्णः दक्षिणः, नभस्वान्, इव, आददे।**

**वाच्य०**—तेन नातिशीतोष्णेन, दक्षिणेन, नभस्वता, इव मनः आददे ।

**व्याख्या**—हि = यतः, सः = रघुः युक्तो दण्डो यस्य सः, तस्य भावस्तत्ता तया = यथापराधदण्डत्वेन, सर्वस्य = निखिलस्य, लोकस्य = प्रजावर्गस्य, मनः = चित्तम् न अतिशीतः उष्णश्च भवतीति नातिशीतोष्णः = समशीतोष्णः, दक्षिणः = दक्षिण-दिग्भवः नभस्वान्वायुरिव, आददे = वशीचकार ।

**समा०**—युक्तः दण्डः यस्य सः युक्तदण्डः युक्तदण्डस्य भावः युक्तदण्डता, तया युक्तदण्डतया । शीतश्चासौ उष्णश्च शीतोष्णः, अत्यन्तं शीतोष्णः अतिशीतोष्णः न अतिशीतोष्णः नातिशीतोष्णः ।

**अभि०**—यथा दक्षिणदिग्भवो वायुः समशीतोष्णः सन् सर्वेषां मनो वशीकरोति तथैव नातिमृदुना नातिकठिनेन दण्डेन रघुरपि सर्वेषां मनो वशीचकार ।

**हिन्दी**—जैसे कि दक्षिण दिशा का वायु न अधिक ठंढा न अधिक गर्म होने के कारण मनुष्यों का मन हरण करता है उसी प्रकार राजा रघु ने भी अपराधानुसार दण्ड देकर सब मनुष्यों का मन हरण किया ॥८॥

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥९॥

**सञ्जीविनी**—तेन रघुणा प्रजा गुरौ दिलीपविषये । सहकारोऽतिसौरभश्चूतः । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । तस्य फलेन पुष्पोद्गमे पुष्पोदय इव ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठा अल्पौत्सुक्याः कृताः । गुणोत्तरश्चोत्तरो विषयः पूर्वं विषयं विस्मारयतीति भावः ॥९॥

**अन्वयः—तेन, प्रजाः, गुरौ, सहकारस्य, फलेन, पुष्पोद्गमे, इव, गुणाधिकतया, मन्दोत्कण्ठाः, कृताः ।**

**वाच्य०**—सः, प्रजाः, गुरौ, ततोऽपि गुणाधिकतया, मन्दोत्कण्ठाः कृतवान् ।

**व्याख्या**—तेन = राज्ञा रघुणा, प्रजाः प्रकर्षेण जायन्त इति प्रजाः = जनाः, गुरौ = दिलीपविषये, सहकारस्य = आम्रस्य, फलेन = प्रसवेन, पुष्पाणां कुसुमानामुद्गमे = प्रसूनोदये इव = यथा, गुणैः = औदार्यादिभिः, अधिकतया = अधिकत्वेन, मन्दा उत्कण्ठा यासां ताः मन्दोकण्ठाः = स्वल्पौत्सुक्याः कृताः = विहिताः ।

**समा०**—पुष्पस्य उद्गमः पुष्पोद्गमः, तस्मिन् पुष्पोद्गमे । गुणैरधिकः गुणा-

धिकः गुणाधिकस्य भावः गुणाधिकता, तया गुणाधिकतया । मन्दा उत्कण्ठा यासां ताः मन्दोत्कण्ठाः ।

**अभि०**—यथा जना आम्रस्य फलं प्राप्य तत्कलिकायां न्यूनादरा भवन्ति तथैव रघोर्दयादाक्षिण्यादिगुणानवलोक्य दिलीपं प्रति मन्दोत्कण्ठा बभूवुः ।

**हिन्दी**—जिस प्रकार मनुष्य आम के फल को प्राप्त करके आम के बौर के प्रति कम आदर करने वाले हो जाते हैं उसी प्रकार रघुके गुणों से सन्तुष्ट प्रजा दिलीप के गुणों को भूल गई ॥९॥

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः ॥१०॥

**सञ्जीविनी**—नयविद्भिर्नीतिशास्त्रज्ञैर्नवे तस्मिन्राज्ञि विषये । तमधिकृत्येत्यर्थः । सद्धर्मयुद्धादिकमसत्कूटयुद्धादिकं चोपदर्शितम् । तस्मिन्राज्ञि पूर्वः पक्ष एवाभवत् । संक्रान्त इत्यर्थः । उत्तरः पक्षो नाभवत् । न संक्रान्त इत्यर्थः । तत्र सदसतोर्मध्ये सदेवाभिमतं नासत् । तदुद्भावनं तु ज्ञानार्थमेवेत्यर्थः । पक्षः साधनयोग्यार्थः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति केशवः ॥१०॥

**अन्वयः—नयविद्भिः, नवे, राज्ञि, सद्, असद्, च, उपदर्शितम्, तस्मिन्, पूर्वः पक्षः, एव, अभवत्, उत्तरः, न, अभवत् ।**

**वाच्य०**—नयविदः, सद्, असद्, च, उपदर्शितवन्तः, पूर्वेण, एव, पक्षेण, अभूयत, उत्तरेण, न ।

**व्याख्या**—नयं नीतिशास्त्रं विदन्तीति तैः,नयविद्भिः = नीतिशास्त्रमर्मज्ञैः, सत् = सत्पक्षः धर्मयुद्धादिकम्, असत् = असत्पक्षः कूटयुद्धादिकं च उपदर्शितम् = निवेदितम्, तस्मिन् = राज्ञि रघौ, पूर्वः पक्षः = धर्मयुद्धपक्षः, एव, अभवत् = अभूत्, उत्तरः = कूटयुद्धपक्षः, न, अभवत् = नाभूत् ।

**समा०**—नयं विदन्तीति नयविदः, तैः नयविद्भिः ।

**अभि०**—नीतिशास्त्ररहस्यवेत्तारो मन्त्रिप्रभृतयः रघोरग्रे धर्मयुद्धं कूटयुद्धं च प्रदर्शितवन्तः, परं रघुणा केवलं धर्मयुद्धपक्ष एवाश्रितो नतु कूटयुद्धपक्षः ।

**हिन्दी**—राजनीति शास्त्र के पारंगत विद्वानों ने रघु के आगे धर्मयुद्ध तथा छलयुद्ध दोनों ही पक्ष प्रस्तुत किये, परन्तु रघुने केवल धर्मयुद्ध को ही अपनाया कूटयुद्ध को नहीं ॥१०॥

पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥११॥

**सञ्जीविनी**—पृथिव्यादीनां पञ्चानां भूतानामपि गुणा गन्धादय उत्कर्षमतिशयं पुपुषुः। अत्रोत्प्रेक्षते । तस्मिन्रघौ नाम नवे महीपाले सति सर्वं वस्तुजातं नवमिवाभवत् । तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवदिति भावः ॥११॥

**अन्वयः**—**पञ्चानाम्, अपि, भूतानाम्, गुणाः, उत्कर्षम्, पुपुषुः, तस्मिन्, नवे महीपाले, सति, सर्वम्, नवम्, इव, अभवत् ।**

**वाच्य०**—गुणैः, उत्कर्षः, पुपुषे, सर्वेण, नवेन, इव, अभूयत ।

**व्याख्या**—पञ्चानाम् = पञ्चसंख्यकानाम् अपि, भूतानाम् = पृथिव्यप्तेजोवाय्वाकाशानाम्, गुणाः = गन्ध-रस-रूप-स्पर्श-शब्दाः, उत्कर्षम् = अतिशयम् पुपुषुः = अपुष्णन्, तस्मिन् = रघौ, नवे = नूतने, महीं पालयतीति तस्मिन् महीपाले = राज्ञि, सर्वम् = निखिलम् वस्तु, नवम् = नूतनम्, इव = यथा, अभवत् = अभूत् ।

**समा०**—महीं पालयतीति महीपालः, तस्मिन् महीपाले ।

**अभि०**—यदैव रघुः राजा अभवत् तदैव पृथिव्यप्तेजोवाय्वाकाशानां पञ्चमहाभूतानामपि गन्ध-रस-रूप-स्पर्श-शब्दाख्या गुणा उत्कर्षमापुः । नवीने राज्ञि सर्वमपि वस्तु नवीनमिवाभवत् ।

**हिन्दी**—पृथिवी, जल, तेज, वायु, आकाश इन पाँच महाभूतों के गन्ध, रस, रूप, स्पर्श तथा शब्द नामक गुण पहले की अपेक्षा अधिक पुष्टि को प्राप्त हो गये । रघु के नवीन राजा होने पर सारी वस्तुएँ नवीन-सी दिखलाई देने लगीं ॥

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥१२॥

**सञ्जीविनी**—यथा चन्दयतीत्याह्लादयतीति चन्द्र इन्दुः। चदिधातोरौणादिको रप्रत्ययः। प्रह्लादनादाह्लादकरणादन्वर्थोऽनुगतार्थनामकोऽभूत् । यथा च तपतीति तपनः सूर्यः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन ल्युट्प्रत्ययः । प्रतापात्संतापजननादन्वर्थः । तथैव स राजा प्रकृतिरञ्जनादन्वर्थः सार्थकराजशब्दोऽभूत् । यद्यपि राजतेर्दीप्त्यर्थात्कनिन्प्रत्ययान्तो न तु रञ्जेस्तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ॥१२॥

**अन्वयः**—यथा, चन्द्रः, प्रह्लादनात्, अन्वर्थः, अभूत्, यथा, तपनः, प्रतापाद् 'अन्वर्थः' तथा, एव, सः, राजा, प्रकृतिरञ्जनात्, अन्वर्थः, अभूत् ।

**वाच्य०**—यथा, चन्द्रेण, अन्वर्थेन, अभावि, यथा च तपनेन, अभावि, तथा, एव, तेन, राज्ञा, अन्वर्थेन, अभावि ।

**व्याख्या**—यथा = येन प्रकारेण, चन्द्रः = विधुः, प्रह्लादनात् = चन्दयत्याल्हादयतीति व्युत्पत्त्या आह्लादजनकत्वात्, अन्वर्थः = अनुगतार्थनामा, अभूत् = बभूव, यथा च तपनः = सूर्यः, प्रतापात् = तपतीति तपनः, इति व्युत्पत्या संतापजवनात्, अन्वर्थः, अभूत्, तथैव सः = राजा रघुः, प्रकृतेः = प्रजायाः यद्रञ्जनं = रागजननं तस्मात्, अन्वर्थः अभूत् ।

**समा०**—प्रकृतीनां रञ्जनं प्रकृतिरञ्जनम्, तस्मात् प्रकृतिरञ्जनात् ।

**अभि०**—यथा लोकानामाह्लादकारकत्वात् चन्द्रः चन्द्रपदवाच्यः, यथा सन्तापजवनात् तपनः तपनशब्दवाच्यः, तथैव प्रजायाः स्वस्मिन्ननुरागजननात् रघुरपि राजेतिशब्दवाच्योऽनुगतार्थ एवाभूत् ।

**हिन्दी**—जैसे लोगों को आह्लाद पहुँचाने के कारण चन्द्रका नाम सार्थक हुआ तथा सन्ताप पहुँचाने के कारण सूर्य का नाम तपन सार्थक हुआ इसी प्रकार प्रजावर्ग में अनुराग उत्पन्न करने के कारण रघु को राजा (रंजन करनेवाला) कहना भी सार्थक ही हुआ ॥१२॥

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥१३॥

**सञ्जीविनी**—विशाले तस्य रघोर्लोचने कामं कर्णान्तयोर्विश्रान्ते कर्णप्रान्तगते। चक्षुष्मत्ता तु । चक्षुःफलं त्वित्यर्थः । सूक्ष्मान्कार्यार्थान्कर्तव्यार्थान्दर्शयति प्रकाशयतीति तेन सूक्ष्मकार्यार्थदर्शिना शास्त्रेणैव । शास्त्रं दृष्टिर्विवेकिनामिति भावः ॥

**अन्वयः**—विशाले, तस्य, लोचने, कामम्, कर्णान्तविश्रान्ते, 'आस्ताम्' तु, चक्षुष्मत्ता, सूक्ष्मकार्यार्थदर्शिना, शास्त्रेण, एव, 'आसीत्' ।

**वाच्य०**—विशालाभ्याम् लोचनाभ्याम् कर्णान्तविश्रान्ताभ्याम् अभावि, चक्षुष्मत्तया अभावि ।

**व्याख्या**—विशाले = विस्तृते, तस्य = रघोः, लोचने = नेत्रे, कामम् = अत्यन्तम्, कर्णयोः = श्रोत्रयोः, अन्तौ = प्रान्तौ, इति कर्णान्तौ तयोः विश्रान्ते = गते,

कर्णप्रान्तावलम्बिते इत्यर्थः, आस्ताम्, तु = किन्तु, चक्षुः नेत्रमस्यास्तीति तस्य भावस्तत्ता नेत्रवत्ता सूक्ष्मान् लघून् विचारयोग्यानां कार्याणामर्थान् द्रष्टुं शीलमस्य तादृशेन शास्त्रेण आगमेन एव आसीत् ।

**समा०**—कर्णयोः अन्तौ कर्णान्तौ, कर्णान्तयोः विश्रान्ते कर्णान्तविश्रान्ते । चक्षुः अस्यास्तीति चक्षुष्मान्, चक्षुष्मतः भावः चक्षुष्मत्ता । कर्तुं योग्यः कार्यः, कार्यश्चासौ अर्थश्च कार्यार्थः, कार्यार्थं दर्शयतीति कार्यार्थदर्शि तेन कार्यार्थदर्शिना ।

**अभि०**—यद्यपि रघोर्नेत्रे कर्णान्तविस्तृतत्वादतिसुन्दरे आस्ताम्, तथापि स केवलं ताभ्यामेव नेत्रवान् न अभूत्, अपितु अप्रत्यक्षान् पदार्थान् शास्त्ररूपलोचनेनैवावलोकयन् लोचनशोभाशाली आसीत् ।

**हिन्दी**—यद्यपि रघु के नेत्र कानों तक फैले हुए होने के कारण अत्यन्त सुन्दर मालूम पड़ते थे परन्तु वह केवल उनसे ही आँखों वाला नहीं था, अपितु अत्यन्त गूढ़पदार्थों को भी जाननेवाली शास्त्ररूपी आँख से ही नेत्रवाला था ॥

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥

**सञ्जीविनी**—अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तमेनं रघुं पङ्कजलक्षणा पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् । शरत् द्वितीया पार्थिवश्री राजलक्ष्मीरिव समुपस्थिता प्राप्ता । 'रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं लिंगिषु दानवृत्तिकरणं त्यागः समानेऽर्चनं कार्याण्येव महीभुजां प्रशमनान्येतानि राज्ये नवे ॥' ॥१४॥

**अन्वयः**—**अथ, लब्धप्रशमनस्वस्थम्, एनम्, पङ्कजलक्षणा, शरद्, द्वितीया, पार्थिवश्रीः, इव, समुपस्थिता ।**

**वाच्य०**—अथ लब्धप्रशमनस्वस्थः अयम् पङ्कजलक्षणया शरदा द्वितीयया पार्थिवश्रिया इव समुपतस्थे ।

**व्याख्या**—अथ = सिंहासनारोहणानन्तरम्, लब्धस्य = प्राप्तस्य यत् प्रशमनम् = स्थिरीकरणम् तेन स्वस्थं समाहितचित्तम्, एनम् = राजानं रघुम्, पङ्कजानि कमलान्येव लक्षणानि चिह्नानि यस्यास्तादृशी कमलचिह्नवतीत्यर्थः, शरद् =

शरत्कालः, द्वितीया = अपरा, पार्थिवस्य राज्ञः या श्रीः शोभा, सेव समुपस्थिता = प्राप्ता।

**समा०**—लब्धस्य प्रशमनं लब्धप्रशमनम्, लब्धप्रशमनेन स्वस्थः लब्धप्रशमनस्वस्थः, तं लब्धप्रशमनस्वस्थम्। पृथिव्या ईश्वरः पार्थिवः, पार्थिवस्य श्रीः पार्थिवश्रीः। पङ्कजं लक्षणं यस्याः सा पङ्कजस्य लक्षणं यस्याः सा वा पङ्कजलक्षणा।

**अभि०**—स रघुर्यदा राज्यं प्राप्तवान् तदैव सर्वत्र शान्ति विधाय स्वस्थोऽभवत्। एवं च शरदृतुः विकसितकमलव्याजेन अपरा राजलक्ष्मीरिव तं सिषेवे।

**हिन्दी**—राज्यासन पाने के उपरान्त रघु ने उपलब्धराज्य में शान्ति स्थापित की। तभी शरद्ऋतु का आगमन इस प्रकार हुआ मानो कमलधारिणी साक्षात् लक्ष्मी ही आ गई हो ॥१४॥

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥

**सञ्जीविनी**—निःशेषं वृष्टा निर्वृष्टाः। कर्तरि क्तः। अत एव लघवः। तैर्मेघैर्मुक्तवर्त्मा त्यक्तमार्गः। अत एव सुदुःसहः। तस्य रघोर्भानोश्च प्रतापः पौरुषमातपश्च। 'प्रतापौ पौरुषातपौ' इति यादवः। युगपदेककालं दिशो व्यानशे व्याप ॥१५॥

**अन्वयः—निर्वृष्टलघुभिः, मेघैः, मुक्तवर्त्मा, अत एव, सुदुःसहः, तस्य, भानोः, च, प्रतापः, युगपत्, दिशः, व्यानशे।**

**वाच्य०**—मुक्तवर्त्मना सुदुःसहेन प्रतापेन दिशः व्यानशिरे।

**व्याख्या**—निःशेषं वृष्टा = मुक्तजला इति निर्वृष्टा अत एव लघवः, तैः तथोक्तैः, मेघैः = घनैः, मुक्तं = परित्यक्तं, वर्त्म = मार्गः येन तादृशः, अत एव सुष्ठुदुःसहः = अतिदुःसहः सोढुमशक्य इत्यर्थः, तस्य = राज्ञः, भानोः = सूर्यस्य, च = तथा, प्रतापः = पुरुषशक्तिः प्रतापश्च युगपद् = एककालम्, दिशः = काष्ठाः, व्यानशे = व्याप।

**समा०**—निःशेषं वृष्टाः निर्वृष्टाः, निर्वृष्टाश्च ते लघवश्च निर्वृष्टलघवः, तैः निर्वृष्टलघुभिः। मुक्तं वर्त्म यस्य सः मुक्तवर्त्मा। दुःखेन सह्यते इति दुःसहः, सुष्ठु दुःसहः सुदुःसहः।

**अभि०**—यथा वर्षणानन्तरं धवलजलदैः परित्यक्तमार्गो रविः स्वतीव्र-किरणैर्लोकं सन्तप्तं करोति तथैव तस्य रघोरपि राज्ञः प्रतापः सर्वासु दिक्षु प्रसृतः।

**हिन्दी**—पानी बरसाने के पश्चात् हलके हुए मेघों ने जिसका मार्ग छोड़ दिया है ऐसे सूर्य और राजा रघु का प्रताप सब दिशाओं में फैल गया ॥१५॥

वार्षिकं सञ्जहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६ ॥

**सञ्जीविनी**—वर्षासु भवं वार्षिकम् । वर्षानिमित्तमित्यर्थः। 'वर्षाभ्यष्ठक्' इति ठक्प्रत्ययः। धनुः संजहार। रघुर्जैत्रं जयशीलम् । जेतृशब्दात्तृन्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः। धनुर्दधौ । हि यस्मात्ताविन्द्ररघू प्रजानामर्थस्य वृष्टिविजयलक्षणस्य साधनविषये पर्यायेणोद्यते कार्मुके याभ्यां तौ पर्यायोद्यत-कार्मुकौ । 'पर्यायोद्यमविश्रमौ' इति पाठान्तरे पर्यायेणोद्यमो विश्रमश्च ययोस्तौ पर्यायोद्यमविश्रमौ । द्वयोः पर्यायकरणादक्लेश इति भावः ॥१६॥

**अन्वयः**—इन्द्रः, वार्षिकं, धनुः, सञ्जहार, रघुः, जैत्रं, धनुः, दधौ, हि, तौ, प्रजार्थसाधने, पर्यायोद्यतकार्मुकौ, आस्ताम् ।

**वाच्य०**—इन्द्रेण वार्षिकं धनुः संजह्रे, रघुणा दधे, हि ताभ्यां पर्यायोद्यतका-र्मुकाभ्याम् अभावि ।

**व्याख्या**—इन्द्रः वर्षासु भवं वार्षिकं वर्षाकालिकं धनुः=शरासनं, सञ्जहार =संहृतवान्, रघुः=राजा जैत्रं जयशीलं, धनुः=स्वचापं, दधौ=गृहीतवान्, हि =यतः, तौ=इन्द्ररघू, प्रजायाः=लोकस्य योऽर्थः प्रयोजनं तस्य साधने=विषये, पर्यायेण=क्रमशः, उद्यते=उद्युक्ते, कार्मुके धनुषी ययोस्तादृशौ, आस्ताम् ।

**समा०**—प्रजानाम् अर्थः प्रजार्थः प्रजार्थस्य साधनं प्रजार्थसाधनम् तस्मिन् प्रजार्थसाधने । पर्यायेण उद्यते कार्मुके याभ्यां तौ पर्यायोद्यतकार्मकौ ।

**अभि०**—इन्द्रः शरदृतौ वर्षाकालिकं धनुः सञ्जहार, रघुस्तु लोकविजयाय धनुर्गृहीतवान् । यतस्तौ पर्यायेण स्वं स्वं धनु गृहीत्वा प्रजाया अर्थसाधने वृष्टिः रूपेण दिग्विजयेन च सर्वदा तत्परौ आस्ताम् ।

**हिन्दी**—इन्द्र ने वर्षा सम्बन्धी धनुष उठाकर रख दिया । इधर रघु ने दिग्विजयार्थ अपना धनुष धारण किया । क्योंकि वे दोनों बारी-बारी से प्रजा का कार्य सिद्ध करने के लिये धनुर्धारण में तत्पर रहते थे ॥१६॥

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥१७॥

**सञ्जीविनी**—पुण्डरीकं सिताम्भोजमेवातपत्रं यस्य स तथोक्तः । विकसन्ति काशानि काशाख्यतृणकुसुमान्येव चामराणि यस्य स तथोक्तः । ऋतुः शरदृतुः पुण्डरीकचिभातपत्रं काशनिभचामरं तं रघुं विडम्बयामासानुचकार । तस्य रघोः श्रियं पुवः शोभां तु न प्राप । 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते' इति शाश्वतः ॥

**अन्वयः**—पुण्डरीकातपत्रः, विकसत्काशचामरः, ऋतुः तम्, विडम्बयामास, पुनः, तच्छ्रियम्, न, प्राप ।

**वाच्य०**—पुण्डरीकातपत्रेण, विकसत्काशचामरेण, ऋतुना, सः, विडम्बयाञ्चक्रे, पुनः तच्छ्रीः, न प्रापे ।

**व्याख्या**—पुण्डरीकं = धवलकमलमेवातपत्रं = छत्रं यस्य तादृशः, विकसन्ति प्रस्फुरन्ति काशानि = तन्नामकतृणानि एव, चामराणि = बालव्यजनानि यस्य तादृशः, ऋतुः = शरदृतुः, तम् = रघुम्, विडम्बयामास = अनुचकार, पुनः = किन्तु, तस्य = रघोः या श्रीः = शोभा ताम्, न = नैव, प्राप = प्राप्नोत् ।

**समा०**—पुण्डरीकमेव आतपत्रं यस्य सः पुण्डरीकातपत्रः । विकसन्ति च तानि काशानि च विकसत्काशानि, विकसत्काशान्येव चामराणि यस्य सः विकसत्काशचामरः । तस्य श्रीः तच्छ्रीः, तां तच्छ्रियम् ।

**अभि०**—शरदृतुना सिताम्भोजरूपेण छत्रेण प्रस्फुरितकाशतृणरूपेण चामरसहितेन च रघोरनुकरणं कृतं किन्तु तस्य या शोभासीत् सा कथमपि न प्रापे ।

**हिन्दी**—शरद् ने श्वेत कमलों के बाहुल्य से तथा खिले हुए काश कुसुमों से श्वेतच्छत्र एवं चामरवाले राजा रघु का अनुकरण किया परन्तु उसकी शोभा न पा सका ॥१७॥

प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे ।
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥१८॥

**सञ्जीविनी**—प्रसादेन सुमुखे तस्मिन्रघौ विशदप्रभे निर्मलकान्तौ चन्द्रे च द्वयोर्विषये तदा चक्षुष्मतां प्रीतिरनुरागः समरसा समस्वादा । तुल्ययोगेति यावत् । "रसो मन्वे रसः स्वादे' इति विश्वः । आसीत् ॥१८॥

**अन्वयः**—प्रसादसुमुखे, तस्मिन्, विशदप्रभे, चन्द्रे, च द्वयोः, तदा, चक्षुष्मताम् प्रीतिः, समरसा, आसीत् ।

**वाच्य०**—चक्षुष्मताम् प्रीत्या, समरसया, अभूयत ।

**व्याख्या**—प्रसादेन = प्रसन्नतया, सुमुखे = शोभनानने तस्मिन् रघौ, विशदा = स्वच्छा, प्रभा = कान्तिर्यस्य तादृशे चन्द्रे = चन्द्रमसि च एवं द्वयोः रघुचन्द्रयोः, तदा = तस्मिन्काले, चक्षुरस्ति येषां तेषां चक्षुष्मतां = नत्रवताम्, प्रीतिः = अनुरक्तिः, समः = तुल्यो रसो यस्याः तादृशी आसीत् ।

**समा०**—सुष्ठु मुखं यस्य सः सुमुखः, प्रसादेन सुमुखः प्रसादसुमुखः, तस्मिन् प्रसादसुमुखे । विशदा प्रभा यस्य सः विशदप्रभः, तस्मिन् विशदप्रभे । चक्षुः एषामस्तीति चक्षुष्मन्तः, तेषां चक्षुष्मताम् । समः रसः यस्या सा समरसा ।

**अभि०**—यथा जनाः शरदि निर्मलं चन्द्रमसं दृष्ट्वा हृष्टा बभूवुः, तथैव चारु कान्तिमन्तं रघुं दृष्ट्वाऽपि ते प्रसन्ना जाताः ।

**हिन्दी**—जिस प्रकार मनुष्य शरद् में निर्मल चन्द्रमा को देखकर प्रसन्न होते थे उसी प्रकार रघु के सुन्दर मुख को देखकर भी आल्हादयुक्त होते थे ॥१८॥

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥१९॥

**सञ्जीविनी**—हंसानां श्रेणीषु पंक्तिषु । तारासु नक्षत्रेषु । कुमुदानि येषु सन्तीति कुमुद्वन्ति । 'कुमुद्वान्कुमुदप्रायः' इत्यमरः । "कुमुदनडवेतसेभ्यो ड्मतुप्" । तेषु । कुमुदप्रायेष्वित्यर्थः । वारिषु च तदीयानां रघुसंबन्धिनां यशसां विभूतयः संपदः पर्यस्ता इव प्रसारिताः किम् । इत्युत्प्रेक्षा । अन्यथा कथमेषां धवलतेति भावः ॥१९॥

**अन्वयः**—हंसश्रेणीषु, तारासु, कुमुद्वत्सु, वारिषु, च तदीयानाम्, यशसाम्, विभूतयः, पर्यस्ताः, इव ।

**वाच्य०**—विभूतिभिः, पर्यस्ताभिः, इव, अभूयत ।

**व्याख्या**—हंसानाम् = मरालानाम्, श्रेणीषु = पंक्तिषु इति हंसश्रेणीषु, तारासु = नक्षत्रेषु, कुमुदाः सन्ति येषां तादृशेषु वारिषु = जलेषु च, तस्येमानि तेषां तदीयानाम् = रघुसंबन्धिनाम्, यशसाम् = कीर्तीनाम्, विभूतयः = संपत्तयः, धवलिमा इत्यर्थः, पर्यस्ताः = प्रसारिताः किमु इत्युत्प्रेक्षा ।

समा०—हंसानां श्रेण्यः हंसश्रेण्यः तासु हंसश्रेणीषु । कुमुदानि एषु सन्तीति कुमुद्वन्ति, तेषु कुमुद्वत्सु । तस्य इमाः तदीयाः ।

अभि०—शरदि हंसपंक्तिषु कुमुदयुक्तेषु सरोवरादिषु च रघुयशस एव धवलिमसमृद्धिः प्रसृतेवासीत् ।

हिन्दी—शरद्ऋतु में हंस की पंक्तियों में कुमुदनामक श्वेत कमलों से युक्त सरोवरों में ऐसा मालूम पड़ता था कि मानो रघु के यश की समृद्धि फैली हुई है।

इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥२०॥

सञ्जीविनी—इक्षूणां छायेक्षुच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तत्र निषण्णा इक्षुच्छायनिषादिन्यः । 'इक्षुच्छायानिषादिन्यः' इति स्त्रीलिङ्गपाठे इक्षोश्छायेति विग्रहः । अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात् । शालीन्गोपायन्ति रक्षन्तीति शालिगोप्यः सस्यपालिकाः स्त्रियः । 'कर्मण्यण्' इत्यण् । 'टिड्ढाणञ्' इत्यादिना ङीप् । गोप्तू रक्षकस्य तस्य रघोः । गुणेभ्य उदयो यस्य तद्गुणोदयं गुणोत्पन्नमाकुमारं कुमारादारभ्य कथोद्घातः कथारम्भो यस्य तत् । कुमारैरपि स्तूयमानमित्यर्थः । यशो जगुर्गायन्ति स्म । अथवा कुमारस्य सतो रघोर्याः कथा इन्द्रविजयादयस्तत आरभ्याकुमारकथम् । तत्राप्यभिविधावव्ययीभावः । आकुमारकथमुद्घातो यस्मिन्कर्मणि । गानक्रियाविशेषणमेतत् । 'स्यादभ्यादानमुद्घात आरम्भः' इत्यमरः । 'आकुमारकथोद्भूतम्' इति पाठे कुमारस्य कथाभिश्चरितै द्भूतं यद्यशस्तद्यश आरभ्य यशो जगुरिति व्याख्येयम् ॥२०॥

अन्वयः—इक्षुच्छायनिषादिन्यः, शालिगोप्यः, गोप्तुः तस्य, गुणोदयम्, आकुमारकथोद्घातम्, यशः, जगुः ।

वाच्य०—इक्षुच्छायनिषादिनीभिः, शालिगोपीभिः, यशः, जगे।

व्याख्या—इक्षूणां = पौण्ड्रकाणां, छाया = अनातपमिति, इक्षुच्छायं तस्मिन् निषीदन्ति उपविशन्ति तच्छीलाः तथोक्ताः शालीन् गोपायन्तीति ताः = शस्यपालिकाः स्त्रियः गोपायतीति गोप्ता तस्य गोप्तुः = रक्षकस्य तस्य = रघोः गुणेभ्य उदयो यस्य तत् गुणोदयं = गुणोत्पन्नम् कुमारादारभ्य इत्याकुमारम्, आकुमारं, कथायाः = चरित्रस्य, उद्घातः = आरम्भः यस्य तत् तथोक्तम् यशः = कीर्तिम् जगुः = गायन्ति स्म ।

**समा०**—इक्षूणां छाया इक्षुच्छायम्, इक्षुच्छाये निषीदन्तीति इक्षुच्छायनिषादिन्यः। शालीन् गोपायन्तीति शालिगोप्यः। गुणेभ्यः उदयः यस्य तत् गुणोदयम्, तत् गुणोदयम्। कथायाः उद्घातः यस्य तत् कथोद्घातम्,कुमारादारभ्य कथोद्घातं यस्य तत् आकुमारकथोद्घातम्, तत् आकुमारकथोद्घातम्। कुमारस्य कथाः कुमारकथाः, कुमारकथा आरभ्य आकुमारकथम्, आकुमारकथम् उद्घातः यस्मिन् कर्मणि यथा भवति तथेति क्रिया विशेषणं वा।

**अभि०**—इक्षूणां छायासु समुपविष्टाः शस्यपालिकाः रघोः कौमार्यादारभ्य शौर्यादिगुणयुक्तं यशः गायन्ति स्म।

**हिन्दी**—ईख की छायाओं में बैठी हुई कृषकों की स्त्रियाँ प्रजावर्ग की रक्षा करने वाले रघु की शूरता को, जो कि बाल्यकाल से ही प्रसिद्ध थी, गाती थी॥

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः॥२१॥

**सञ्जीविनी**—महौजसः कुम्भयोनेरगस्त्यस्य। 'अगस्त्यः कुम्भसम्भवः' इत्यमरः। उदयादम्भः प्रससाद प्रसन्नं बभूव। महौजसो रघोरुदयादभिभवाशङ्कि द्विषतां मनश्चुक्षुभे कालुष्यं प्राप। 'अगस्त्योदये जलानि प्रसीदन्ति' इत्यागमः॥

**अन्वयः**—महौजसः, कुम्भयोनेः, उदयात्, अम्भः, प्रससाद, 'महौजसः' रघोः, उदयात्, अभिभवाशङ्कि, द्विषताम्, मनः, चुक्षुभे।

**वाच्य०**—अम्भसा, प्रसेदे, अभिभवाशङ्किना, द्विषतां, मनसा, चुक्षुभे।

**व्याख्या**—महत्, ओजो = बलं, यस्य सः, तस्य महौजसः, कुम्भयोनेः = अगस्त्यस्य, उदयात् = प्रादुर्भावात्, अम्भः = जलम्, प्रससाद = निर्मलं बभूव, महौजसः = बलशालिनः, रघोः = दिलीपकुमारस्य, उदयात् = अभ्युत्थानात्, अभिभवं = पराभवमाशङ्कत इत्यभिभवाशङ्कि = पराभवशङ्कायुक्तम्, द्विषताम् = शत्रूणाम्, मनः = चित्तम्, चुक्षुभे = कालुष्यं प्राप।

**समा०**—महत् ओजः यस्य सः महौजाः, तस्य महौजसः। आशङ्कितुं शीलमस्येत्याशङ्कि, अभिभवस्य आशङ्कि अभिभवाशङ्कि।

**अभि०**—अगस्त्यनक्षत्रोदयात् कर्दमयुक्तं जलं विमलं बभूव। रघोः विजयप्रस्थानमाकर्ण्य शत्रूणां चित्तं पराभवशङ्कया क्षोभयुक्तं बभूव।

**हिन्दी**—एक ओर अगस्त्य नक्षत्र के उदय से जल में निर्मलता आ गई। दूसरी ओर रघु की दिग्विजय यात्रा का समाचार सुनकर शत्रुओं का मन पराजय के भय से अत्यन्त क्षोभ को प्राप्त हुआ ॥२१॥

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥

**सञ्जीविनी**—मदोदग्रा मदोद्धताः। ककुदेषामस्तीति ककुद्मन्तः। महाककुद इत्यर्थः। यवादित्वान्मकारस्य वत्वाभावः। सरितां कूलान्युद्रुजन्तीति कूलमुद्रुजाः। "उदि कूले रुजिवहोः" इति खश्प्रत्ययः। "अरुर्द्विषत्" इत्यनेन मुमागमः। महान्त उक्षाणो महोक्षाः। "अचतुरविचतुर" इत्यादिना निपातनादकारान्तः। लीलाखेलं विलाससुभगं तस्य रघोरुत्साहवतो वपुष्मतः परभञ्जकस्य विक्रमं शौर्यमनुप्रापुरनुचक्रुः ॥ २२ ॥

**अन्वयः**—**मदोदग्राः, ककुद्मन्तः, सरिताम्, कूलमुद्रुजाः, महोक्षाः, लीलाखेलम्, तस्य, विक्रमम्, अनुप्रापुः।**

**वाच्य०**—मदोदग्रैः ककुद्मद्भिः सरिताम् कूलमुद्रुजैः महोक्षैः लीलाखेलः तस्य विक्रमः अनुप्रापे।

**व्याख्या**—मदेन = गर्वेण, उदग्राः = उन्मत्ताः इति मदोदग्राः, ककुद् एषामस्तीति,ककुद्मन्तः = महाककुदः,सरिताम् = नदीनाम्, कूलान्युद्रुजन्तीति कूलमुद्रुजाः तटविदारकाः, महान्तः उक्षाणो महोक्षाः = महाबलीवर्दाः, लीलाखेलम् = विलासक्रीडायुक्तं, तस्य = रघोः, विक्रमम् = शौर्यम्, अनुप्रापुः = अनुचक्रुः।

**समा०**—मदेन उदग्राः मदोदग्राः। ककुदेषामस्तीति ककुद्मन्तः। कूलान्युद्रुजन्तीति कूलमुद्रुजाः। महान्तश्च ते उक्षाणश्च महोक्षाः। लीलया खेला यस्य सः लीलाखेलः, तं लीलाखेलम्।

**अभि०**—उत्साहसमृद्धियुक्तस्य वपुष्मतः परदमनशीलस्य रघोः शौर्यस्य स्थूलदेहा मत्ता वृषभा नदीतटमुत्पाट्य स्वशृङ्गैरनुकरणं विदधुः।

**हिन्दी**—बहुत स्थूलकाय मतवाले वृषभों ने उत्साह सम्पन्न डीलडौल वाले रघु का अनुकरण अपने सींगों से नदी तट को उखाड़ते हुये किया ॥ २२ ॥

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

**सञ्जीविनी**—मदस्येव गन्धो येषां तैर्मदगन्धिभिः। "उपमानाच्च" इतीकारः समासान्तः। सप्तपर्णानां वृक्षविशेषाणाम्। 'सप्तपर्णो विशालत्वक्शारदो विषमच्छदः' इत्यमरः। प्रसवैः पुष्पैराहतास्तस्य रघोर्नागा गजाः। 'गजेऽपि नागमातङ्गौ' इत्यमरः। असूययेवाहृतिनिमित्ततया स्पर्धयेव सप्तधैव प्रसुस्रुवुर्मदं ववृषुः। प्रतिगजगन्धाभिमानादिति भावः। 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति पालकाप्ये। करान्नासारन्ध्राभ्यामित्यर्थः ॥ २३ ॥

**अन्वयः**—मदगन्धिभिः, सप्तपर्णानाम्, प्रसवैः, आहताः, तन्नागाः, असूयया, इव, सप्तधा, प्रसुस्रुवुः।

**वाच्य०**—मदगन्धिभिः सप्तपर्णानाम् प्रसवैः आहतैः तन्नागैः असूयया इव सप्तधा एव प्रसुस्रुवे।

**व्याख्या**—मदस्य = दानस्य, गन्ध इव गन्धः = सुरभिः येषां तैस्तथोक्तैः तैः = मदसुरभिभिः, सप्तपर्णानाम् = विषमच्छदानाम्, प्रसवैः = पुष्पैः, आहताः = ताडिताः, तस्य = रघोः, नागाः = गजाः, असूयया = स्पर्धया, इव = यथा, सप्तधा = सप्तस्थानेभ्यः, प्रसुस्रुवुः = मदं ववृषुः।

**समा०**—मदस्येव गन्धो येषां ते मदगन्धिनः, तैः मदगन्धिभिः। तस्य नागाः तन्नागाः।

**अभि०**—रघोः सेनायां वर्तमाना गजाः सप्तपर्णकुसुमानां गन्धं घ्रात्वा अयं वन्यगजमदगन्ध इति स्पर्धयेव करकटादिभ्यः सप्तस्थानेभ्यः मदं ववृषुः।

**हिन्दी**—मद के समान गन्धवाले सप्तपर्ण के कुसुमों की गन्ध सूंघकर रघु की सेना के हाथी 'यह वनले गजों के मद का गन्ध है' इस स्पर्धा से सातों अंगों से मद की वर्षा करने लगे ॥ २३ ॥

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥

**सञ्जीविनी**—सरितो गाधाः सुप्रतराः कुर्वती। पथो मार्गांश्चाश्यानकर्दमाञ्शुष्कपङ्कान्कुर्वती। "संयोगादेरातो धातोर्यण्वतः" इति श्यतेर्निष्ठातस्य नत्वम्। शरच्छरदृतुस्तं रघुं शक्तेरुत्साहशक्तेः प्रथमं प्राग्यात्रायै दण्डयात्रायै चोदयामास प्रेरयामास। प्रभावमन्त्रशक्तिसंपन्नस्य शरत्स्वयमुत्साहमुत्पादयामासेत्यर्थः ॥२४॥

**अन्वयः**—सरितः, गाधाः, कुर्वती, पथः, च आश्यानकर्दमान्, "कुर्वती" शरद्, तम्, शक्तेः, प्रथमम्, यात्रायै, चोदयामास ।

**वाच्य०**—सरितः गाधाः कुर्वत्या शरदा सः शक्तेः प्रथमम् यात्रायै चोदयाञ्चक्रे ।

**व्याख्या**—सरितः = नदीः, गाधाः = सुप्रतराः, कुर्वती = विदधती, पथः = मार्गांश्च, आश्यानः = शुष्कः, कर्दमः = पङ्कं येषां ते आश्यानकर्दमास्तान् तथोक्तान् कुर्वती, शरद् = शरदृतुः, तम् = रघुम्, शक्तेः = उत्साहशक्तेः, प्रथमम् = ाक्, यात्रायै = विजययात्रायै, चोदयामास = प्रेरयामास ।

**समा०**—आसमन्तात् श्यानः कर्दमः येषां ते आश्यानकर्दमाः तान्, आश्यान-कर्दमान् ।

**अभि०**—शरत्काले नद्यः सुप्रतराः सम्पन्नाः, मार्गाश्च कर्दमरहिता जाताः। एवं शरदा शक्तियुक्तस्य रघोर्मनसि महोत्साहः समजनि ।

**हिन्दी**—शरद् आ जाने पर नदियाँ सुगमतापूर्वक पार करने योग्य हो गईं तथा मार्गों के कीचड़ सूख गये । इस प्रकार शरद् ऋतु ने प्रभावशक्तिसम्पन्न रघु के हृदय में विजय यात्रा के लिये उत्साह भर दिया ॥२४॥

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥२५॥

**सञ्जीविनी**—वाजिनामश्वानां नीराजनाविधौ नीराजनाख्ये शांतिकर्मणि सम्यग्विधिवद्धुतो होमसमिद्धो वह्निः । प्रगता दक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः। प्रदक्षिणा यार्चिर्ज्वाला तस्या व्याजेन हस्तेनेव तस्मै जयं ददौ । उक्तञ्चाहवयात्रायाम् 'इद्धः प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररशनां वशगां करोति' इति । वाजिग्रहणं गजादीनामप्युपलक्षणम्, तेषामपि नीराजनाविधानात् ॥

**अन्वयः**—वाजिनीराजनाविधौ, सम्यग्, हुतः, वह्निः, प्रदक्षिणार्चिर्व्याजेन, हस्तेन, इव, तस्मै, जयम्, ददौ ।

**वाच्य०**—हुतेन, वह्निना, प्रदक्षिणार्चिर्व्याजेन, हस्तेन, इव, जयः, ददे ।

**व्याख्या**—वाजिनां = घोटकानां यो नीराजनाविधिः = नीराजनाख्यशान्ति-कर्म तस्मिन् वाजिनीराजनाविधौ, सम्यक् = यथाशास्त्रम्, हुतः = तर्पितः, वह्निः = अग्निः, प्रगता दक्षिणं प्रदक्षिणम्, प्रदक्षिणं, यार्चिः = ज्वाला तस्या व्याजः = मिषः,

तेन प्रदक्षिणार्चिर्व्याजेन, हस्तेव = स्वकरेण, इव = यथा, तस्मै = रघवे, जयं = विजयं ददौ = दत्तवान् ।

समा०—नीराजनाया विधिः नीराजनाविधिः, वाजिनां नीराजनाविधिः वाजिनीराजनाविधिः, तस्मिन् वाजिनीराजनाविधौ । प्रगता दक्षिणं प्रदक्षिणम्, प्रदक्षिणम् अर्चिः प्रदक्षिणार्चिः, प्रदक्षिणार्चिषः व्याजः प्रदक्षिणार्चिर्व्याजः, तेन प्रदक्षिणार्चिर्व्याजेन ।

अभि०—यदा रघुः वाजिनीराजनाख्यं शान्तिकर्म कुर्वन् वह्नौ हवनीयं द्रव्यं चिक्षेप तदैव वह्निः प्रदक्षिणज्वालया तस्मै स्वकरेणेव विजयं प्रदत्तवान् ।

हिन्दी—जब कि रघु ने नीराजनाख्य शान्तिकर्म करते हुए अग्नि में हवन किया तभी अग्नि की ज्वाला दाईं ओर को निकली मानो उसने रघु को अपने हाथ से ही विजय प्रदान किया ॥२५॥

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥२६॥

सञ्जीविनी—गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गं च येन स गुप्तमूलप्रत्यन्तः । शुद्धपार्ष्णिरुद्धतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा । अयान्वितः शुभदैवान्वितः । 'अयः शुभावहो विधिः' इत्यमरः । स रघुः षड्विधं मौलभृत्यादिरूपं बलं सैन्यम् । 'मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्' इति कोशः । आदाय दिशां जिगीषया जेतुमिच्छया प्रतस्थे चचाल ॥२६॥

अन्वयः—गुप्तमूलप्रत्यन्तः, शुद्धपार्ष्णिः, अयान्वितः, सः, षड्विधं, बलम्, आदाय, दिग्जिगीषया, प्रतस्थे ।

वाच्य०—गुप्तमूलप्रत्यन्तेव, शुद्धपार्ष्णिना, अयान्वितेन, तेन, षड्विधम्, बलम्, आदाय, दिग्जिगीषया, प्रतस्थे ।

व्याख्या—गुप्तौ = रक्षितौ, मूलं = स्वनिवासस्थानं, प्रत्यन्तः = प्रान्तदुर्गं च येन सः गुप्तमूलप्रत्यन्तः, शुद्धः = उद्धृतः, पार्ष्णिः = पृष्ठशत्रुः येन तादृशः, अयेन = शुभावहविधिना, अन्वितः = युक्तः, सः = रघुः, षड्विधम् = मौलभृत्यादिषट्प्रकारकम्, बलम् = सेनाम्, आदाय = गृहीत्वा, दिशां = काष्ठानां जेतुमिच्छा, जयकरणाभिलाषः, तया दिग्जिगीषया प्रतस्थे = प्रचचाल ।

**समा०**—मूलञ्च प्रत्यन्तश्च मूलप्रत्यन्तौ, गुप्तौ मूलप्रत्यन्तौ यस्य सः गुप्तमूलप्रत्यन्तः। शुद्धः पार्ष्णिः यस्य सः शुद्धपार्ष्णिः। अयेन अन्वितः अयान्वितः। षड् विधाः यस्य तत् षड्विधम्, तत् षड्विधम्। जेतुमिच्छा जिगीषा, दिशां जिगीषा दिग्जिगीषा, तया दिग्जिगीषया।

**अभि०**—स्वराष्ट्रप्रबन्धं सम्पाद्य पृष्ठशत्रुं च व्यापाद्य शुभावहविधियुक्तः रघुः दिग्विजयं कर्तुं प्रचचाल।

**हिन्दी**—अपने राज्य का प्रबन्ध करके पृष्ठ शत्रुओं को मारकर मंगलाचार पूर्वक छः प्रकार की सेना साथ लेकर राजा रघु विजय यात्रा के लिये चल पड़े॥

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम्॥२७॥

**सञ्जीविनी**—पौरयोषितस्तं प्रयान्तं रघुं लाजैराचारलाजैः। मन्दरोद्धूतैः पृषतैर्बिन्दुभिः। क्षीरोर्मयः क्षीरसमुद्रोर्मयोऽच्युत विष्णुमिव। अवाकिरन्पर्यक्षिपन्॥

**अन्वयः**—वयोवृद्धाः, पौरयोषितः, तम्, लाजैः, मन्दरोद्धूतैः, पृषतैः,क्षीरोर्मयः, अच्युतम्, इव, अवाकिरन्।

**वाच्य०**—वयोवृद्धाभिः, पौरयोषिद्भिः, सः क्षीरोर्मिभिः, अच्युतः, इव अवाकीर्यत।

**व्याख्या**—वयसा = अवस्थया, वृद्धाः = जीर्णाः इति वयोवृद्धाः, पुरे भवाः पौराः, तेषां योषितः = स्त्रियः, तम् = रघुम्, लाजैः = भृष्टधान्यविशेषैः मन्दरादुद्धूतैः = मन्दराचलादुत्पन्नैः, पृषतैः = बिन्दुभिः, क्षीरोर्मयः = क्षीरसागरवीचयः, अच्युतम् = भगवन्तं विष्णुमिव, अवाकिरन् = ववृषुः।

**समा०**—वयसा वृद्धाः वयोवृद्धाः। पुरे भवाः पौराः, पौराणां योषितः पौरयोषितः। मन्दरेण उद्धूताः मन्दरोद्धूताः, तैः मन्दरोद्धूतैः। क्षीरस्य ऊर्मयः क्षीरोर्मयः। न च्युतः अच्युतः, तम् अच्युतम्।

**अभि०**—दिग्विजयार्थं गच्छतो रघोरुपरि पौरवृद्धा योषितस्तथा लाजान्ववृषुर्यथा समुद्रमन्थनसमयेऽच्युतस्योपरि क्षीरसागरवीचयः मन्दराचलादुत्पन्नान् जलबिन्दून्ववृषुः।

**हिन्दी**—दिग्विजय के लिये प्रस्थान करते समय राजा रघु के ऊपर नागरिकों की वृद्धाओं ने इस प्रकार खीलों की वर्षा की जिस प्रकार समुद्र मन्थन के

समय समुद्र की तरङ्गों ने मन्दराचल से उत्पन्न जल के बिन्दुओं की भगवान् अच्युत के ऊपर वर्षा की थी ॥२७॥

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥२८॥

**सञ्जीविनी**—प्राचीनबर्हिर्नाम कश्चिन्महाराज इति केचित् । प्राचीनबर्हिरिन्द्रः 'पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिः स्मृतः' इतीन्द्रपर्यायेषु हलायुधाभिधानात् । तेन तुल्यः स रघुः । अनिलेनानुकूलवातेनोद्धूतैः केतुभिर्ध्वजैरहितान् रिपूंस्तर्जयन्निव भर्त्सयन्निव तर्जिभर्त्स्योरनुदात्तेत्त्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति वामनः । प्रथमं प्राचीं दिशं ययौ ॥२८॥

**अन्वयः**—प्राचीनबर्हिषा, तुल्यः, सः, अनिलोद्धूतैः, केतुभिः, अहितान् तर्जयन्, इव, प्रथमम्, प्राचीम्, ययौ ।

**वाच्य०**—प्राचीनबर्हिषा, तुल्येन, तेन तर्जयता, इव, प्रथमं, प्राची, यये ।

**व्याख्या**—प्राचीनबर्हिषा = इन्द्रेण, तुल्यः = समः, सः = रघुः, अनिलेन = पवनेन, उद्धूतैः = उत्क्षिप्तैः, केतुभिः = ध्वजैः, अहितान् = शत्रून्, तर्जयन् = भर्त्सयन्, इव = यथा, प्रथमम् = प्राक्, प्राचीम् = पूर्वाम्, ययौ = चचाल ।

**समा०**—अनिलेन उद्धूताः अनिलोद्धूताः, तैः अनिलोद्धूतैः । न हिताः अहिताः, तान् अहितान् ।

**अभि०**—इन्द्रतुल्यपराक्रमः स रघुः स्वकीयैः सेनाध्वजैः शत्रून् भर्त्सयन् इव प्रथमं पूर्वां दिशं, प्रतस्थे ।

**हिन्दी**—इन्द्र के समान पराक्रमी रघु अपनी सेना की ध्वजाओं से शत्रुओं को डराता हुआ सा प्रथम पूर्व की दिशा की ओर चला ॥२८॥

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥२९॥

**सञ्जीविनी**—किं कुर्वन् । स्यन्दनोद्धूतै रजोभिः घनसंन्निभैर्वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैर्गजैश्च यथाक्रमं व्योमाकाशं भुवस्तलमिव भूतलं च व्योमेव कुर्वन् । ययाविति पूर्वेण संबन्धः ॥२९॥

**अन्वयः**—स्यन्दनोद्धूतैः, रजोभिः, घनसंनिभैः, गजैः, च, व्योम, भुवस्तलम् इव, भूतलम्, व्योम, इव, कुर्वन्, ययौ ।

**वाच्य०**—कुर्वता, तेन, यये ।

**व्याख्या**—स्यन्दनैः = रथैः, उद्धूतानि = उत्थापितानि, तैः, रजोभिः = धूलिभिः, घनेन = पयोदेन, सन्निभैः = तुल्यैः, गजैः = सेनाहस्तिभिश्च, व्योम = आकाशम्, भुवः = पृथिव्याः, तलम् = पृष्ठभागम्, भूतलम् = पृथिवीतलम् च, व्योमेव = आकाशमिव, कुर्वन् = संपादयन्, ययौ = जगाम ।

**समा०**—स्यन्दनेन उद्धूतानि स्यन्दनोद्धूतानि, तैः स्यन्दनोद्धूतैः । घनेन सन्निभाः घनसन्निभाः, तैः घनसन्निभैः । भुवः तलं भूतलम्, तत् भूतलम् ।

**अभि०**—राजा रघुः स्वकीयैः सैन्यगजैर्भूतलं घनयुक्तं व्योमेव तथा स्यन्दनोत्थापितधूलिभिः व्योम धूलियुक्तं भूतलमिव कुर्वन् ययौ ।

**हिन्दी**—राजा रघु अपनी सेना के गजों द्वारा भूतल को बादलों से घिरे आकाश के समान तथा रथों के पहियों से उठाई हुई धूल से आकाश को भूतल के समान बनाता हुआ पूर्व दिशा की ओर चल पड़ा ॥२९॥

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥३०॥

**सञ्जीविनी**—अग्रे प्रतापस्तेजोविशेषः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः । ततः शब्दः सेनाकलकलः । तदनन्तरं परागो धूलिः । 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः । पश्चाद्रथादि रथाश्वादिकं चतुरंगबलम् । 'रथानीकम्' इति पाठे इतिशब्दाध्याहारेण योज्यम् । इतीत्थं चतुःस्कन्धेव चतुर्व्यूहेव । 'स्कन्धः प्रकाण्डे कायांशे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । सा चमूर्ययौ ।

**अन्वयः**—अग्रे, प्रतापः, ततः, शब्दः, तदनन्तरम्, परागः, पश्चात्, रथादि, इति, चतुःस्कन्धा, इव, सा, चमूः, ययौ ।

**वाच्य०**—अग्रे, प्रतापेन, ततः, शब्देन, तदनन्तरम्, परागेण, पश्चात्, रथादिना इति तया चम्वा चतुःस्कन्धया इव यये ।

**व्याख्या**—अग्रे = सर्वतोऽग्रे, प्रतापः = तेजः, ततः = पश्चात्, शब्दः = सेनाध्वनिः, तस्यानन्तरं = पश्चात्, परागः = धूलिः, पश्चात् = तदग्रे, रथादि = स्यन्द-

वादि इति = इत्थम्, चत्वारः चतुःसंख्यकाः स्कन्धाः = व्यूहा यस्यास्तादृशी, इव = यथा सा चमूः = सेना, ययौ = जगाम ।

**समा०**–तस्य अनन्तरः तदनन्तरः, तं तदनन्तरम् । रथ आदिर्यस्य तत् रथादि । चत्वारः स्कन्धाः यस्याः सा चतुःस्कन्धा ।

**अभि०**—प्रथमं तेजस्ततः सेनाकोलाहलस्ततो रथधूलिस्ततः स्यन्दनादयः एवं व्यूहचतुष्टयवती रघोः सेना दिग्विजयार्थं पूर्वं प्राचीमुद्दिश्य प्रस्थिता ।

**हिन्दी**—पहले तेज तब सेना का कोलाहल उसके पीछे रथों की धूलि तब रथ इस प्रकार रघु की सेना चार विभागों में विभक्त होकर चल पड़ी ॥३०॥

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥३१॥

**सञ्जीविनी**— स रघुः शक्तिमत्त्वात्समर्थत्वान्मरुपृष्ठानि विर्जलस्थानानि । 'समानौ मरुधन्वानौ' इत्यमरः । उदम्भांस्युद्भूतजलानि चकार । नाव्या नौभिस्तार्या नदीः । 'नाव्यं त्रिलिंगं नौतार्ये' इत्यमरः । 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यः' इत्यादिना यत्प्रत्ययः । सुप्रतराः सुखेन तार्याश्चकार । विपिनान्यरण्यानि । 'अटव्यरण्यं विपिनम्' इत्यमरः । प्रकाशानि निर्वृक्षाणि चकार । शक्त्युत्कर्षात्तस्यागम्यं किमपि नासीदिति भावः ॥३१॥

**अन्वयः**—सः, शक्तिमत्त्वात्, मरुपृष्ठानि, उदम्भांसि, चकार, नाव्याः, नदीः, सुप्रतराः, चकार, विपिनानि, प्रकाशानि, चकार ।

**वाच्य०**—तेन, शक्तिमत्त्वात्, मरुपृष्ठानि, उदम्भांसि, नाव्याः, नद्यः, सुप्रतराः, विपिनानि, प्रकाशानि, च, चक्रिरे ।

**व्याख्या**—सः = रघुः शक्तिः = सामर्थ्यमस्यास्तीति तस्य भावस्तत्त्वं तस्मात् शक्तिमत्त्वात् = सामर्थ्यशालित्वात्, मरुपृष्ठानि = धन्वप्रदेशान्, उद्गतानि = उत्पन्नानि अम्भांसि = जलानि, येषु तानि चकार = अकरोत्, नावा तार्या नाव्याः नौकाद्वारा तरणयोग्याः, नदीः = सरितः, सुप्रतराः = सुखेन तर्तुं शक्याः, चकार, तथा विपिनानि = वनानि, प्रकाशानि = प्रकाशयुक्तानि, चकार = अकरोत् ।

**समा०**—शक्तिः अस्यातीति शक्तिमान्, शक्तिमतः भावः शक्तिमत्त्वम्, तस्मात् शक्तिमत्त्वात् । मरोः पृष्ठानि मरुपृष्ठानि, तानि मरुपृष्ठानि । उद्भूतं

अम्भः येषु तानि उदम्भांसि, तानि उदम्भांसि। सुखेन प्रतार्याः, शक्याः सुप्रतराः, ताः सुप्रतराः। प्रकाश एषामस्तीति प्रकाशानि 'अर्श आद्यजन्तम्'।

अभि०-सर्वसामर्थ्यशालिना रघुणा स्वविजययात्रासमये मरुप्रदेशाः जलयुक्ताः कृताः, तथा नावा तरणयोग्या नद्यः सुखतरणयोग्याः कृताः। वनानि च वृक्षच्छेदादिना प्रकाशयुक्तानि कृतानि।

हिन्दी—सामर्थ्य शाली रघुने विजय यात्रा के समय मरुप्रदेश जलयुक्त बना दिये, नाव से पार उतरने योग्य नदियाँ पुल आदि बँधवा कर सुखसे पार उतरने योग्य बना दी तथा घने वनों को उनके वृक्ष कटवा कर प्रकाशयुक्त बनवा दिया।।

स सेनां महतीं कर्षन्पूर्वसागरगामिनीम्।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः॥ ३२॥

सञ्जीविनी—महतीं सेनां पूर्वसागरगामिनीं कर्षन्स रघुः। हरस्य जटाभ्यो भ्रष्टां गङ्गां कर्षन्। सापि पूर्वसागरगामिनी। भगीरथो नाम कश्चित्कपिलतेजोदग्धानां सगराणां नप्ता तत्पावनाय हरकिरीटाद् गङ्गां प्रवर्तयिता राजा। यत्संबन्धाद् गङ्गा च भागीरथीति गीयते॥ ३२॥

अन्वयः—पूर्वसागरगामिनीम्, महतीम्, सेनाम्, कर्षन्, सः, हरजटाभ्रष्टाम्, 'पूर्वसागरगामिनीम्' गङ्गां कर्षन् भगीरथः, इव, बभौ।

वाच्य०—कर्षता तेन भगीरथेन, इव, बभे।

व्याख्या—पूर्वः = पूर्वस्यां दिशि वर्तमानः, सागरः = समुद्रः, तं गच्छति = याति तच्छीलाम् पूर्वसागरगामिनीम्, महतीम् = बृहतीम्, सेनाम् = चमूम्, कर्षन् = नयन्, सः = रघुः, हरस्य = शिवस्य, जटाभ्यः = सटाभ्यः कपर्दादित्यर्थः, भ्रष्टाम् = निर्गलिताम् 'पूर्वसागरगामिनीम्' गङ्गाम् = भागीरथीम्, कर्षन् = नयन्, भगीरथः = सूर्यवंशीय राजाविशेष इव = यथा बभौ = शुशुभे।

समा०—पूर्वश्चासौ सागरश्च पूर्वसागरः, पूर्वसागरं गन्तुं शीलमस्या इति पूर्वसारगगामिनी, तां पूर्वसागरगामिनीम्। हरस्य जटा हरजटा, हरजटायाः भ्रष्टा हरजटाभ्रष्टा, तां हरजटाभ्रष्टाम्।

अभि०—दिग्विजयार्थं प्राचीं प्रस्थितो रघुः स्वसेनां पूर्वसागरपर्यन्तं नयन् शिवकपर्दगलितां गङ्गां पूर्वसागरं नयन् भगीरथ इव शोभामुवाह।

**हिन्दी**—दिग्विजय के लिये प्रस्थान किये हुए रघुने अपनी सेना को पूर्व सागर की ओर ले जाते हुए, शिव के जटाजूट से निकली हुई गङ्गा को पूर्व सागर की ओर ले जाते हुए भगीरथ राजा के समान शोभा पाई॥ ३२॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः॥ ३३॥

**सञ्जीविनी**—'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः। फलं लाभम्। वृक्षपक्षे प्रसवं च। त्याजितैः। त्यजेर्ण्यन्ताद्द्विकर्मकादप्रधाने कर्मणि क्तः। उत्खातैः स्वपदाच्च्यावितैः अन्यत्रोत्पाटितैः। बहुधा भग्नैः रणे जितैः। अन्यत्र छिन्नैः। नृपैः। पादपैर्दन्तिनो गजस्येव। तस्य रघोर्मार्ग उल्बणः प्रकाशः आसीत्। 'प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्' इति यादवः॥ ३३॥

**अन्वयः**—फलम्, त्याजितैः, उत्खातैः, बहुधा, भग्नैश्च, नृपैः, पादपैः, दन्तिनः, इव, तस्य, मार्गः, उल्बणः, आसीत्।

**वाच्य०**—मार्गेण उल्बणेन इव अभूयत।

**व्याख्या**—फलम्=लाभं प्रसवं च, त्याजितैः=विसर्जितैः, उत्खातैः=उत्पाटितैः,स्वस्थानाच्च्यावितैश्च, बहुधा=बहुप्रकारेण, भग्नैः=छिन्नैः पक्षे रणजितैः च नृपैः=राजभिः पादैः पिबन्तीति पादपास्तैः पादपैः=वृक्षैः, दन्तिनः=गजस्य, इव=यथा, तस्य=रघोः मार्गः=पन्थाः, उल्बणः=स्पष्टः, आसीत्=अभूत्।

**समा०**—पादैः 'मूलैः' पिबन्तीति पादपाः, तैः पादपैः। नॄन् पान्तीति नृपाः, तैः नृपैः। दन्तः अस्यास्तीति दन्ती तस्य दन्तिनः। बहुभिःप्रकारैः बहुधा।

**अभि०**—यथा कश्चिद् बलिष्ठो गजो मार्गे वर्तमानान् वृक्षान् फलरहितान् विधाय कांश्चिच्चोन्मूलितान्कृत्वा अपरांस्तु चूर्णीकृत्य स्वपथं निष्प्रतिबन्धं करोति तथैव रघुणापि, कांश्चिद्राज्ञो लाभरहितान् कृत्वा कांश्चिच्च पदभ्रष्टान्विधाय कांश्चिच्च युद्धे हत्वा, स्वमार्गः कण्टकशून्यः कृतः।

**हिन्दी**—जैसे कि कोई बलवान् गजेन्द्र किन्हीं वृक्षों को फल रहित करके किन्हीं को उखाड़ कर तथा किन्हीं को चूर्णित करके अपना मार्ग साफ कर लेता है उसी प्रकार रघु ने भी अपना मार्ग, कुछ राजाओं का लाभ छीनकर, कुछ को पदच्युत करके तथा कुछ को युद्ध में जीतकर, कण्टक रहित बनाया॥ ३३॥

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥

**सञ्जीविनी**—जयी जयनशीलः "जिदृक्षिविश्रि" इत्यादिनेनिप्रत्ययः । स रघुरेवम् । पुरोभवान्पौरस्त्यान्प्राच्यान् । "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः । तांस्तान् सर्वानित्यथः । वीप्सायां द्विरुक्तिः । जनपदान्देशानाक्रामंस्तालीवनैः श्यामं महोदधेरुपकण्ठमन्तिकं प्राप ॥ ३४ ॥

**अन्वयः—जयी, एवम्, पौरस्त्यान्, तान्, तान्, जनपदान्, आक्रामन्, तालीवनश्यामम् महोदधेः, उपकण्ठम्, प्राप ।**

**वाच्य०**—जयिना आक्रामता तालीवनश्यामः उपकण्ठः प्रापे ।

**व्याख्या**—जयी = जयनशीलः, रघुः, एवम् = इत्थम्, पुरोभवाः पौरस्त्याः तान् पौरस्त्यान् = पूर्वदिग्भवान्, जनपदान् = देशान्, आक्रामन् = स्वायत्तीकुर्वन्, तालीनां = तालवृक्षाणां, वनानि = काननानि तैः श्यामं = कृष्णम्, महांश्चासावुदधिस्तस्य महोदधेः = सागरस्य, उपकण्ठम् = समीपम्, प्राप = प्राप्नोत् ।

**समा०**—जेतुं शीलमस्येति जयी । तालीनां वनानि तालीवनानि तालीवनैः श्यामः तालीवनश्यामः तं तालीवनश्यामम् । उपगतः कण्ठमित्युपकण्ठः,तमुपकण्ठम्। महांश्चासौ उदधिश्च महोदधिः तस्य महोदधेः ।

**अभि०**—एवं रघुः सर्वत्र विजयं कुर्वन् तालीवनेन कृष्णं समुद्रस्य तटसमीपं जगाम ।

**हिन्दी**—इस प्रकार रघु पूर्व दिशा में सर्व विजयी होते हुए तालीवन से कृष्णवर्ण वाले समुद्र तट पर पहुँचे ॥ ३४ ॥

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥

**सञ्जीविनी**—अनम्राणाम् । कर्मणि षष्ठी । समुद्धर्तुरुन्मूलयितुस्तस्माद्रघोः सकाशात् । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी । सिन्धुरयान्नदीवेगादिव सुह्मैः सुह्मदेशीयैः सुह्मादयः शब्दा जनपदवचनाः क्षत्रियमाचक्षते । वैतसीं वेतसः सम्बन्धिनीं वृत्तिम् । प्रणतिमित्यर्थः । आश्रित्य । आत्मा संरक्षितः । अत्र कौटिल्यः—'बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्ममातिष्ठेत्' इति ।३५।

**अन्वयः**—अनम्राणाम्, समुद्धर्तुः, तस्मात्, सिन्धुरयात्, इव, सुह्मैः, वैतसीम्, वृत्तिम्, आश्रित्य, आत्मा, संरक्षितः ।

**वाच्य०**—सुह्माः, आत्मानं संरक्षितवन्तः ।

**व्याख्या**—न नम्रा अनम्रास्तेषाम् अनम्राणाम् = उद्धतानाम् समुद्धर्तुः = समुत्पाटयितुः, तस्मात् = रघोः, सिन्धोः = समुद्रस्य यो रयो वेगस्तस्मात् सिन्धुरयात्, इव = यथा, सुह्मैः = सुह्मदेशीयैः क्षत्रियैः, वेतस इयं वैतसी ताम् = वेतससम्बन्धिनीम् प्रणतिमित्यर्थः, वृत्तिम् = व्यवहारम्, आश्रित्य = अवलम्ब्य, आत्मा = देहः, संरक्षितः = परिपालितः ।

**समा०**—न नम्राः अनम्राः, तेषाम् अनम्राणाम् । सिन्धोः रयः सिन्धुरयः, तस्मात् सिन्धुरयात् । अततीत्यात्मा ।

**अभि०**—यथा सिन्धुवेगे आगते वेतसा नम्रीभूय स्वरक्षा क्रियते उद्धता वृक्षास्तु भग्ना भवन्ति तथैव सुह्मदेशीयैः क्षत्रियैः रघुपादयोः प्रणतिं कृत्वा स्वरक्षा कृता ।

**हिन्दी**—जैसे कि समुद्र के वेग के आने पर वेतस वृक्ष झुककर अपनी रक्षा कर लेते हैं वैसे ही सुह्मदेशीय क्षत्रियों ने रघु के आगे प्रणिपात के द्वारा अपनी रक्षा की ॥३५॥

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ ३६ ॥

**सञ्जीविनी**—नेता नायकः स रघुर्नौभिः साधनैरुद्यतान्सन्नद्धान्वङ्गान्राज्ञस्तरसा बलेन । 'तरसी बलरंहसी' इति यादवः । उत्खायोन्मूल्य गंगायाः स्रोतसां प्रवाहाणामन्तरेषु द्वीपेषु जयस्तम्भान्निचखान । स्थापितवानित्यर्थः ॥३६॥

**अन्वयः**—नेता, सः, नौसाधनोद्यतान्, वङ्गान्, तरसा, उत्खाय, गङ्गास्रोतोऽन्तरेषु, जयस्तम्भान्, निचखान ।

**वाच्य०**—नेत्रा तेन जयस्तम्भाः निचखिनरे ।

**व्याख्या**—नेता = नायकः, सः = रघुः, नावः नौका एव साधनानि उपायास्तैरुद्यतान् = सन्नद्धान्, वङ्गान् = वङ्गदेशीयान् राज्ञः, तरसा = बलेन, उत्खाय = उत्पाट्य उन्मूलनं कृत्वेत्यर्थः, गङ्गायाः = भागीरथ्याः स्रोतांसि = प्रवाहाः, तेषामन्तरेषु मध्यद्वीपेषु जयस्तम्भान् = विजययूपान् निचखान = निखातवान् ।

**समा०**—नाव एव साधनानि नौसाधनानि, नौसाधनैः उद्यताः नौसाधनोद्यताः, तान् नौसाधनोद्यतान्। वङ्गानां राजानः वङ्गाः, तान् वङ्गान्। गङ्गायाः स्रोतांसि गङ्गास्रोतांसि गङ्गास्रोतसामन्तराणि गङ्गास्रोतोन्तराणि, तेषु गङ्गास्रोतोन्तरेषु। जयस्य स्तम्भाः जयस्तम्भाः तान् जयस्तम्भान्।

**अभि०**—नौकारूपयुद्धसाधनसन्नद्धान् वङ्गान् बलेन विजित्य रघुः गङ्गाप्रवाहमध्यस्थेषु द्वीपेषु स्वविजयस्मारकान् स्तम्भान् निखातवान्।

**हिन्दी**—नौका रूपी युद्धसाधन से सम्पन्न वङ्गीय राजाओं को रघु ने बल पूर्वक जीतकर गंगाप्रवाहमध्यस्थ द्वीपों में अपनी विजय के स्मारक स्तम्भ गड़वाये ॥३६॥

आपादपद्मप्रणताः कलमा इव ते रघुम्।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥३७॥

**सञ्जीविनी**—आपादपद्ममङ्घ्रिपद्मपर्यन्तं प्रणताः अतएवोत्खाताः पूर्वमुद्धृता अपि प्रति रोपिता पश्चात्स्थापितास्ते वंगाः। कलमा इव शालिविशेषा इव। 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः। तेऽप्यापादपद्मं पादपद्ममूलपर्यन्तं प्रणताः। 'पादो बुध्ने तुरीयांशशैलप्रत्यन्तपर्वताः' इति विश्वः। उत्खातप्रतिरोपिताश्च। रघुं फलैः धनैः। अन्यत्र सस्यैः। संवर्धयामासुः। 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः। सस्ये' इति केशवः ॥३७॥

**अन्वयः**—आपादपद्मप्रणताः, 'अतएव', उत्खातप्रतिरोपिताः, ते, कलमाः, इव, रघुम्, फलैः, संवर्धयामासुः।

**वाच्य०**—आपादपद्मप्रणतैः, उत्खातप्रतिरोपितैः, कलमैः, इव तैः, रघुः, फलैः संवर्धयामासे।

**व्याख्या**—पाद एव पद्मं पादपद्मं तन्मर्यादीकृत्य प्रणताः आपादपद्मप्रणताः =चरणकमलपर्यन्तनम्राः, पूर्वमुत्खाताः पश्चात्प्रतिरोपिता इति ते उत्खातप्रतिरोपिताः=उन्मूलितस्थापिताः, कलमाः=शालिविशेषाः, इव=यथा, ते=वङ्गीयाः, रघुम्, फलैः=धनैः सस्यैश्च, संवर्धयामासुः=समवर्धयन्।

**समा०**—पादः पद्ममिव पादपद्मम्, पादपद्मं मर्यादीकृत्य आपादपद्मम्, आपादपद्मं प्रणताः आपादपद्मप्रणताः। उत्खाताश्च पश्चात् प्रतिरोपिताश्च उत्खातप्रतिरोपिताः।

अभि०—यथा कलमाख्याः शालिविशेषाः पूर्वमुत्पाट्य पश्चात्प्रतिरोपिताः सस्यसमृद्धिं वर्धयन्ति तथैव पूर्वं स्वस्थानाच्च्याविताः पश्चात्प्रतिष्ठापिता वङ्गीया रघुं धनादिभिः संवर्धयामासुः।

हिन्दी—जैसे कि कलम नामक शालिविशेष पहले उखाड़ कर पुनः प्रतिरोपित किये हुए अधिक फलते हैं उसी प्रकार प्रथम पदभ्रष्ट किये जाकर पुनः प्रतिष्ठापित किये हुए वङ्गीय राजाओं ने रघु को धन से पूर्ण किया ॥३७॥

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥३८॥

सञ्जीविनी—स रघुर्बद्धा द्विरदा एव सेतवो यैस्तैः सैन्यैः कपिशां नाम नदीं तीर्त्वा। 'करभाम्' इति केचित्पठन्ति। उत्कलै राजभिरादर्शितपथः संदर्शितमार्गः सन्। कलिगाभिमुखो ययौ ॥३८॥

अन्वयः—सः, बद्धद्विरदसेतुभिः, सैन्यैः, कपिशाम्, तीर्त्वा, उत्कलादर्शितपथः सन्, कलिङ्गाभिमुखः, ययौ।

वाच्य०—तेन, उत्कलादर्शितपथेन, कलिङ्गाभिमुखेन, ययौ।

व्याख्या—सः = रघुः, बद्धाः = पंक्तिरूपेणावस्थिताः, द्विरदाः = गजा एव सेतवः = आलयः यैस्तादृशैः, सैन्यैः = सेनापुरुषैः, कपिशाम् = तन्नाम्नीम् नदीम्, तीर्त्वा = समुत्तीर्य, उत्कलैः = उत्कलदेशीयैरासमन्तात् दर्शितः = निवेदितः पन्था मार्गो यस्य तादृशः सन् कलिङ्गस्याभिमुखः कलिगाभिमुखः = कलिङ्गदेशं लक्ष्यीकृत्य, ययौ = जगाम।

समा०—द्वौ रदौ येषां ते द्विरदाः, द्विरदा एव सेतवः द्विरदसेतवः, बद्धाः द्विरदसेतवः यैस्तानि बद्धद्विरदसेतूनि, तैः बद्धद्विर-सेतुभिः। उत्कलानां राजानः उत्कलाः, उत्कलैः आदर्शितः पन्थाः यस्य सः उत्कलादर्शितपथः। कलिङ्गानाम् अभि (समक्षं) मुखं यस्य सः कलिङ्गाभिमुखः।

अभि०—स रघुः स्वसेनागजैरेव सेतुं निर्माय कपिशां तीर्त्वा उत्कलदेशीयै राजभिः प्रदर्शितमार्गः सन् कलिङ्गदेशं लक्ष्यीकृत्य जगाम।

हिन्दी—राजा रघु ने अपनी सेना के गजों द्वारा पुल का निर्माण करके कपिशा नदी को पार किया। उत्कल देशवासियों से आगे का मार्ग ज्ञात करके फिर कलिङ्ग की ओर प्रस्थान किया ॥३८॥

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अंकुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥३९॥

**सञ्जीविनी**—स रघुर्महेन्द्रस्य कुलपर्वतविशेषस्य । 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इति विष्णुपुराणात् । मूर्ध्नि तीक्ष्णं दुःसहं प्रतापम् । यन्ता सारथिर्गम्भीरवेदिनो द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितमंकुशमिव । न्यवेशयन्निक्षिप्तवान् । 'त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति सा स्याद्गम्भीरवेदिता ॥' इति राजपुत्रीये । 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥' इति मृगचर्मीये ॥३९॥

**अन्वयः**—**स, महेन्द्रस्य, मूर्ध्नि, तीक्ष्णम्, प्रतापम्, यन्ता, गम्भीरवेदिनः, द्विरदस्य, मूर्ध्नि, तीक्ष्णम्, अङ्कुशम्, इव, न्यवेशयत् ।**

**वाच्य०**—तेन, तीक्ष्णः, प्रतापः, यन्त्रा, तीक्ष्णः, अङ्कुशः, इव, न्यवेश्यत ।

**व्याख्या**—सः = रघुः, महेन्द्रस्य = कुलपर्वतविशेषस्य, मूर्ध्नि = मस्तके, शिखरे च, तीक्ष्णम् = तीव्रम्, प्रतापम् = तेजः, यन्ता = हस्तिपकः, गम्भीरं वेत्ति तादृशस्य गम्भीरवेदिनः = गजविशेषस्य, द्विरदस्य = गजस्य, मूर्ध्नि, तीक्ष्णं = तीव्रं अङ्कुशम् = सृणिमिव न्यवेशयत् = निवेशयामास ।

**समा०**—गम्भीरं वेत्तीति गम्भीरवेदी, तस्य गम्भीरवेदिनः । द्वौ रदौ यस्य सः द्विरदः, तस्य द्विरदस्य ।

**अभि०**—यथा हस्तिपको गम्भीरवेदिनो द्विपस्य मूर्ध्नि तीक्ष्णसृणिं निवेशयति तथैव रघुणापि महेन्द्राचलस्य शिखरे स्वतेजो न्यवेशि ।

**हिन्दी**—जैसे हाथीवान् गम्भीरवेदी हाथी के मस्तक में अङ्कुश घुसेड़ देता है इसी प्रकार राजा रघु ने भी अपना तेज महेन्द्राचल पर्वत के शिखर पर प्रतिष्ठापित किया ॥३९॥

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥४०॥

**सञ्जीविनी**—गजसाधनः पुष्कलगजसामग्रीवान् कालिङ्गः कलिङ्गानां राजा । 'द्व्यञ्मगधकलिङ्ग' इत्यनेनाण्प्रत्ययः । अस्त्रैरायुधैस्तं रघुम् । पक्षाणां छेदे भेदे

उद्यनमृद्युक्तं शक्रं शिलावर्षी पर्वत इव । प्रतिजग्राह प्रत्यभियुक्तवान् । अभिजगामेत्यर्थः ।।४०।।

**अन्वयः**—गजसाधनः, कालिङ्गः, अस्त्रैः, तम्, पक्षच्छेदोद्यतम्, शक्रम् शिलावर्षी, पर्वत, इव, प्रतिजग्राह ।

**वाच्य०**—गजसाधनेन, कालिङ्गेन, सः, पक्षच्छेदोद्यतः, शक्रः, शिलावर्षिणा, पर्वतेन, इव, प्रतिजगृहे ।

**व्याख्या**—गजाः=हस्तिन एव साधनानि युद्धोपकरणानि यस्य सः, गजसाधनः कालिङ्गः=कलिङ्गस्थो राजा, अस्त्रैः=आयुधैः, तम्=रघुम्, पक्षाणां गरुतां छेदे कर्तने उद्यतः=उद्युक्तः इति पक्षच्छेदोद्यतः, तम् शक्रम्=इन्द्रम्, शिलाः=दृषदः वर्षति तच्छीलः प्रस्तरवर्षणकारी, पर्वतः=गिरिः, इव, प्रतिजग्राह=प्रत्यभियुक्तवान् ।

**समा०**—गजा एव साधनं यस्य सः गजसाधनः । कलिङ्गानां राजा कालिङ्गः । पक्षाणां छेदः पक्षच्छेदः, पक्षच्छेदे उद्यतः पक्षच्छेदोद्यतः, तं पक्षच्छेदोद्यतम् । शिलां वर्षतीति शिलावर्षी ।

**अभि०**—यथा कश्चित् पर्वतः स्वपक्षच्छेदनायोद्यतं शक्रं प्रस्तरैः प्रतिरुरोध तथैव गजसाधनवान् कलिङ्गदेशीयो राजा आयुधैः रघुं प्रत्यभियुक्तवान् ।

**हिन्दी**—जैसे कोई पर्वत अपने पक्ष काटने को सामने आये इन्द्र के ऊपर पत्थरों की वर्षा करता हो उसी प्रकार कलिङ्ग देश के राजा ने रघु के ऊपर शस्त्रों की वर्षा की ।।४०।।

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥

**सञ्जीविनी**—काकुत्स्थो रघुस्तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनम् । लक्षणया वर्षमुच्यते । विषह्य सहित्वा । सद्यथाशास्त्रम् मङ्गलस्नात इव विजयमङ्गलार्थमभिषिक्तः । जयश्रियम् प्रतिपेदे प्राप । 'यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम्' इति यादवः ।। ४१ ।।

**अन्वयः**—काकुत्स्थः, तत्र, द्विषाम्, नाराचदुर्दिनम् विषह्य, सन्मङ्गलस्नातः, इव, जयश्रियम्, प्रतिपेदे ।

**वाच्य०**—काकुत्स्थेन सन्मङ्गलस्नातेन इव जयश्रीः प्रतिपेदे ।

**व्याख्या**—ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः = रघुः, तत्र = महेन्द्राद्रौ द्विषाम् = शत्रूणाम् नाराचानां = बाणानाम्, दुर्दिनम् नाराचदुर्दिनम् = वर्षणदिवसम्, विषह्य = क्षान्त्वा, सच्च तन्मङ्गलं तदर्थं स्नातः = सन्मङ्गलाभिषिक्तः इव जयस्य श्रीस्ताम् जयश्रियम् = विजयलक्ष्मीम् प्रतिपेदे = प्राप।

**समा०**—नाराचानां दुर्दिनं नाराचदुर्दिनम्, तत् नाराचदुर्दिनम्। सच्च तत् मङ्गलञ्च सन्मङ्गलम् सन्मङ्गलाय स्नातः सन्मङ्गलस्नातः। जयस्य श्रीः जयश्रीः, तां जयश्रियम्।

**अभि०**—रघुः महेन्द्राद्रौ शरवर्षणं सहित्वा माङ्गलिकसर्वौषध्यादिभिः कृताभिषेक इव विजयं प्राप।

**हिन्दी**—राजा रघुने महेन्द्राचल पर्वत पर कलिङ्ग देशीय राजाओं की बाणों की वर्षा को सहन करते हुए, मानो माङ्गलिक सर्वौषधि आदि से स्नान कर जयलक्ष्मी प्राप्त की ॥ ४१ ॥

> ताम्बूलीनां दलैस्तत्र रचिताऽऽपानभूमयः।
> नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥

**सञ्जीवनी**—तत्र महेन्द्राद्रौ युध्यन्त इति योधाः। पचाद्यच्। रचिताः कल्पिता आपानभूमयः पानयोग्यप्रदेशा यैस्ते तथोक्ताः संतो नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः सम्पुटकाकारैः पपुः। तत्रविजह्रुरित्यर्थः। शात्रवं यशश्च पपुः। जह्रुरित्यर्थः ॥ ४२ ॥

**अन्वयः**—तत्र, योधाः, रचितापानभूमयः, नारिकेलासवम्, ताम्बूलीनां, दलैः, पपुः, शात्रवम्, यशः, च, पपुः।

**वाच्य०**—योधैः रचितापानभूमिभिः, नारिकेलासवः पपे शात्रवं यशश्च पपे।

**व्याख्या**—तत्र = महेन्द्राद्रौ, योधाः = भटाः रचिता = संपादिता आपानभूमिः सुरापानभूमिर्यैस्तादृशाः रचितापानभूमयः नारिकेलस्यासवः = मद्यं नारिकेलासवः तम्, ताम्बूलीनाम् = नागवल्लीनाम्, दलैः = पत्रैः, पपुः = अपिबन्, शात्रवम् = शत्रोरिदं शात्रवम् = शत्रुसंबन्धि, यशः = कीर्तिम् 'यशःकीर्तिः' इत्यमरः, पपुः।

**समा०**—आपानस्य भूमिः आपानभूमिः रचिता आपानभूमिः यैस्ते रचितापानभूमयः। नारिकेलानामासवः नारिकेलासवः तं नारिकेलासवम्।,

अभि०—तस्मिन्महेन्द्रपर्वते रघुभटा आपानभूमिं विरचय्य ताम्बूलीपत्रैः नारिकेलमद्यमपिबन् शत्रुयशश्च तैः पराभूतम् ।

हिन्दी—उस महेन्द्राचल पर्वत पर रघु के सैनिकों ने मद्यपान योग्य स्थान बनाकर नारियल का आसव ताम्बूल के पत्तों के दोनों में पिया तथा शत्रुओं का यश भी पी लिया अर्थात् हर लिया॥ ४२ ॥

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥४३॥

सञ्जीविनी—धर्मविजयी धर्मार्थं विजयशीलः स नृपो रघुः । गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः । "पूर्वकालैक" इत्यादिना समासः । तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार । धर्मार्थं नतु स्वोपभोगार्थमिति भावः । मेदिनीं तु न जहार । शरणागतवात्सल्यादिति भावः ॥ ४३ ॥

अन्वयः—धर्मविजयी, सः, नृपः, गृहीतप्रतिमुक्तस्य, महेन्द्रनाथस्य, श्रियम्, जहार, मेदिनीम्, तु, न, जहार ।

वाच्य०—धर्मविजयिना, तेन नृपेण श्रीः जह्रे मेदिनी तु न जह्रे ।

व्याख्या—धर्मार्थं विजयी धर्मविजयी = पुण्यजयनशीलः सः, नृपः = राजा रघुः पूर्वं गृहीतः प्रतिबद्धः पश्चात् प्रतिमुक्तः परित्यक्तः तस्य गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य = महेन्द्राधिपस्य, श्रियम् = राज्यलक्ष्मीम्, जहार = अहरत्, मेदिनीम् = पृथिवीम् 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही' इत्यमरः तु, न = नैव जहार ।

समा०—गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः, तस्य गृहीतप्रतिमुक्तस्य। विजयोऽस्यास्तीति विजयी, धर्मार्थं विजयो धर्मविजयी ।

अभि०—धर्मविजयशीलेन रघुणा पूर्वं विजित्य प्रतिबद्धस्य पश्चात् कृपया परित्यक्तस्य महेन्द्राधिपस्य राज्यलक्ष्मीरेवापहृता न तु पृथिवी ।

हिन्दी—धर्मविजयशील राजा रघु ने प्रथम जीतकर पकड़ लिये गये पश्चात् छोड़ दिये गये महेन्द्राधिप की राज्यलक्ष्मी का ही केवल हरण किया, पृथिवी का नहीं ॥ ४३ ॥

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

**सञ्जीविनी**—ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुकश्रेणीमता। व्रीह्यादित्वादिनिप्रत्ययः। वेलायाः समुद्रकूलस्य तटेनोपान्तेनैवागस्त्येनाचरितामाशां दक्षिणां दिशमनाशास्यजयः अयत्नसिद्धत्वादप्रार्थनीयजयः सन्। ययौ। "अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः। वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः॥" इति ब्रह्मपुराणे॥ ४४॥

**अन्वयः**—ततः, फलवत्पूगमालिना, वेलातटेन, एव, अगस्त्याचरिताम्, आशाम्, अनाशास्यजयः, 'सन्' ययौ।

**व्याख्या**—ततः = तदनन्तरम्, फलवतां = फलितानां पूगानां = क्रमुकानां माला = श्रेणी विद्यते यस्य तादृशेन फलवत्पूगमालिना वेलायास्तटेन = समुद्रकूलभागेन एव अगस्त्येन = कुम्भसम्भवेन आचरिता = अधिष्ठिता इति अगस्त्याचरिता ताम् अगस्त्याचरिताम् आशाम् = दिशम् दक्षिणां दिशमित्यर्थः, न आशास्यः = प्रार्थनीयः जयः = विजयः यस्य सः अनाशास्यजयः सन् ययौ = जगाम।

**समा०**—फलान्येषां सन्तीति फलवन्तः फलवन्तश्च ते पूगाश्च फलवत्पूगाः फलवत्पूगानां मालाऽस्यास्तीति फलवत्पूगमालि, तेन फलवत्पूगमालिना। वेलायास्तटं वेलातटम् तेन वेलातटेन। अगस्त्येन आसमन्तात् चरिता अगस्त्याचरिता, ताम् अगस्त्याचरिताम्। आशासितुं योग्यः आशास्यः, न आशास्यः अनाशास्यः, अनाशास्यः जयः यस्य सः अनाशास्यजयः।

**अभि०**—पूर्वां दिशं विजित्य रघुः फलयुक्तक्रमुकश्रेणीसुशोभितेन समुद्रतटमार्गेणैव दक्षिणां दिशं प्रतस्थे।

**हिन्दी**—रघु पूर्व दिशा की विजय के पश्चात् फलित सुपारी के वृक्षों के समूह से सुशोभित समुद्रतट के द्वारा ही दक्षिण दिशा की विजय को चल पड़े॥४४॥

स सैन्यपरिभोगेण गजदानसुगन्धिना।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत्॥ ४५॥

**सञ्जीविनी**—स रघुः। गजानां दानेन मदेन सुगन्धिना सुरभिगन्धिना। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इत्यनेनेकारादेशः समासान्तः। यद्यपि गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशः, तथापि निरंकुशाः कवयः। तथा च माघकाव्ये—'ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः' इति। नैषधे च—'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते

तुषारा' इति। 'न कर्मधारयान्मत्वर्थीय' इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव। सेनायां समवेताः सैन्याः। 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः। 'सेनायां वा' इति ण्यप्रत्ययः। तेषां परिभोगेण कावेरीं नाम सरितं सरितां पत्युः समुद्रस्य शङ्कनीयां न विश्वसनीयामिवाकरोत्। पत्न्यां संभोगलिंगदर्शनाद्भर्तुरविश्वासो भवतीति भावः ॥४५॥

**अन्वयः**—सः, गजदानसुगन्धिना, सैन्यपरिभोगेण, कावेरीम्, सरिताम्, पत्युः, शङ्कनीयाम्, इव, अकरोत्।

**वाच्य०**—तेन कावेरी शङ्कनीया इव अक्रियत।

**व्याख्या**—सः = रघुः, गजानां = हस्तिनां यद्दानं मदः इति गजदानं तेन सुगन्धिः = सुरभितः इति गजदानसुगन्धिः तेन, सेनायां समवेताः सैन्याः = सैनिकाः तेषां परिभोगः = उपभोगः इति सैन्यपरिभोगः तेन, कावेरीम् = तदाख्यां नदीम् सरिताम् = नदीनाम्, पत्युः = स्वामिनः, समुद्रस्येत्यर्थः, शङ्कनीयाम् = अविश्वसनीयाम्, इव = यथा, अकरोत् = चकार।

**समा०**—सुष्ठु गन्धोऽस्यास्तीति सुगन्धिः, गजानां दानं गजदानम्, गजदानेन सुगन्धिः गजदानसुगन्धिः तेन गजदानसुगन्धिना। सेनायां समवेताः सैन्याः,सैन्यानां परिभोगः सैन्यपरिभोगः तेन सैन्यपरिभोगेण। शङ्कितुं योग्या शङ्कनीया, तां शङ्कनीयाम्।

**अभि०**—गजानां मदेन शोभनगन्धवती कावेरी तथा जाता यथा समुद्रस्य परपुरुषोपभुक्तेवाविश्वसनीयाऽभूत्।

**हिन्दी**—रघु के सेना गजों के मद की सुगन्धि तथा सैनिकों के स्नान आदि से कलुषित कावेरी समुद्रको परपुरुषोपभुक्ता स्त्रीके समान अविश्वसनीय-सी हो गई॥

बलैर्ध्युरषितास्तस्य विजगीषोर्गताध्वनः।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः॥ ४६॥

**सञ्जीविनी**—विजिगीषोर्विजेतुमिच्छोर्गताध्वनस्तस्य रघोर्बलैः सैन्यैः। 'बलं शक्तिर्बलं सैन्यम्'इति यादवः। मारीचेषु मरीचवनेषूद्भ्रान्ताः परिभ्रान्ता हारीताः पक्षिविशेषा यासु ताः। 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इत्यमरः। मलयाद्रेरुपत्यका आसन्नभूमयः। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः।

'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इत्यनेन त्यकन्प्रत्ययः । अध्युषिताः । उपत्यकासूषितमित्यर्थः । 'उपान्वध्याङ्वसः' इति कर्मत्वम् ॥४६॥

**अन्वयः**—विजिगीषोः, गताध्वनः, तस्य, बलैः, मारीचोद्भ्रान्तहारीताः, मलयाद्रेः, उपत्यकाः, अध्युषिताः ।

**वाच्य०**—बलानि अध्युषितवन्ति ।

**व्याख्या**—विजेतुमिच्छति तस्य विजिगीषोः = विजेतुमिच्छोः, गतः = यातः, अध्वा = मार्गः, येन गताध्वा तस्य गताध्वनः = रघोः, कियद्दूरं गतस्येत्यर्थः, बलैः = सेनापुरुषैः, मरीचानां वनानि तेषूद्भ्रान्ताः = उड्डीयमानाः हारीताः = पक्षिविशेषा यासु ताः मारीचोद्भ्रान्तहारीताः मलयाद्रेः = मलयपर्वतस्य, उपत्यकाः = अद्रेरासन्नभूमयः, 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः, अध्युषिताः = अधिष्ठिताः ।

**समा०**—विजेतुमिच्छुः विजिगीषुः, तस्य विजिगीषोः । गतः अध्वा यस्य सः गताध्वा, तस्य गताध्वनः । मरीचानां इमानि मारीचानि, मारीचेषु उत्प्लुत्य भ्रान्ताः हारीताः यासु ताः मारीचोद्भ्रान्तहारीताः, ताः मारीचो० ।

**अभि०**—विजयैषिणो रघोः कियद्दूरं गतस्य सेना हारीताख्यपक्षिबाहुल्यवतीषु मलयाद्रेरासन्नभूमिषु वासमकल्पयत् ।

**हिन्दी**—कुछ दूर जाने पर रघु की सेना ने मलय पर्वत की पास की भूमियों में डेरा डाला, जहाँ मरिचों के वनों में हारीत (हरियल) नामक पक्षी उड़ रहे थे ॥

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥४७॥

**सञ्जीविनी**—अश्वैः क्षुण्णानामेलालतानामुत्पतिष्णव उत्पतनशीलाः । 'अलंकृञ् निराकृञ्' इत्यादिनेष्णुच्प्रत्ययः । फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु । सर्वधनीतिवदिन्नन्तो बहुव्रीहिः । मत्तेभानां कटेषु ससञ्जुः सक्ताः । 'गजगण्डे कटौकटौ' इति कोषः ॥४७॥

**अन्वयः**—अश्वक्षुण्णानाम्, एलानाम्, उत्पतिष्णवः फलरेणवः तुल्यगन्धिषु, मत्तेभकटेषु, ससञ्जुः ।

**वाच्य०**—उत्पतिष्णुभिः, फलरेणुभिः, तुल्यगन्धिषु मत्तेभकटेषु, ससञ्जे ।

**व्याख्या**—अश्वैः = घोटकैः, क्षुण्णानाम् = चूर्णितानाम्, एलानाम् = एलालतानाम्, उत्पतितुं शीलं येषां तादृशाः उत्पतिष्णवः = ऊर्ध्वंगमनशीलाः, फलानां = प्रसवानां रेणवः = धूलिकणाः इति फलरेणवः तुल्यः = समः गन्धः = सुरभिर्येषु-तादृशेषु, तुल्यगन्धिषु मत्ताः = प्रमत्ताः, ये इभाः = गजाः तेषां कटाः = गण्डस्थलानि इति मत्तेभकटाः तेषु, ससञ्जुः = संसक्ताः ।

**समा०**—अश्वैः क्षुण्णाः अश्वक्षुण्णाः, तासाम् अश्वक्षुण्णानाम् । तुल्यः गन्धः येषामस्तीति तुल्यगन्धिनः तेषु तुल्यगन्धिषु । मत्ताश्च ते इभाश्च मत्तेभाः, मत्तेभानां कटाः मत्तेभकटाः, तेषु मत्तेभकटेषु । फलानां रेणवः फलरेणवः ।

**अभि०**—तुरङ्गमखुरैश्चूर्णितानामेलानां रजःकणाः स्वसमानगन्धयुक्तेषु सेनागजगण्डस्थलेषु पवनवशात्संसक्ताः ।

**हिन्दी**—घोड़ों के खुरों से चूर्णित एलाफलों (इलायची) के रजःकण अपनी गन्ध के समान गन्ध वाले सेना के हाथियों के गण्डस्थलों में वायु के वश से संसक्त हो गये ॥४७॥

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥४८॥

**सञ्जीविनी**—चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनान्निम्नेषु समर्पितं सञ्जितं त्रिपदीछदिनां पादशृंखलच्छेदकानामपि । 'त्रिपदी पादबन्धनम्' इति यादवः । करिणाम् । ग्रीवासु भवं ग्रैवं कण्ठबन्धनम् । 'ग्रीवाभ्योऽण्च' इत्यण्प्रत्ययः । नास्रसन्न स्रस्तमभूत् । 'द्युद्भ्यो लुङि' इति परस्मैपदे पुषादित्वादङ । 'अनिदितां हल उपधायाः क्ङिति' इति नकारलोपः ॥४८॥

**अन्वयः—चन्दनानाम्, भोगिवेष्टनमार्गेषु, समर्पितम्, त्रिपदीछेदिनाम्, अपि, करिणाम्, ग्रैवम्, न, अस्रसत् ।**

**वाच्य०**—समर्पितेन, करिणाम्, ग्रैवेण, न, अस्रंसि ।

**व्याख्या**—चन्दनानाम् = मलयजानाम्, भोगः अस्ति येषां ते भोगिनः 'अहेः शरीरं भोगः स्यात्' इत्यमरः तेषां ये वेष्टनानि तेषां मार्गाः = स्थानानि तेषु भोगिवेष्टनमार्गेषु, समर्पितम् = दत्तम्, त्रिपदीं छेत्तुं शीलं येषां ते त्रिपादीछेदिनः तेषां त्रिपदीछेदिनाम् = पादबन्धनच्छेदकानामपि करिणाम् = गजानाम्, ग्रीवासु भवं ग्रैवम् = कण्ठबन्धनम्, न, नैव, अस्रसत् = शिथिलं बभूव ।

**समा०**—भोगः एषामस्तीति भोगिनः, भोगिनां वेष्टनानि भोगिवेष्टनानि, भोगिवेष्टनानां मार्गाः भोगिवेष्टनमार्गाः, तेषु भोगिवेष्टनमार्गेषु। त्रिपदीं छेत्तुं शीलं येषां ते त्रिपदीछेदिनः, तेषां त्रिपदीछेदिनाम्। कर एषामस्तीति करिणः, तेषां करिणाम्।

**अभि०**—मलयजवृक्षेषु सर्पवेष्टनेन संजातरेखासु आधोरणैर्निबद्धानां पादबन्धनच्छेदकारिणामपि करिणां कण्ठबन्धनानि शिथिलानि न बभूवुः।

**हिन्दी**—चन्दन के वृक्षों में साँपों के लिपटे रहने के कारण जो रेखायें पड़ी हुई थी उनमें बाँधे हुए पाद बन्धन को तोड़ देने वाले हाथियों तक के कण्ठ बन्धन ढीले न हुए ॥४८॥

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥४९॥

**सञ्जीविनी**—दक्षिणस्यां दिशि रवेरपि तेजो मन्दायते मन्दं भवति। लोहितादित्वात्क्यष्प्रत्ययः। 'वा क्यषः' इत्यात्मनेपदम्। दक्षिणायने तेजोमान्द्यादिति भावः। तस्यामेव पाण्ड्याः। पाण्डूनां जनपदानां राजानः पाण्ड्याः। 'पाण्डोर्ड्यण्वक्तव्यः' रघोः प्रतापं न विषेहिरे न सोढवन्तः। सूर्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ॥४९॥

**अन्वयः**—**दक्षिणस्याम्, दिशि, रवेः, अपि, तेजः, मन्दायते, तस्याम्, एव, पाण्ड्याः, रघोः, प्रतापम् न, विषेहिरे।**

**वाच्य०**—रवेः, अपि, तेजसा, मन्दायते, तस्याम्, एव, पाण्ड्यैः, रघोः प्रतापः, न, विषेहे।

**व्याख्या**—दक्षिणस्याम् = अवाच्याम्, दिशि = काष्ठायाम, 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः, रवेः = सूर्यस्य अपि तेजः = प्रतापः मन्दायते = मन्दं भवति, तस्यामेव दिशि, दक्षिणस्याम्, पाण्डूनां जनपदानां राजानः पाण्ड्याः = पाण्डुदेशाधीशाः, रघोः = दिलीपपुत्रस्य, प्रतापं = तेजः, न = नैव, विषेहिरे = सोढवन्तः।

**समा०**—पाण्डूनां (देशविशेषाणां) राजानः पाण्ड्याः।

**अभि०**—यस्यामुग्रप्रतापस्य रवेरपि तेजः मन्दं भवति तस्यामेव दक्षिणस्यां दिशि पाण्ड्यैः रघोः प्रतापः न सोढः।

**हिन्दी**—दक्षिण दिशा में सूर्य का तेज भी मन्द पड़ जाता है, किन्तु उसी दिशा में रघु के तेज को पाण्ड्य देश के राजा न सह सके ॥४९॥

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥५०॥

**सञ्जीविनी**—ते पाण्ड्यास्ताम्रपर्ण्या नद्या समेतस्य संगतस्य महोदधेः संबन्धि संचितं मुक्तासारं मौक्तिकवरम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । स्वं स्वकीयं संचितं यश इव । तस्मै रघवे निपत्य प्रणिपत्य ददुः । यशसः शुभ्रत्वादौपम्यम् । ताम्रपर्णीसंगमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ॥

**अन्वयः**—ते, ताम्रपर्णीसमेतस्य, महोदधेः, सञ्चितम्, मुक्तासारम्, स्वम्, सञ्चितम्, यशः, इव, तस्मै, प्रणिपत्य, ददुः ।

**वाच्य०**—तैः, प्रणिपत्य, ददे ।

**व्याख्या**—ते = पाण्ड्याः, ताम्रपर्ण्या = नद्या समेतस्य = संगतस्य महोदधेः = महासागरस्य, सम्बन्धि, सञ्चितम् = सङ्कलितम्, मुक्तासारम् = मौक्तिकवरम्, स्वम् = स्वकीयम्, सञ्चितम्, यशः = कीर्तिम्, इव, तस्मै = रघवे, प्रणिपत्य = नमस्कृत्य, ददुः = समर्पितवन्तः ।

**समा०**—ताम्रपर्ण्या समेतः ताम्रपर्णीसमेतः, तस्य ताम्रपर्णीसमेतस्य । महांश्चासौ उदधिश्च महोदधिः, तस्य महोदधेः । मुक्तानां सारः मुक्तासारः, तं मुक्तासारम् ।

**अभि०**—पराजिताः पाण्ड्यास्ताम्रपर्णीनामकनद्या संगतस्य सागरस्य सम्बन्धि सञ्चितं मुक्तासारं स्वकीयं सञ्चितं यश इव रघवे प्रणिपत्य समर्पयामासुः ।

**हिन्दी**—पराजित पाण्ड्यदेश के राजाओं ने ताम्रपर्णी नदी से मिले हुए दक्षिण समुद्र के उत्तम मुक्तासार रघु को सञ्चित किये अपने यशके समान भेंट में समर्पित किये ॥५०॥

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥५१॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥५२॥

**सञ्जीविनी**—असह्यविक्रमः स रघुस्तटेषु सानुष्वालीनचन्दनौ व्याप्तचन्दनौ ।

'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। स्तनपक्षे प्रान्तेषु व्याप्तचन्दनानुलेपौ। तस्या दक्षिणस्या दिशः स्तनाविव स्थितौ मलयदर्दुरौ नाम शैलौ यथाकामं यथेच्छं निर्विश्योपभुज्य। 'निर्वेशो भृतिभोगयोः' इत्यमरः। उदकान्यस्य सन्तीत्युदन्वानुदधिः। 'उदन्वानुदधौ च' इति निपातः। उदन्वता दूरान्मुक्तं दूरतस्त्यक्तम्। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। स्रस्तांशुकं मेदिन्या नितम्बमिव स्थितं सह्यं सह्याद्रिमलङ्घयत्प्राप्तोऽतिक्रान्तो वा ॥५१-५२॥ इति युग्मम् ॥

**अन्वयः**—असह्यविक्रमः, सः, तटेषु, आलीनचन्दनौ, तस्याः, दिशः, स्तनौ, इव, 'स्थितौ' मलयदर्दुरौ, शैलौ, यथाकामम्, निर्विश्य, उदन्वता, दूरात्, मुक्तम्, स्रस्तांशुकम्, मेदिन्याः, नितम्बम्, इव, स्थितम्, सह्यम्, अलङ्घयत्।

**वाच्य०**—असह्यविक्रमेण, तेन, दूरात्, मुक्तः, स्रस्तांशुकः, मेदिन्याः नितम्बः, इव, 'स्थितः', सह्यः, अलङ्घ्यत।

**व्याख्या**—न सह्यः = सहनार्हः विक्रमः = पराक्रमः यस्य तादृशः असह्यविक्रमः, सः = रघुः, तटेषु = तीरेषु 'सानुषु' स्तनपक्षे प्रान्तभागेषु आसमन्ताल्लीनाः = व्याप्ताः, चन्दनाः = चन्दनवृक्षा ययोस्तादृशौ, आलीनचन्दनौ स्तनपक्षे तु आलीनं चन्दनं ययोस्तौ व्याप्तचन्दनानुलेपौ, तस्याः = दक्षिणस्याः, दिशः = काष्ठायाः, स्तनौ = कुचौ, इव = यथा, 'स्थितौ' मलयश्च दर्दुरश्च तौ तन्नामकौ, शैलौ = पर्वतौ काममनतिक्रम्य यथाकामम् = यथेच्छम्, निर्विश्य = उपभुज्य, उदकानि सन्त्यस्योदन्वान्, तेन उदन्वता = समुद्रेण, दूरात् = दूरप्रदेशात्, मुक्तम् = परित्यक्तम् स्रस्तं च तदंशुकं स्रस्तांशुकम् तत् = विगलितवस्त्रम्, मेदिन्याः = पृथिव्याः, नितम्बम् = कटिपश्चाद्भागमिव स्थितम्, सह्यम् = सह्यनामकमद्रिम्, अलङ्घयत् = लङ्घितवान्।

**समा०**—सोढुं शक्यः सह्यः, न सह्यः असह्यः, असह्यः विक्रमः यस्य सः असह्यविक्रमः। आलीनाः चन्दनाः ययोस्तौ आलीनचन्दनौ, तौ आलीनचन्दनौ। आलीनं चन्दनं ययोस्तौ आलीनचन्दनौ। मलयश्च दर्दुरश्च मलयदर्दुरौ, तौ मलयदर्दुरौ। काममनतिक्रम्य यथाकामम्। स्रस्तमंशुकं यस्मात् सः स्रस्तांशुकः, तं स्रस्तांशुकम्।

**अभि०**—स रघुर्दक्षिणस्या दिशः स्तनयोरिव स्थितयोः मलयदर्दुरपर्वतयोर्यथेच्छं विहृत्य पृथिव्या दूरात्समुद्रजलपरित्यक्तमतएव विलासवत्याः स्रस्तांशुकं नित-

म्बभागमिव स्थितं सह्याद्रिं यथेच्छमुपभुज्य तथैव प्रस्थितः यथा कश्चित् कामी कामुक्याः पीवरकुचयोः सम्मर्दनं कृत्वा निर्वस्त्रं नितम्बमुपभुज्यान्यतो याति ।

हिन्दी—रघु दक्षिण दिशा के स्तनों के समान स्थित मलय और दर्दुरनामक पर्वतों में इच्छानुसार विहार करके समुद्र के जल से दूर से ही मुक्त, किसी विलासवती के वस्त्ररहित नितम्बभाग के समान स्थित सह्याद्रि का यथेच्छ उपभोग करके उसी प्रकार आगे बढ़े जैसे कि कोई कामी किसी कामुकी का चन्दनलिप्त कुचमर्दन कर पश्चात् वस्त्ररहित नितम्बभाग का भी उपभोग करके कहीं दूसरी जगह जाता हो ॥५१-५२॥

तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥५३॥

सञ्जीविनी—अपरान्तानां पाश्चात्यानां जय उद्यतैरुद्युक्तैः । 'अपरान्तास्तु पाश्चात्यास्ते च सूर्यरिकादयः' इति यादवः । विसर्पद्भिर्गच्छद्भिस्तस्य रघोरनीकैः सैन्यैः । 'अनीकं तु रणे सैन्ये' इति विश्वः । अर्णवो रामस्य जामदग्न्यस्यास्त्रैरुत्सारितः परिसारितोऽपि सह्यलग्न इवासीत् । सैन्यं द्वितीयोऽर्णव इवादृश्यतेति भावः ॥५३॥

अन्वयः—अपरान्तजयोद्यतैः, विसर्पद्भिः, तस्य, अनीकैः, अर्णवः, रामास्त्रोत्सारितः, अपि, सह्यलग्नः इव, आसीत् ।

वाच्य०—रामास्त्रोत्सारितेन, अपि, सह्यलग्नेन, इव, अर्णवेन, अभूयत ।

व्याख्या—अपरान्तानां = पाश्चात्यानां यो जयः = विजयःअपरान्तजयः तत्रोद्यतैः = उद्युक्तैः,विसर्पद्भिः = गच्छद्भिः, तस्य = रघोः,अनीकैः = सैन्यैः, अर्णवः = सागरः, "सरस्वान्सागरोऽर्णवः" इत्यमरः,रामस्य = जामदग्न्यस्य, अस्त्रैः = आयुधैः उत्सारितः = परिसारितः, अपि, सह्ये = सह्याद्रौ लग्नः = संसक्तः, इव = यथा, आसीत् ।

समा०—अपरस्या अन्ताः अपरान्ताः, अपरान्तानां जयः, अपरान्तजयः, अपरान्तजये उद्यताः अपरान्तजयोद्यताः, तैः अपरान्तजयोद्यतैः । रामस्य अस्त्रम् रामास्त्रम्, रामास्त्रेण उत्सारितः रामास्त्रोत्सारितः । सह्ये लग्नः सह्यलग्नः ।

अभि०—सह्याद्रेः पश्चिमदेशं गच्छन्त्या विपुलया रघुसेनया, परशुरामास्त्रेण दूरीकृतोऽपि समुद्रः पुनः सह्यपर्वतसक्त इव लक्ष्यते स्म । आ पर्वतात् समुद्रं यावत् सेनाविस्तार आसीदिति भावः ।

**हिन्दी**—पश्चिम समुद्रतट तक फैली हुई रघु की सेना से समुद्र परशुराम के अस्त्रों से दूर किये जाने पर भी ऐसा मालूम पड़ता था जैसे कि सह्य पर्वत से मिला हुआ ही हो ॥५३॥

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४ ॥

**सञ्जीविनी**—तेन रघुणा भयेनोत्सृष्टविभूषाणां परिहृतभूषणानां केरलयोषितां केरलांगनानामलकेषु केशेषु चमूरेणुः सेनारजश्चूर्णस्य कुंकुमादिरजसः प्रतिनिधीकृतः प्रत्यादेशीकृतः । तदभावे तत्सदृशः प्रतिनिधिः । एतेन योषितां पलायनं चमूनां च तदनुधावनं ध्वन्यते ॥५४॥

**अन्वयः**—तेन, भयोत्सृष्टविभूषाणाम्, केरलयोषिताम्, अलकषु, चमूरेणुः, चूर्णप्रतिनिधीकृतः ।

**वाच्य०**—सः चमूरेणुं चूर्णप्रतिनिधीकृतवान् ।

**व्याख्या**—तेन = रघुणा. भयेन = भीत्या, उत्सृष्टा = परित्यक्ता, विभूषा = अलङ्करणस्वीकारो याभिस्तासां भयोत्सृष्टविभूषाणाम् केरलस्य = केरलदेशस्य संबन्धिन्यः, ोषितः = स्त्रियः इति केरलयोषितः तासाम्, अलकेषु = चूर्णकुन्तलेषु, 'अलकाश्चूर्णकुन्तलाः' इत्यमरः चम्वाः = सेनायाः, रेणुः = धूलिः, चूर्णस्य = कुंकुमादिरजसः प्रतिनिधीकृतः = स्थानापन्नीकृतः ।

**समा०**—भयेन उत्सृष्टाः विभूषाः याभिस्ताः भयोत्सृष्टविभूषाः, तासां भयोत्सृष्टविभूषाणाम् । केरलानां योषितः केरलयोषितः तासां, केरलयोषिताम् । चम्वाः रेणुः चमूरेणुः । अप्रतिनिधिः प्रतिनिधिः सम्पद्यमानः कृतः प्रतिनिधीकृतः, चूर्णस्य प्रतिनिधीकृतः चूर्णप्रतिनिधीकृतः ।

**अभि०**—रघोः सकाशादुत्पन्नेन भयेन यदा केरलप्रान्तस्त्रियः आभूषणादिकं परित्यज्य पलायितास्तदा तासामलकेषु कुंकुमचूर्णलेपः सेनारेणुना संपादिताः ।

**हिन्दी**—रघु के भय से केरल प्रान्त की स्त्रियाँ आभूषणादि का परित्याग करके भाग खड़ी हुईं । उस समय उनके केशों में कुंकुम चूर्ण का काम रघु की सेना की धूलि ने किया ॥५४॥

मुरलामारुतोद्धूतमगमत् कैतकं रजः ।
तद्योधवारबाणानामयत्नपटवासताम् ॥ ५५ ॥

**सञ्जीविनी**—मुरला नाम केरलदेशेषु काचिन्नदी। 'मुरलीमारुतोद्धूतम्' केचित्पठन्ति। तस्या मारुतेनोद्धूतमुत्थापितं कैतकं केतकीसंबन्धि रजस्तद्योधवारबाणानां रघुभटकञ्चुकानाम्। 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः। अयत्नपटवासतामयत्नसिद्धवस्त्रवासनाद्रव्यत्वमगमत्। 'पिष्टातः पटवासकः' इत्यमरः ॥५५॥

**अन्वयः**—मुरलामारुतोद्धूतं, कैतकं, रजः, तद्योधवारबाणानाम्,अयत्नपटवासताम्, अगमत्।

**वाच्य०**—मुरलामारुतोद्धूतेन कैतकेन रजसा अयत्नपटवासता अगामि।

**व्याख्या**—मुरला=तन्नाम्नी काचित्केरलीया नदी तस्याः मारुतः=पवनः मुरलामारुतः तेन उद्धूतम्=समुत्थापितम्, केतक्या इदं कैतकम्=केतकीपुष्पसम्बन्धि, रजः=धूलिः, यस्य=रघोः. ये योधाः=भटाः, तेषां ये वारबाणाः=कञ्चुकाः तद्योधवारबाणाः,तेषां पटान् वासयतीति पटवासः=वस्त्रवासकः अविद्यमानो यत्नो यस्यासावयत्नः स चासौ पटवासः तस्य भावस्तत्ता ताम् अयत्नपटवासताम् अगमत्=प्राप।

**समा०**—मुरलाया मारुतः मुरलामारुतः, मुरलामारुतेन उद्धूतं मुरलामारुतोद्धूतम्। केतकस्य इदं कैतकम्। तस्य योधाः तद्योधाः, तद्योधानां वारबाणाः तद्योधवारबाणाः, तेषां तद्योधवारबाणानाम्। पटं वासयतीति पटवासः, न विद्यते यत्नो यस्य स अयत्नः, अयत्नश्चासौ पटवासश्च अयत्नपटवासः, अयत्नपटवासस्य भावः अयत्नपटवासता, ताम् अयत्नपटवासताम्।

**अभि०**—मुरलानदीपवनवशादुत्थितेन केतकीरजसा रघुसेनाकञ्चकेषु निपत्य प्रयासं विनैव वस्त्रसुरभीकरणकार्यमकारि।

**हिन्दी**—मुरला नामक नदी के वायु से उड़े हुए केतकी पुष्प के पराग ने रघु के सैनिकों के कञ्चुकों के ऊपर गिरते हुए बिना प्रयास के सुगन्धित चूर्ण का कार्य किया ॥५५॥

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥

**सञ्जीविनी**—चरतां गच्छतां वाहानां वाजिनां 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः। गात्रशिञ्जितैर्गात्रेषु शब्दायमानैः। कर्तरि क्तः। वर्मभिः कवचैः। पवनेनोद्धूतानां कम्पितानां राजतालीवनानां ध्वनिरभ्यभूयत तिरस्कृतः॥

**अन्वयः**—चरताम्, वाहानाम्, गात्रशिञ्जितैः, वर्मभिः, पवनोद्धूतराजतालीवनध्वनिः, अभ्यभूयत ।

**वाच्य०**—गात्रशिञ्जितानि वर्माणि पवनोद्धूतराजतालीवनध्वनिम् अभ्यभवन् ।

**व्याख्या**—चरताम् = चलताम्, वाहानाम् = घोटकानाम्, गात्रेषु = शरीरेषु, शिञ्जितः = शब्दायमानैः, वर्मभिः = कवचैः, पवनेन = वायुना, उद्धूतानि = कम्पितानि इति पवनोद्धूतानि तानि राजतालीनां = तालीनां, वनानि = अरण्यानि तेषाम् ध्वनिः = शब्दः, अभ्यभूयत = तिरस्कृतः ।

**समा०**—गात्रेषु शिञ्जितानि गात्रशिञ्जितानि, तैः गात्रशिञ्जितैः । राजतालीनां वनानि राजतालीवनानि, पवनेन उद्धूतानि पवनोद्धूतानि, पवनोद्धूतानि च तानि राजतालीवनानि च पवनोद्धूतराजतालीवनानि, पवनोद्धूतराजतालीवनानां ध्वनिः पवनोद्धूतराजतालीवनध्वनिः ।

**अभि०**—रघुसेनावाजिनां गात्रेषु कवचेभ्यः समुत्पन्नः ध्वनिः वायुकम्पिततालपत्रध्वनिं न्यक्कृतवान् ।

**हिन्दी**—रघु के घोड़ों पर स्थित कवचों से जो ध्वनि निकल रही थी उससे तालवृक्ष के वनों की ध्वनि फीकी पड़ गई ।।५६।।

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ।।५७।।

**सञ्जीविनी**—खर्जूरीणां तृणद्रुमविशेषाणाम् । 'खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः' इत्यमरः । स्कन्धेषु प्रकाण्डेषु । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः' इत्यमरः । नद्धानां बद्धानां करिणां मदोद्गारेण मदस्रावेण सुगन्धिषु । "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इत्यनेनेकारः । कटेषु गण्डेषु पुन्नागेभ्यो नागकेशरेभ्यः पुन्नागपुष्पाणि विहाय । ल्यब्लोपे पञ्चमी । शिलीमुखा अलयः पेतुः । 'अलिबाणौ शिलीमुखौ' इत्यमरः । ततोऽपि सौगन्ध्यातिशयादिति भावः ।।५७।।

**अन्वयः**—खर्जूरीस्कन्धनद्धानाम्, करिणाम्, मदोद्गारसुगन्धिषु, कटेषु, पुन्नागेभ्यः, शिलीमुखाः, पेतुः ।

**वाच्य०**—शिलीमुखैः पेते ।

**व्याख्या**–खर्जूरीणां स्कन्धाः=स्कन्धप्रदेशाः खर्जूरीस्कन्धाः तेषु नद्धाः=बद्धा-इति खर्जूरीस्कन्धनद्धाः, तेषाम् करिणाम्=गजानाम् मदस्य=दानस्य, य उद्-गारः=स्रावः इति मदोद्गारः तेन सुगन्धयः=सुरभिता इति मदोद्गारसुगन्ध-यस्तेषु, कटेषु=गण्डस्थलेषु, पुन्नागेभ्यः=नागकेशरेभ्यः पुन्नागान्विहायेत्यर्थः, शिलीमुखाः=भ्रमराः पेतुः=न्यपतन् ।

**समा०**–खर्जूरीणां स्कन्धेषु नद्धाः खर्जूरीस्कन्धनद्धाः, तेषां खर्जूरीस्कन्धनद्धा-नाम् । मदस्य उद्गारः मदोद्गारः, मदोद्गारेण सुगन्धयः मदोद्गारसुगन्धयः, तेषु मदोद्गारसुगन्धिषु ।

**अभि०**—भ्रमराः नागकेशरपुष्पाणि विहाय खर्जूरीस्कन्धेषु निबद्धानां सेना-गजानां मदजलमुक्षु गण्डस्थलेषु न्यपतन् ।

**हिन्दी**—भौंरे नागकेशर के पुष्पों से उड़-उड़ कर खजूर के तनों में बँध हुए सेना के हाथियों के मद बरसानेवाले गण्डस्थलोंपर बैठने के लिये टूट पड़े ॥

अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ ।
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥

**सञ्जीविनी**—उदन्वानुदधी रामाय जामदग्न्याय । अभ्यर्थितो याचितः सन् । अवकाशं स्थानं ददौ किल । किलेति प्रसिद्धौ । रघवे त्वपरान्तमहीपालव्याजेन करं बलिं ददौ । 'बलिहस्तांशवः कराः' इत्यमरः। अपरान्तानां समुद्रमध्यदेशवर्ति-त्वात्तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानं च भीत्या न तु याच्ञयेति रामाद्र-घोरुत्कर्षः ॥ ५८ ॥

**अन्वयः**—उदन्वान्, रामाय, अभ्यर्थितः, अवकाशं, ददौ, किल, रघवे, अप-रान्तमहीपालव्याजेन, करम्, ददौ ।

**वाच्य०**—उदन्वता अभ्यर्थितेन सता अवकाशः ददे, रघवे करः ददे ।

**व्याख्या**—उदन्वान्=उदधिः, रामाय=परशुरामाय, अभ्यर्थितः=प्रार्थितः सन् अवकाशम्=मार्गम्, ददौ=अदात्, किलेति प्रसिद्धौ, रघवे=दिलीपपुत्राय तु अपरान्ताः=पाश्चात्याः ये महीपालाः राजानः इत्यपरान्तमहीपालास्तेषां व्याजः मिषः इत्यपरान्तमहीपालव्याजस्तेन करम्=बलिम् ददौ ।

**समा०**—अपरस्या अन्ताः अपरान्ताः, अपरान्तानां महीपालाः अपरान्तमही-पालाः, अपरान्तमहीपालानां व्याजः, तेन अपरान्तमहीपालव्याजेन ।

**अभि०**—परशुरामोऽपि यस्मात् सम्प्रार्थ्य स्थानं प्राप्तवान् तस्मादेव समुद्रात् पश्चिमदेशीयनृपतिमिषेण प्रार्थनां विनैव करं लेभे ।

**हिन्दी**—जिस समुद्र से परशुराम जी ने भी प्रार्थना करने पर स्थान प्राप्त किया उसी समुद्रसे रघुने बिना प्रार्थना किये पश्चिम देशीय राजाओं के बहाने कर प्राप्त किया ॥ ५८ ॥

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥५९॥

**सञ्जीविनी**—तत्र स रघुर्मत्तानामिभानां रदनोत्कीर्णानि दन्तक्षतान्येव । भावे क्तः । व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिंस्तं तथोक्तं त्रिकूटमेवोच्चैर्जयस्तम्भं चकार । गाढप्रकाशस्त्रिकूटोऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूदित्यर्थः ॥५९॥

**अन्वयः**—तत्र सः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्, त्रिकूटम् एव, उच्चैः जयस्तम्भम् चकार ।

**वाच्य०**—तेन, मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणः, त्रिकूटः, एव, जयस्तम्भः, चक्रे ।

**व्याख्या**—तत्र = पश्चिमदिशि, सः = रघुः, मत्ताः = प्रमत्ता ये इभाः = गजाः इति मत्तेभाः तेषां रदनाः = दन्ता इति मत्तेभरदनाः तैः उत्कीर्णानि = क्षतानि, एव, व्यक्तानि = स्फुटानि, विक्रमस्य = पराक्रमस्य लक्षणानि = चिह्नानि यस्य सः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणः, तम् त्रयः कूटाः शिखरप्रदेशाः, यस्य त्रिकूटः तम् तन्नामकं पर्वतम्, एव, उच्चैः = अत्युच्चम्, जयस्य = विजयस्य स्तम्भः इति जयस्तम्भः, तम् चकार = अकरोत् ।

**समा०**—विक्रमस्य लक्षणानि विक्रमलक्षणानि, व्यक्तानि च तानि विक्रमलक्षणानि च व्यक्तविक्रमलक्षणानि, मत्ताश्च ते इभाश्च मत्तेभाः, मत्तेभानां रदनाः मत्तेभरदनाः, मत्तेभरदनानामुत्कीर्णानि मत्तेभरदनोत्कीर्णानि, मत्तेभरदनोत्कीर्णैः व्यक्तं विक्रमस्य लक्षणं यस्मिन्सः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणः, तं मत्ते० । त्रयः कूटाः यस्य सः त्रिकूटः, तं त्रिकूटम् । जयस्य स्तम्भः जयस्तम्भः, तं जयस्तम्भम् ।

**अभि०**—रघुः केरलदेशे स्वसेनागजरदनक्षतचिह्नयुक्तं त्रिकूटनामकं पर्वतमेव, उन्नतं जयस्तम्भमकरोत् ।

**हिन्दी**—रघु ने केरल देश में अपनी सेना के हाथियों के दन्तप्रहारों के चिह्नों से युक्त त्रिकूट नामक पर्वत को ही ऊँचा विजय स्तम्भ बनाया ।।५९।।

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ।।६०।।

**सञ्जीविनी**—ततः स रघुः संयमी योगी तत्त्वज्ञानेनेन्द्रियनामकरिपूनिव । पारसीकान्राज्ञो जेतुं स्थलवर्त्मना प्रतस्थे । न तु निर्दिष्टेवापि जलपथेन, समुद्रयानस्य निषिद्धत्वादिति भावः ।।६०।।

**अन्वयः**—ततः, 'सः, रघुः' संयमी, तत्त्वज्ञानेन, इन्द्रियाख्यान्, रिपून्, इव, पारसीकान्, जेतुम्, स्थलवर्त्मना, प्रतस्थे ।

**वाच्य०**—संयमिना, स्थलवर्त्मना, जेतुम्, प्रतस्थे ।

**व्याख्या**—ततः = तदनन्तरम्, 'सः रघुः' संयमोऽस्यास्तीति संयमी = संयमवान् योगी, तत्त्वस्य = परमात्मनः, ज्ञानम् = अवबोधः, इति तत्त्वज्ञानं इन्द्रियमित्याख्या येषां ते इन्द्रियाख्याः, तान् इन्द्रियनामकान्, रिपून् = शत्रून्, इव, पारसीकान् = पारसदेशीयान् म्लेच्छभूपतीन्, जेतुम् = विजेतुम् स्थलस्य वर्त्म = मार्गः इति स्थलमार्गः तेन स्थलमार्गेण, प्रतस्थे = प्रचचाल ।

**समा०**—संयमोऽस्यास्तीति संयमी । इन्द्रियमित्याख्या येषां ते इन्द्रियाख्याः, तान् इन्द्रियाख्यान् । तत्त्वस्य ज्ञानं तत्त्वज्ञानम्, तेन तत्त्वज्ञानेन । स्थलस्य वर्त्म स्थलवर्त्म, तेन स्थलवर्त्मना ।

**अभि०**—यथा कश्चित्संयमी इन्द्रियरूपिणः शत्रून् तत्त्वावबोधेन जेतुं प्रयतते तथैव रघुरपि पारसदेशीयान् भूपतीन् जेतुं स्थलमार्गेण प्रवृत्तः ।

**हिन्दी**—जैसे कोई संयमी इन्द्रियरूपी शत्रुओं को जीनने के लिये तत्त्वज्ञान का सहारा लेता है वसे ही रघु भी पारस देशीय राजाओं को जीतने के लिये स्थल के मार्ग से चल पड़ा ।।६०।।

यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ।।६१।।

**सञ्जीविनी**—ततः स रघुर्यवनीनां यवनस्त्रीणाम् । "जातेरस्त्रीविषयादयोपधात्" इति ङीष् । मुखानि पद्मानीव मुखपद्मानि । उपमितसमासः । तेषां मधुना मद्येन यो मदो मदरागः । कार्यकारणभावयोरभेदेन निर्देशः । तं न सेहे ।

कमिव। अकाले प्रावृड्व्यतिरिक्ते काले जलदोदयः प्रायेण प्रावृषि पद्मविकाशस्याप्रसक्तत्वादब्जानां संबन्धिनं बालातपमिव। अब्जहितत्वादब्जसंबन्धित्वं सौरातपस्य ॥६१॥

**अन्वयः**—सः, यवनीमुखपद्मानाम्, मधुमदम्, अकालजलदोदयः, अब्जानाम्, बालातपम्, इव, न, सेहे।

**वाच्य०**—तेन, मधुमदः, अकालजलदोदयेन बालातपः, इव, न, सेहे।

**व्याख्या**—सः = रघुः, यवनीनाम् = यवनाङ्गनानाम्, मुखान्याननानि पद्मानि = कमलानि इव यवनीमुखपद्मानि तेषाम्, मधुना = मद्येन 'जनितः' मदः = रागः, मधुमदः तम्, अकाले = अनवसरे यः जलदस्य = मेघस्य उदयः = प्रादुर्भावः, इति जलदोदयः, अब्जानाम् = कमलानाम्, बालातपम् = प्रातःकालीनातपमिव, न = नैव, सेहे = सोढवान्।

**समा०**—मुखानि पद्मानीव मुखपद्मानि, यवनानां स्त्रियः यवन्यः, यवनीनां मुखपद्मानि यवनीमुखपद्मानि, तेषां यवनीमुखपद्मानाम्। मधोः मदः मधुमदः, तम् मधुमदम्, मधुना मदम् इति वा। जलं ददातीति जलदः, जलदस्य उदयः जलदोदयः, न कालः अकालः, अकाले जलदोदयः अकालजलदोदयः। बालश्चासौ आतपश्च बालातपः, तं बालातपम्। अप्सु जातानि अब्जानि, तेषामब्जानाम्।

**अभि०**—यथा वर्षातिरिक्तसमये मेघप्रादुर्भावः कमलविकासकारि बालातपं न सहते तथैव रघुरपि पारसीकयवनाङ्गनाननकमलानां मदिरापानजनितरागं न सोढवान् ताः पतिवियुक्ताश्चक्रे।

**हिन्दी**—जैसे कि वर्षा कालके अतिरिक्त अन्य समय में मेघका उदय कमलों को विकसित करने वाली सूर्य की बालकिरणों को नहीं सहन कर सकता है उसी प्रकार पारसीक यवन स्त्रियों के मदिरापानजनित मुखराग को रघुने सहन नहीं किया ॥६१॥

सङ्ग्रामस्तुमुलस्तस्य पाश्चात्त्यैरश्वसाधनैः।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥६२॥

**सञ्जीविनी**—तस्य रघोरश्वसाधनैर्वाजिसैन्यैः। 'साधनं सिद्धिसैन्ययोः' इति हैमः। पश्चाद्भवैः पाश्चात्त्यैर्यवनैः सह। 'दक्षिणापश्चात्पुरसस्त्यक्' सहार्थे तृतीया। शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः 'शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः॥

जये च शृङ्गविहिते चापेऽप्याह विशेषतः' इति केशवः । अथवा शार्ङ्गैः शृङ्गसंबन्धिभिः कूजितैर्विज्ञेया अनुमेयाः प्रतियोधाः प्रतिभटा यस्मिंस्तस्मिन्रजसि तुमुलः संग्रामः संकुलं युद्धमभूत् । 'तुमुलं रणसंकुले' इत्यमरः । रजोव्याप्तोभयदलयोर्न स्वपरविज्ञानं शृङ्गनादादितरदासीदिति घोरसंग्रामसंपत्तिः ॥६२॥

**अन्वयः**—तस्य, अश्वसाधनैः, पाश्चात्त्यैः, 'सह' शार्ङ्गकूजितविज्ञेयप्रतियोधे रजसि, तुमुलः, संग्रामः, अभूत् ।

**वाच्य०**—तुमुलेन, संग्रामेण, अभावि ।

**व्याख्या**—तस्य = रघोः,अश्वाः = घोटकाः एव साधनानि = युद्धोपायभूतानि येषां ते अश्वसाधनाः पाश्चात्यैः = पश्चिमदिग्भवैः,राजभिः,सह शृङ्गाणां विकाराः शार्ङ्गाणि = धनूंषि, तेषां कूजितानि = शब्दाः इति शार्ङ्गकूजितानि तैः विज्ञेयाः विज्ञातुं योग्या प्रतियोधाः = प्रतिभटाः यस्मिंस्तस्मिन् शार्ङ्गकूजितविज्ञेयप्रतियोधे रजसि = रेणुसमूहे, तुमुलः = घोरः, संग्रामः = युद्धम्, अभूत् = बभूव ।

**समा०**—अश्वाः साधनं येषां ते अश्वसाधनाः, तैः अश्वसाधनैः। पश्चात् भवाः पाश्चात्त्याः, तैः पाश्चात्त्यैः । शृङ्गाणां विकाराः शार्ङ्गाणि, शार्ङ्गाणां कूजितानि शार्ङ्गकूजितानि, शार्ङ्गकूजितैः विज्ञेयाः प्रतियोधाः यस्मिन् तत् शार्ङ्गकूजितविज्ञेयप्रतियोधम्, तस्मिन् शार्ङ्गकूजितविज्ञेयप्रतियोधे ॥ ६२ ॥

**अभि०**—रघोः पाश्चात्ययवनैः घोटकसेनाबाहुल्यवद्भिः सह धनुष्टंकारजनितशब्दानुमेयप्रतिभटे रजसि घोरः संग्रामः समजनि ।

**हिन्दी**—राजा रघु का बहुत सी घुड़ सवार सेना वाले पाश्चात्य यवनों के साथ. केवल धनुष की टंकार से ही जिसमें शत्रुओं का ज्ञान हो सकता था, ऐसी अन्धकार-सी धूलि में भयंकर युद्ध हुआ ।

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥६३॥

**सञ्जीविनी**—स रघुर्भल्लापवर्जितैर्बाणविशेषकृत्तैः । 'स्नुहीदलफलो भल्लः' इति यादवः । श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः । 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः । तेषां पाश्चात्त्यानां शिरोभिः । सरघाभिर्मधुमक्षिकाभिर्व्याप्तैः 'सरघा मधुमक्षिका' इत्यमरः । क्षुद्राः सरघाः । 'क्षुद्रा व्यंगा नटी वेश्या सरघा कण्टकारिका' इत्यमरः । 'क्षुद्राभ्रमरवटरपादपादञ्' इति संज्ञायामञ्प्रत्ययः तेषां पटलैः संचयैरिव ।

'पटलं तिलके नेत्ररोगे छन्दसि संचये। पिटके परिवारे च' इति हैमः। महीं तस्ताराच्छादयामास ॥६३॥

**अन्वयः**—सः, भल्लापवर्जितैः, श्मश्रुलैः, तेषाम्, शिरोभिः, सरघाव्याप्तैः, क्षौद्रपटलैः, इव, महीम्, तस्तार।

**वाच्य०**—तेन, मही, तस्तरे।

**व्याख्या**—सः = रघुः, भल्लैः = बाणविशेषैः, अपवर्जिताः = कृत्ताः, इति भल्लापवर्जितास्तैः श्मश्रूणि मुख रोमाणि सन्ति येषां तैः श्मश्रुलैः, तेषाम् = पारसीकानाम्, शिरोभिः = मस्तकैः, सरघाः = मधुमक्षिकास्ताभिर्व्याप्ताः = आच्छन्नाः सरघाव्याप्तास्तैः, क्षुद्राः = सरघास्ताभिः कृतानि क्षौद्राणि = मधूनि तेषां पटलानि = समूहाः इति क्षौद्रपटलानि, तैः इव = यथा, महीम् = पृथ्वीम्, तस्तार = आच्छादितवान्।

**समा०**—भल्लैः अपवर्जितानि भल्लापवर्जितानि, तैः भल्लापवर्जितैः। श्मश्रु एषामस्तीति श्मश्रुलानि, तैः श्मश्रुलैः। सरघाभिर्व्याप्तानि सरघाव्याप्तानि, तैः सरघाव्याप्तैः। क्षुद्राभिः कृतानि क्षौद्राणि, क्षौद्राणां पटलानि क्षौद्रपटलानि, तैः क्षौद्रपटलैः।

**अभि०**—स रघुः प्रवृद्धमुखरोमवद्भिः पारसीकानां भल्लनामकबाणविशेषैः कर्तितैः शिरोभिः मधुमक्षिकायुक्तैः क्षौद्रसञ्चयैः इव पृथ्वीं छादयामास।

**हिन्दी**—रघु ने भल्ल नामक बाणों से पारसी राजाओं के दाढ़ी वाले शिरों को काट-काट कर पृथ्वी को ऐसा ढँक दिया जैसे कि वह मधुमक्खियों के छत्तों से ढकी हो ॥६३॥

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥६४॥

**सञ्जीविनी**—शेषा हतावशिष्टा अपनीतशिरस्त्राणा अपसारितशीर्षण्याः सन्तः। 'शीर्षकम्। शीर्षण्यं च शिरस्त्रे' इत्यमरः। शरणागतलक्षणमेतत्। तं रघुं शरणं ययुः। तथाहि महात्मनां संरम्भः कोपः 'संरम्भः संभ्रमे कोपे' इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारो यस्य स हि। महतां परकीयमौद्धत्यमेवासह्यं न तु जीवितमिति भावः ॥६४॥

**अन्वयः**—शेषाः, अपनीतशिरस्त्राणाः, तम्, शरणम्, ययुः, हि, महात्मनाम्, संरम्भः, प्रणिपातप्रतीकारः, भवति ।

**वाच्य०**—शेषैः, अपनीतशिरस्त्राणैः, सः, शरणम्, यये, महात्मनाम्, संरम्भेण, प्रणिपातप्रतीकारेण, भूयते ।

**व्याख्या**—शेषाः = हतावशिष्टाः, अपनीतः = अपसारितः, शिरस्त्राणः शिरःकवचः यैस्तेऽपनीतशिरस्त्राणाः सन्तः, तम् = रघुम्, शरणम् = रक्षकम् 'शरणं गृहरक्षित्रोः' इत्यमरः, ययुः = प्रापुः, हि = यतः, महान् आत्मा येषां ते महात्मानः तेषाम् महात्मनां संरम्भः = कोपः प्रणिपातः = प्रणिपतनमेव प्रतीकारः = प्रत्युपायो यस्य सः प्रणिपातप्रतीकारः, भवति ।

**समा०**—अपनीतं शिरस्त्राणं यैस्ते अपनीतशिरस्त्राणाः । महान् आत्मा येषां ते महात्मानः, तेषां महात्मनाम् । प्रणिपातः प्रतीकारः यस्य सः प्रणिपातप्रतीकारः ।

**अभि०**—ये तु मृतेभ्योऽवशिष्टा आसन् ते स्वशिरस्त्राणमुत्तार्य रघुं शरणं गता बभूवुः । तेनापि ते मुक्ताः । यतः महात्मनां क्रोधः प्रणिपातावधिर्भवति ।

**हिन्दी**—जो पारसी राजाओं के मरने से बच गये वे अपने-अपने टोपों को उतार कर रघु की शरण में आकर बच गये, क्योंकि महात्माओं का क्रोध प्रणाम करने से शान्त हो जाता है ॥६४॥

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥

**सञ्जीविनी**—तस्य रघोर्योधा भटा आस्तीर्णान्यजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु । 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः । मधुभिर्द्राक्षाफलप्रकृतिकैर्मद्यैर्विजयश्रमं युद्धखेदं विनयन्ते स्मापनीतवन्तः । 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदम् । 'लट् स्मे' इति भूतार्थे लट् ॥ ६५ ॥

**अन्वयः**—तद्योधाः, आस्तीर्णाजिनरत्नासु, द्राक्षावलयभूमिषु, मधुभिः, विजयश्रमम्, विनयन्ते स्म ।

**वाच्य०**—तद्योधैः द्राक्षावलयभूमिषु मधुभिः विजयश्रमः विनीयते स्म ।

**व्याख्या**—तस्य = रघोः, योधाः = भटाः तद्योधाः, आस्तीर्णानि = विस्तीर्णानि अजिनरत्नानि = चर्मश्रेष्ठानि यासु ताः आस्तीर्णाजिनरत्नाः, तासु आस्तीर्णाजिनरत्नासु, द्राक्षाणां मृद्वीकानां यानि वलयानि समूहाः इति द्राक्षावलयानि

तेषां भूमयः=प्रदेशाः द्राक्षावलयभूमयः तासु, मधुभिः=द्राक्षानिर्मितमद्यैः, विजयस्य=जयस्य यः श्रम इति विजयश्रमस्त विनयन्ते स्म=दूरीकुर्वन्ति स्म।

**समा०**—तस्य योधाः तद्योधाः। अजिनानां रत्नानि अजिनरत्नानि आस्तीर्णानि अजिनरत्नानि यासु ताः आस्तीर्णाजिनरत्नाः, तासु आस्तीर्णाजिनरत्नासु। द्राक्षाणां वलयाः द्राक्षावलयाः,द्राक्षावलयानां भूमयः द्राक्षावलयभूमयः, तासु द्राक्षावलयभूमिषु।

**अभि०**—रघुसैनिकाः द्राक्षालताभिरावृतभूमिषु चर्मश्रेष्ठानि आस्तीर्य द्राक्षानिर्मितमद्यं पीत्वा युद्धश्रमं दूरीकृतवन्तः।

**हिन्दी**—रघु के सैनिकों ने अंगूर की लताओं से आच्छन्न भूमियों पर श्रेष्ठ मृगचर्म बिछाकर अंगूर के फलों से तैयार की हुई मदिरा का पान कर युद्ध के श्रम को दूर किया॥ ६५॥

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव॥ ६६॥

**सञ्जीविनी**—ततो रघुर्भास्वान्सूर्य इव शरैर्बाणैरुस्रैः किरणैरिव। 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः। उदीच्यानुदग्भवान्नृपान्रसानुदकानीवोद्धरिष्यन्कौबेरीं कुबेरसंबन्धिनीं दिशमुदीचीं प्रतस्थे। अनेकेनवशब्देनेयं वाक्यार्थोपमा। यथाह दण्डी—'एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा' इति॥ ६६॥

**अन्वयः—ततः, रघुः, भास्वान्, इव, शरैः, उस्रैः, इव, उदीच्यान्, रसान्, इव, उद्धरिष्यन्, कौबेरीम्, दिशम्, प्रतस्थे।**

**वाच्य०**—रघुणा भास्वता उद्धरिष्यता कौबेरी दिक् प्रतस्थे।

**व्याख्या**—ततः=पारसविजयानन्तरम्, रघुः=दिलीपपुत्रः,भास्वान्=सूर्यः, इव, शरैः=बाणैः, उस्रैः=किरणैः, इव, उदीच्यान्=उदग्भवान् राज्ञः, रसान्=जलानि, इव उद्धरिष्यन्=उन्मूलयिष्यन् कुबेरस्येयं दिक् कौबेरी तां कुबेरसंबन्धिनीम्, दिशम्=काष्ठाम्, उदीचीम्, प्रतस्थे=प्रचचाल।

**समा०**—उदीच्यां भवाः उदीच्याः, तान् उदीच्यान्।

**अभि०**—पारसविजयोत्तरं यथा सूर्यः स्वतीक्ष्णकिरणैः जलानि शोषयितुम् उत्तरस्यां दिशि प्रसरति, (उत्तरायणकाल इत्यर्थः) तथैव रघुरपि उत्तरदेशस्थान् राज्ञः विजेतुं उदीचीम् काष्ठां प्रति प्रतस्थे।

**हिन्दी**—पारस देशके राजाओं को जीतकर रघु उत्तर देश के राजाओं को जीतने के लिये इस प्रकार आगे बढ़े जैसे कि सूर्य किरणों से जलों को शोषित करने के लिये उत्तरायण काल में उत्तर दिशा की ओर बढ़ता है ॥ ६६ ॥

विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धांल्लग्नकुंकुमकेसरान् ॥ ६७ ॥

**सञ्जीविनी**—सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः। 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । सिन्धोस्तीरे विचेष्टनैरंगपरिवर्तनैर्विनीताध्वश्रमास्तस्य रघोर्वाजिनोऽश्वा लग्नाः कुंकुमकेसराः कुंकुमकुसुमकिञ्जल्का येषां तान् । यद्वा लग्नकुंकुमाः केसराः सटा येषां तान् । 'अथ कुंकुमम् । काश्मीरजन्म' इत्यमरः। 'केसरो नागकेसरे । तुरंगसिंहयोः स्कन्धकेशेषु बकुलद्रुमे । पुंनागवृक्षे किञ्जल्के स्यात्' इति हैमः । स्कन्धान्कायान् । 'स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । दुधुवुः कम्पयन्ति स्म । धूञ् कम्पने ॥ ६७ ॥

**अन्वयः**—सिन्धुतीरविचेष्टनैः, विनीताध्वश्रमाः, तस्य, वाजिनः, लग्नकुङ्कुमकेसरान्, स्कन्धान् दुधुवुः ।

**वाच्य०**—विनीताध्वश्रमैः तस्य वाजिभिः लग्नकुङ्कुमकेसराः स्कन्धाः दुधुविरे ।

**व्याख्या**—सिन्धोः = नदविशेषस्य, तीरे = तटे, विचेष्टनानि = अङ्गपरिवर्तनानि इति सिन्धुतीरविचेष्टनानि तैः, विनीतः = दूरीकृतः, अध्वनः = मार्गस्य श्रमः = खेदः, यैस्ते विनीताध्वश्रमाः, तस्य = रघोः, वाजिनः = अश्वाः, लग्नं = संसक्तं कुङ्कुमं = काश्मीरजन्म येषां तादृशाः केसराः किञ्जल्का येषां ते लग्नकुङ्कुमकेसराः तान् स्कन्धान् = स्कन्धप्रदेशान्, दुधुवुः = कम्पयामासुः ।

**समा०**—सिन्धोः तीरं सिन्धुतीरम् सिन्धुतीरे विचेष्टनानि सिन्धुतीरविचेष्टनानि तैः सिन्धुतीरविचेष्टनैः। अध्वनः श्रमः अध्वश्रमः विनीतः अध्वश्रमः यैस्ते विनीताध्वश्रमाः । लग्नं कुङ्कुमं येषु ते लग्नकुङ्कुमाः लग्नकुङ्कुमाः केसराः येषां ते लग्नकुङ्कुमकेसराः तान् लग्नकुङ्कुमकेसरान् ।

**अभि०**—सिन्धुनदस्य तीरे अङ्गपरिवर्तनेन खेदं दूरीकृत्य रघोः सेनाश्वाः, कुङ्कुमकेसरसंसक्तिमतः स्कन्धान् कम्पयामासुः ।

**हिन्दी**—सिन्धु नामक नद के तट पर लोटकर मार्ग की थकावट को दूर करते हुए रघु की सेना के घोड़ों ने अपने कन्धों के बालो में लगे हुए केसर के कणों को हिलाकर दूर किया ॥ ६७ ॥

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥

**सञ्जीविनी**—तत्रोदीच्यां दिशि भर्तृषु व्यक्तविक्रमम् । भर्तृवधेन स्फुटपराक्रममित्यर्थः, रघुचेष्टितं रघुव्यापारः हूणा जनपदाख्याः क्षत्रियाः । तेषामवरोधा अन्तःपुरस्त्रियः । तासां कपोलेषु पाटलस्य पाटलिम्नस्ताडनादिकृतारुण्यस्यादेश्युपदेशकं बभूव । अथवा पाटल आदेश्यादेष्टा यस्य तद्बभूव । स्वयं लेख्यायत इत्यर्थः ॥६८॥

**अन्वयः**—**तत्र, भर्तृषु, व्यक्तविक्रमम्, रघुचेष्टितम्, हूणावरोधानाम्, कपोलपाटलादेशि, बभूव ।**

**वाच्य०**—व्यक्तविक्रमेण रघुचेष्टितेन हूणावरोधानां कपोलपाटलादेशिना बभूवे ।

**व्याख्या**—तत्र = उदीच्यां दिशि, भर्तृषु = स्वामिषु, हतेष्वित्यर्थः, व्यक्तः = स्पष्टः, विक्रमः = पराक्रमः, यस्य तत् व्यक्तविक्रमम्, रघोः चेष्टितम् रघुचेष्टितम् = रघुव्यापारः, हूणानां पश्चिमक्षत्रियविशेषाणाम्, अवरोधाः = अन्तःपुराणि हूणावरोधाः तेषाम् हूणावरोधानाम् कपोलयोः = गण्डस्थलयोः, पाटलः = श्वेतरक्तः, इति कपोलपाटलः तमादेष्टुं शीलमस्य कपोलपाटलादेशि बभूव = अभूत् ।

**समा०**—व्यक्तः विक्रमः येन तत् व्यक्तविक्रमम् । रघोः चेष्टितं रघुचेष्टितम् । हूणानां अवरोधाः हूणावरोधाः तेषां हूणावरोधानाम् । पाटलस्य आदेशि पाटलादेशि कपोलेषु पाटलादेशि कपोलपाटलादेशि ।

**अभि०**—रघुः उदीच्यां दिशि हूणान्तःपुराङ्गनानां स्वामिनो हत्वा स्वपराक्रमं विस्तारयन् तासां कपोलप्रदेशान् ताडनादिकृतारुण्यांश्चकार । शोकविलापे वक्षः कपोलौ च ताडयन्ति स्त्रियः ।

**हिन्दी**—उत्तर दिशा में हूणाङ्गनाओं के लाल कपोलों की अरुणिमा ही, उनके पतियों पर प्रकट होनेवाले रघु के पराक्रम रूप व्यापार की सूचना दे रही थी ॥

काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥ ६९ ॥

**सञ्जीविनी**—काम्बोजा राजानः समरे तस्य रघोर्वीर्यं प्रभावम् । 'वीर्यं तेजः-वयोः' इति हैमः । सोढुमनीश्वरा अशक्ताः सन्तः । गजानां रघुदन्तिनामालानं वम् । भावे ल्युटि 'विभाषा लीयतेः' इत्यात्वम् । तेन परिक्लिष्टैः परिक्षतैटैर्वृक्षविशेषैः सार्धमानताः ।

**अन्वयः**—**काम्बोजाः, समरे, तस्य, वीर्यम्, सोढुम्, अनीश्वराः, गजालानक्लिष्टैः, अक्षोटैः, सार्धम्, आनताः ।**

**वाच्य०**—काम्बोजैः सोढुम् अनीश्वरैः आनतैः बभूवे ।

**व्याख्या**—कम्बोजस्येमे काम्बोजाः = कम्बोजदेशवासिनः, समरे = युद्धे, ' = रघोः, वीर्यम् = प्रभावम्, सोढुम् = सहनं कर्तुम्, न ईश्वराः अनीश्वराः = मर्थाः सन्तः, आलीयतेऽस्मिन्नित्यालानम्, गजानाम् = हस्तिनामालानं = बन्धनं लानं तेन परिक्लिष्टाः = परिक्षताः गजालानपरिक्लिष्टाः तैः अक्षोटैः = वृक्षषैः, सार्धम् = सह, आनताः = नम्रीभूताः ।

**समा०**—कम्बोजानां राजानः काम्बोजाः, न ईश्वराः अनीश्वराः । गजानानं गजालानम्, गजालानेन परिक्लिष्टाः गजालानपरिक्लिष्टाः, तैः गजालारेक्लिष्टैः ।

**अभि०**—कम्बोजदेशनिवासिनो राजानो युद्धे रघुप्रभावं सोढुमसमर्थाः सेनातबन्धनीभूताक्षोटवृक्षैः सहैव नम्रा बभूवुः ।

**हिन्दी**—कम्बोज देशवासी राजा युद्ध में रघु का तेज सहन न कर सके हाथियों के बाँधने से झुके हुए अखरोट के पेड़ों के साथ आप भी रघु के झुक गये ॥६९॥

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् ॥७०॥

**सञ्जीविनी**—तेषां काम्बोजानां सद्भिरश्वैर्भूयिष्ठा बहुलास्तुङ्गा द्रविणानां ण्यानाम्'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । राशय एवोपदा उपायनानि । 'उपायपग्राह्यमुपहारस्तथोपदा' इत्यमरः । कोशलेश्वरं कोशलदेशाधिपतिं तं रघुं शश्वद-

सकृद्विविशुः । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । तथाप्युत्सेका गर्वास्तु न विविशुः । सत्यपि गर्वकारणे न जगर्वेत्यर्थः ॥७०॥

**अन्वयः**—तेषाम्, सदश्वभूयिष्ठाः, तुङ्गाः, द्रविणराशयः, उपदाः, कोसलेश्वरम्, शश्वत्, विविशुः, उत्सेकाः, न विविशुः ।

**वाच्य०**—सदश्वभूयिष्ठैः, तुङ्गैः, द्रविणराशिभिः, उपदाभिः, कोसलेश्वरः, शश्वत्, विविशे, उत्सेकैः, न ।

**व्याख्या**—सन्तश्च तेऽश्वाः सदश्वाः = शोभनघोटकाः, तैर्भूयिष्ठाः = बहुलाः, तुङ्गाः = उन्नताः, द्रविणानाम् = हिरण्यानाम्, राशयः = समूहाः, एव उपदाः = उपायनानि, कोसलानामीश्वरस्तम् = कोसलाधिपतिं रघुम्, विविशुः = प्राविशन्, उत्सेकाः = गर्वाः, तु न विविशुः ।

**समा०**—सन्तश्च ते अश्वाश्च सदश्वाः, सदश्वैर्भूयिष्ठाः । द्रविणानां राशयः द्रविणराशयः । कोसलानामीश्वरः कोसलेश्वरः, तं कोसलेश्वरम् ।

**अभि०**—रघुपराजिताः काम्बोजाः रघवे स्वदेशोत्पन्नाश्वबहुलान् हिरण्योच्चराशीनुपहाररूपेण ददुः, किन्तु तावाप्यापि रघुः गर्वं न कृतवान् ।

**हिन्दी**—रघु से हारे हुए कम्बोज देश के राजाओं ने रघु के आगे अपने देश में उत्पन्न घोड़े जिसमें बहुत थे ऐसी द्रविणराशियाँ उपहार रूपसे भेंट कीं परन्तु राजा रघु को तनिक भी गर्व न हुआ ॥७०॥

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥७१॥

**सञ्जीविनी**—ततोऽनन्तरमश्वसाधनः सन् गौर्या गुरुं पितरं शैलं हिमवन्तम् । उद्धूतैरश्वखुरोद्भूतैर्धातूनां गैरिकादीनां रेणुभिस्तत्कूटांस्तस्य शृङ्गाणि । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । वर्धयन्निव आरुरोह । उत्पतद्धूलिदर्शनाद् गिरिशिखरवृद्धिभ्रमो जायत इति भावः ॥७१॥

**अन्वयः**—ततः, अश्वसाधनः, गौरीगुरुम्, शैलम्, उद्धूतैः, धातुरेणुभिः, तत्कूटान्, वर्धयन्, इव, आरुरोह ।

**वाच्य०**—अश्वसाधनेन, गौरीगुरुः शैलः, तत्कूटान्, वर्धयता, इव, आरुरुहे ।

**व्याख्या**—ततः = तदनन्तरम्, अश्वाः = घोटकाः, एव साधनानि समरसहायभूतानि यस्य स अश्वसाधनः, रघुः, गौर्याः = पार्वत्याः, गुरुः = पिता इति गौरी-

गुरुः = हिमालयः, तम् शैलम् = पर्वतम्, उद्धूतैः = उत्थापितैः, धातूनां = गैरिकादीनां रेणवः = धूलयः धातुरेणवः, तैः. तस्य हिमालयस्य कूटाः शिखरप्रदेशाः, तत्कूटास्तान्, वर्धयन् = वृद्धित्वमापादयन् इव, आरुरोह = आरोहत् ।

**समा०**—अश्वा एव साधनं यस्य सः अश्वसाधनः। गौर्या गुरुः गौरीगुरुः, तं गौरीगुरुम्। धातूनां रेणवः, तैः धातुरेणुभिः । तस्य कूटाः तत्कूटाः, तान् तत्कूटान्।

**अभि०**—काम्बोजविजयानन्तरं रघुः वाजिसैन्यसहायवान् सन् उत्तरदिशि वर्तमानान्नृपतीन्विजेतुकामः हयखुरोत्थापितगैरिकादिधातुरेणुभिः हिमालयशैलशिखराणि वर्धयन् इव हिमाचलमारुरोह ।

**हिन्दी**—काम्बोज विजय के पश्चात् घोड़ों की सेना लेकर राजा रघु उत्तर देश के राजाओं को जीतने के लिय घोड़ों के खुरों से उठाई हुई गे , मनः शिला आदि धातुओं की धूलि से शिखरों की ऊँचाई और भी बढ़ाते हुए हिमालय पर्वत पर चढ़े ॥ ७१ ॥

शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥

**सञ्जीविनी**—तुल्यसत्त्वानां सैन्यैः समानबलानाम् । गुहासु शेरत इति गुहाशयास्तेषाम् । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' इत्यमरः । सिंहानां हरीणाम् 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः। संबन्धि परिवृत्यावलोकितं शयित्वैव ग्रीवाभङ्गेनावलोकनं कर्तृ सैन्यघोषे सेनाकलकले संभ्रमकारणे सत्यप्यसंभ्रममन्तःक्षोभविरहित्वम् । नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते । शशंस कथयामास । सैन्येभ्य इत्यर्थाल्लिभ्यते । बाह्यचेष्टितमेव मनोवृत्तेरनुमापकमिति भावः । असंभ्रान्तत्वे हेतुस्तुल्यसत्त्वानामिति । नहि समबलः समबलाद्बिभेतीति भावः ॥ ७२ ॥

**अन्वयः**—तुल्यसत्त्वानाम्, गुहाशयानाम्, सिंहानाम्, परिवृत्य, अवलोकितम्, सैन्यघोषे, अपि, असम्भ्रमम्, शशंस ।

**वाच्य०**—सिंहानाम् परिवृत्य अवलोकितेन सैन्यघोषे, अपि, असम्भ्रमः शशंसे ।

**व्याख्या**—तुल्यं समानं सत्त्वं = बलं येषां ते तुल्यसत्त्वास्तेषाम् गुहासु कन्दरासु शेरत ति गुहाशयास्तेषाम् सिंहानाम् = मृगेन्द्राणाम्, "सिंहो मृगेन्द्रः

पञ्चास्यो हर्यक्षः केसरी हरिः" इत्यमरः, परिवृत्य = परावृत्य, अवलोकितम् = अवलोकनं 'कर्तृ' सेवायां समवेताः सैन्याः = सेनापुरुषाः तेषां घोषे = कलकलेऽपि न सम्भ्रमोऽसम्भ्रमः क्षोभाभावस्तम् शशंस = कथयामास ।

**समा०**—तुल्यं सत्त्वं येषां ते तुल्यसत्त्वाः तेषां तुल्यसत्त्वानाम् । गुहासु शेरते इति गुहाशयाः तेषां गुहाशयानाम् । सैन्यस्य घोषः सैन्यघोषः तस्मिन् सैन्यघोषे । न सम्भ्रमः, असम्भ्रमः तम् असंभ्रमम् ।

**अभि०**—सैन्यसमानबलशालिनो हिमालयगुहासु शयानाः सिंहाः सेना-कलकले सत्यपि केवलं ग्रीवाभङ्गेनैवावलोकयन्तः स्वभयराहित्यं सूचयन्ति स्म ।

**हिन्दी**—सेना के समान बलशाली, हिमालय की गुफाओं में लेटे हुए सिंह सेना शब्द के होने पर भी केवल गर्दन घुमाकर ही देखते हुए अपनी निर्भयता प्रकट कर रहे थे ॥ ७२ ॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥

**सञ्जीविनी**—भूर्जपत्रेषु । 'भूर्जपत्रो भुर्जो भूर्जो मृदुत्वक्चर्मिका मता' इति यादवः । मर्मरः शुष्कपर्णध्वनिः । 'मर्मरः शुष्कपर्णानाम्' इति यादवः । अयं च शुक्लादिशब्दवद्गुणिन्यपि वर्तते प्रयोज्यते च । 'मर्मरैरगुरुधूपगन्धिभिः' इति । अतो मर्मरीभूताः । मर्मरशब्दवन्तो भूता इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः । श्रोत्रसुखाश्चेति भावः । गङ्गाशीकरिणः । शीतला इत्यर्थः । मरुतो वाता मार्गे तं रघुम् सिषेविरे ॥ ७३ ॥

**अन्वयः**—भूर्जेषु, मर्मरीभूताः, कीचकध्वनिहेतवः, गङ्गाशीकरिणः, मरुतः, मार्गे, तम्, सिषेविरे ।

**वाच्य०**—मर्मरीभूतैः कीचकध्वनिहेतुभिः गङ्गाशीकरिभिः मरुद्भिः मार्गे सः सिषेवे ।

**व्याख्या**—भूर्जेषु = भूर्जपत्रेषु अमर्मरा मर्मराः सम्पद्यमाना इति मर्मरीभूताः = मर्मरशब्दवन्तः, ध्वनेः शब्दस्य हेतवः कारणानि इति ध्वनिहेतवः कीचकानां वेणुविशेषाणां ध्वनिहेतवः कीचकध्वनिहेतवः । तैः "कीचका वेणवस्ते स्युर्ये स्व-नन्त्यनिलोद्धताः" इत्यमरः। गङ्गायाः = भागीरथ्याः शीकराः = कणाः सन्त्येष्विति गङ्गाशीकरिणः मरुतः = वायवः, तम् = रघुम्, सिषेविरे = सेवितवन्तः ।

**समा०**—अमर्मराः मर्मराः सम्पद्यमानाः मर्मरीभूताः। कीचकानां ध्वनिः कीचकध्वनिः कीचकध्वनेः हेतवः कीचकध्वनिहेतवः। गङ्गायाः शीकराः गङ्गाशीकराः गङ्गाशीकरा एषां सन्तीति गङ्गाशीकरिणः।

**अभि०**—पर्वतारोहणसमये रघोः श्रमं, शुष्कभूर्जपत्रेषु मर्मरध्वनिवन्तः, कीचकाख्यवेणुषु कर्णाभिरामं ध्वनिं जनयन्तो गङ्गाम्भः शीतला वायवः, अपनीतवन्तः।

**हिन्दी**—हिमालय पर्वत पर चढ़ते समय रघु के परिश्रम को, सूखे भूर्जपत्रों में मर्मरध्वनि करने वाले तथा कीचक नामके बाँसों में मनोहर शब्द उत्पन्न करते हुए गङ्गा के शीतल वायु ने, दूर किया ॥ ७३ ॥

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥

**सञ्जीविनी**—सैनिकाः। सेनायां समवेताः। प्राग्वहतीयष्ठक्प्रत्ययः। नमेरूणां सुरपुंनागानां छायासु निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिर्वासितोत्सङ्गाः सुरभिततला दृषदः शिला अध्यास्याधिष्ठाय। 'अधिशीङ्स्थासां कर्म' इति कर्म। दृषत्स्वधिरुह्येत्यर्थः। विशश्रमुर्विश्रान्ताः ॥७४॥

**अन्वयः**—**सैनिकाः, नमेरूणाम्, छायासु, निषण्णमृगनाभिभिः, वासितोत्सङ्गाः, दृषदः, अध्यास्य, विशश्रमुः।**

**वाच्य०**—सैनिकैः, दृषदः, अध्यास्य विशश्रमे।

**व्याख्या**—सैनिकाः=सेनापुरुषाः, नमेरूणाम्=सुरपुन्नागनामकवृक्षविशेषाणाम्, छायासु=अनातपेषु, निषण्णाः=स्थिता ये मृगाः=हरिणाः कस्तूरीमृगा इत्यर्थः, इति निषण्णमृगाः, तेषां नाभयः=नाभिप्रदेशाः, ताभिः वासिताः=सुरभिताः, उत्सङ्गाः=मध्यभागा यासां तादृशीः दृषदः=शिलाप्रदेशान्, अध्यास्य=अधिष्ठाय, विशश्रमुः=श्रममपनीतवन्तः।

**समा०**—निषण्णाश्च ते मृगाश्च निषण्णमृगाः निषण्णमृगाणां नाभयः निषण्णमृगनाभयः, तैः निषण्णमृगनाभिभिः। वासिताः उत्सङ्गाः यासां ता वासितोत्सङ्गाः ता वासितोत्सङ्गाः।

**अभि०**—रघुसैनिकैर्नमेरुवृक्षतलेषु कस्तूरीमृगनाभिस्थकस्तूरीगन्धवासिततलभागेषु प्रस्तरेषु अधिष्ठाय पर्वतारोहणजनितः श्रमः दूरीकृतः।

हिन्दी—रघु के सैनिकों ने नमेरु (दिव्य सुपारी के) वृक्षों के नीचे स्थित कस्तूरी मृग की नाभि से जिनमें कस्तूरी की गन्ध बस गई है ऐसी शिलाओं के ऊपर बैठकर, पर्वत पर चढ़ने के परिश्रम को दूर किया ॥७४॥

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥

सञ्जीविनी—सरलेषु देवदारुविशेषेष्वासक्तानि यानि मातङ्गानां गजानाम् । ग्रीवासु भवानि ग्रैवेयाणि कण्ठशृङ्खलानि । 'ग्रीवाभ्योऽण्च' इति चकाराड्ढञ्प्रत्ययः । तेषु स्फुरितत्विषः प्रतिफलितभास ओषधयो ज्वलन्तो ज्योतिर्लताविशेषा नक्तं रात्रौ नेतुर्नायकस्य रघोरस्नेहदीपिकास्तैलनिरपेक्षाः प्रदीपा आसन्।

अन्वयः—सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः, ओषधयः, नक्तम्, नेतुः, अस्नेहदीपिकाः, आसन् ।

वाच्य०—सरलासक्तमातङ्गग्रैवेयस्फुरितत्विड्भिः ओषधिभिः नेतुः नक्तम् अस्नेहदीपिकाभिः अभूयत ।

व्याख्या—सरलेषु = सरलाख्यवृक्षेषु आसक्ताः = बद्धा इति सरलासक्ताः,तादृशाः ये मातङ्गाः = गजाः इति सरलासक्तमातङ्गाः, तेषां ग्रैवेयैः = कण्ठशृंखलाभिः स्फुरिता = प्रतिफलिता, त्विट् = कान्तिर्यासां ताः सरलासक्तमातंगग्रैवेयस्फुरित त्विषः ओषधयः = ज्योतिर्लताविशेषाः, नक्तम् = रात्रौ, नेतुः = नायकस्य रघोः न विद्यते स्नेहो यासु ता अस्नेहाम्तलरहितास्तादृश्यो या दीपिकाः = प्रकाशपात्राणीति अस्नेहदीपिकाः विना तैलं ज्वलन्तो दीपाः इत्यर्थः, आसन् = अभूवन् ।

समा०—ग्रीवासु भवानि ग्रैवेयाणि, मातङ्गानां ग्रैवेयाणि मातङ्गग्रैवेयाणि, सरलेषु आसक्तानि सरलासक्तानि सरलासक्तानि च तानि मातङ्गग्रैवेयाणिच सरलासक्तमातङ्गग्रैवेयाणि । सरलासक्तमातङ्गग्रैवेयेषु स्फुरिताः त्विषः यासां ताः सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः । स्नेहस्य दीपिकाः स्नेहदीपिकाः न स्नेहदीपिका अस्नेहदीपिकाः ।

अभि०—हिमालयशिखरस्थस्य सैन्यसहितस्य रघोः रात्रिसमये ज्योतिर्लताविशेषा एव तैलानपेक्षप्रदीपकार्यमकुर्वन् । येषां प्रभा सरलाख्यवृक्षेषु निबद्धानां गजानां कण्ठशृङ्खलासु प्रतिफलितासीत् ।

हिन्दी—हिमालय पर्वत पर स्थित सेना सहित रघु के लिये रात्रि के समय बिना तेल के जलने वाले दीपकों का कार्य रात में चमकनेवाली ओषधिलताओं ने किया, जिनका प्रकाश चीड़ के वृक्षों में बँधे हुए हाथियों के गले की जंजीरों में प्रतिफलित होता था ॥७५॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥७६॥

**सञ्जीविनी**—तस्य रघोरुत्सृष्टेषूज्झितेषु निवासेषु सेनानिवेशेषु कण्ठरज्जुभिर्गजग्रैवेयैः । क्षता निष्पिष्टास्त्वचो येषां ते देवदारवः किरातेभ्यो वनचरेभ्यो गजानां वर्ष्म प्रमाणम् । 'वर्ष्म देहप्रमाणयोः' इत्यमरः । शशंसुः कथितवन्तः । देवदारुस्कन्धत्वक्क्षतैर्गजानामौन्नत्यमनुमीयत इत्यर्थः ॥७६॥

**अन्वयः**—तस्य, उत्सृष्टनिवासेषु, कण्ठरज्जुक्षतत्वचः, देवदारवः, किरातेभ्यः, गजवर्ष्म, शशंसुः ।

**वाच्य०**—कण्ठरज्जुक्षतत्वग्भिः, देवदारुभिः, गजवर्ष्म, शशंसे ।

**व्याख्या**—तस्य = रघोः, उत्सृष्टाः = परित्यक्ताः ये निवासाः = वासभूमिप्रदेशाः इत्युत्सृष्टनिवासास्तेषु, कण्ठस्य = जलप्रदेशस्य रज्जवः इति कण्ठरज्जव ताभिः क्षता खण्डिता त्वक वल्कलम् येषां ते कण्ठरज्जुक्षतत्वचः, देवदारवः = देवदारुवृक्षाः, किरातेभ्यः = वनचरम्लेच्छजातिभ्यः, गजानां = सेनाकरिणाम्, वर्ष्म = प्रमाणम् इति गजवर्ष्म देहौन्नत्यमिति यावत् शशंसुः = कथयामासुः ।

**समा०**—उत्सृष्टाश्च ते निवासाश्च उत्सृष्टनिवासाः, तेषु उत्सृष्टनिवासेषु । कण्ठानां रज्जवः कण्ठरज्जवः, कण्ठरज्जुभिः क्षता त्वक् येषां ते कण्ठरज्जुक्षतत्वचः । गजानां वर्ष्म गजवर्ष्म, तत् गजवर्ष्म ।

**अभि०**—रघुणा परित्यक्तेषु सेनानिवेशेषु किराताः देवदारुवृक्षेषु निबद्धगजकण्ठबन्धनीभूतशृङ्खलाकर्षणकारणेन भिन्नत्वक्षु तदीयगजशरीरौन्नत्यमजानन् ।

**हिन्दी**—हिमालय पर्वत पर रघु के द्वारा छोड़े गये सेना के पड़ावों में किरात लोगों ने देवदारु वृक्षों में बँधे सेना के हाथियों की कण्ठरज्जुओं से उखड़ी हुई छालों से रघु के हाथियों की ऊँचाई जानी ॥७६॥

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥७७॥

**सञ्जीविनी**—तत्र हिमाद्रौ रघोः। पर्वते भवैः। 'पर्वताच्च' इति छप्रत्ययः। गणैरुत्सवसंकेताख्यैः सप्तभिः सह। 'गणानुत्सवसंकेतानजयत्सप्त पाण्डवः' इति महाभारते। नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानामश्मनां च निष्पेषेण संघर्षेणोत्पतिता अनला यस्मिस्तत्तथोक्तम्। 'क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः' यादवः। घोरं भीमं जन्यं युद्धमभूत्। 'युद्धमायोधनं जन्यम्' इत्यमरः ॥७७॥

**अन्वयः**—तत्र, रघोः, पर्वतीयैः, गणैः, नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्, घोरम्, जन्यम्, अभूत्।

**वाच्य०**—नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलेन घोरेण, जन्येन, अभावि।

**व्याख्या**—तत्र = हिमालयपर्वते, रघोः = दिलीपपुत्रस्य, पर्वते भवाः पर्वतीयाः पर्वतनिवासिनः तैः पर्वतीयैः। गणैः = उत्सवसंकेताख्यैः, नाराचाः = बाणविशेषाः, क्षेपणीयाः = भिन्दिपालाः, अश्मानः = प्रस्तराः एषामितरेतरयोगः नाराचक्षेपणीयाश्मानः तेषां निष्पेषेण = संघर्षेण उत्पतितः = उत्पन्नः, अनलः = वह्निर्यस्मिस्तत्तथोक्तम्, घोरं = भयानकम्, जन्यम् = युद्धम्, अभूत् = बभूव।

**समा०**—नाराचाश्च क्षेपणीयाश्च अश्मानश्च नाराचक्षेपणीयाश्मानः, नाराचक्षेपणीयाश्मनां निष्पेषः नाराचक्षेपणीयाश्मनिष्पेषः, नाराचक्षेपणीयाश्मनिष्पेषेण उत्पतितः अनलः यस्मिन् तत् नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्।

**अभि०**—हिमालये रघोः उत्सवसंकेताख्यगणैः सह भयंकरं युद्धमभूत्। यत्र प्रयुक्तैः, नाराचैः, भिन्दिपालैः, प्रस्तरैश्च अन्योन्यसंघर्षेण वह्निरुत्पन्नोऽभूत्।

**हिन्दी**—हिमालय पर्वत पर रघु का उत्सवसङ्केत नामक गणों से घोर युद्ध हुआ। जिसमें प्रयोग किये गये बाणों, भिन्दिपालों तथा पत्थरों के पारस्परिक संघर्ष से अग्नि उत्पन्न हो जाती थी ॥७७॥

शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥७८॥

**सञ्जीविनी**—स रघुः शरैर्बाणैरुत्सवसंकेतान्नाम गणान्विरतोत्सवान्कृत्वा। जित्वेत्यर्थः। किनरान्बाह्वोः स्वभुजयोर्जयोदाहरणं जयख्यापकं प्रबन्धविशेषं गाप-

यामास । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इत्यनेन किंनराणामपि कर्तृत्वात्कर्मत्वम् ॥७८॥

**अन्वयः**—सः, शरैः, उत्सवसंकेतान्, विरतोत्सवान्, कृत्वा, बाह्वोः, जयोदाहरणम्, किन्नरान्, गापयामास ।

**वाच्य०**—तेन, शरैः किन्नराः, बाह्वोः, जयोदाहरणम्, गापयाञ्चक्रिरे ।

**व्याख्या**—सः = रघुः, शरैः = बाणैः, उत्सवाश्च संकेताश्च उत्सवसंकेताः तान् = तन्नामकान् गणान्, विरतः = शान्तः, उत्सवः = हर्षः, येषां ते विरतोत्सवाः, तान्, कृत्वा = विधाय, बाह्वोः = भुजयोः, जयस्योदाहरणम् = जयोदाहरणम् = तत् विजयख्यापकप्रबन्धं किन्नरान् = गन्धर्वान् गापयामास = गानं कारयामास ।

**समा०**—विरत उत्सवो येषां ते विरतोत्सवाः, तान् विरतोत्सवान् । उदाह्रियते अनेनेत्युदाहरणम्, जयस्योदाहरणं जयोदाहरणम्, तत् जयोदाहरणम् ।

**अभि०**—रघुः उत्सवसंकेताख्यान्गणान् विजित्य हृतहर्षांश्च तान् कृत्वा स्वविजयख्यापकं प्रबन्धं गन्धर्वान् गापयामास ।

**हिन्दी**—रघु ने हिमालय पर्वत पर उत्सवसङ्केत नामक गणों को जीत कर उनके हर्षोत्सवों को फीका बनाकर अपने पराक्रम का गुणगान गन्धर्वों से कराया ॥७८॥

परस्परेण विज्ञातस्तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥

**सञ्जीविनी**—तेषु गणेषूपायनयुक्ताः पाणयो येषां तेषु सत्सु परस्परेणान्योन्यं राज्ञा हिमवतः सारो धनरूपो विज्ञातः । हिमाद्रिणापि राज्ञः सारो बलरूपो विज्ञातः । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥

**अन्वयः**—तेषु उपायनपाणिषु, परस्परेण, राज्ञा, हिमवतः, सारः, हिमाद्रिणा, च, राज्ञः, सारः, विज्ञातः ।

**वाच्य०**—परस्परम् राजा हिमवतः सारम् हिमवांश्च राज्ञः सारम् विज्ञातवान् ।

**व्याख्या**—तेषु = उत्सवसङ्केताख्येषु गणेषु, उपायनानि = उपहाराः पाणिषु = हस्तेषु येषां त उपायनपाणयः तेषु उपायनपाणिषु सत्सु परस्परेण = अन्योन्यम्,

राज्ञा = रघुणा, हिममस्यास्तीति हिमवान् तस्य = हिमालयस्य, सारः = धनरूपः, हिमवता = हिमालयेन च, राज्ञः = रघोः, सारः = बलरूपः, विज्ञातः = बुद्धः ।

**समा०**—उपायनानि पाण्योर्येषां ते उपायनपाणयः तेषु उपायनपाणिषु ।

**अभि०**—यदा पराभूता उत्सवसंकेताख्यगणाः हस्तेषूपायनानि आदाय रघुसंमुखमागतास्तदा रघुणा हिमालयस्य धनरूपा समृद्धिर्विज्ञाता । हिमवतापि युद्धक्रियया रघोर्बलं विज्ञातम् ।

**हिन्दी**—जब कि हारे हुए उत्सवसंकेतगण राजा रघु के सामने हाथों में उपहार लेकर प्रस्तुत हुए तब राजाने हिमालय का समृद्धिरूप सार जाना तथा हिमालयने भी राजा का बलरूप सार जाना ॥ ७९ ॥

तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥

**सञ्जीविनी**—स रघुस्तत्र हिमाद्रावक्षोभ्यमधृष्यं यशोराशिं विनेश्य निधाय । पौलस्त्येन रावणेन तुलितस्य चालितस्याद्रेः कैलासस्य ह्रियमादधानो जनयन्निव । अवरुरोहावतार । कैलासमगत्वैव प्रतिनिवृत्त इत्यर्थः । नहि शूराः परेण पराजितमभियुज्यन्त इति भावः ॥ ८० ॥

**अन्वयः**—सः, तत्र, अक्षोभ्यम्, यशोराशिम्, निवेश्य, पौलस्त्यतुलितस्य, अद्रेः, ह्रियम्, आदधानः, इव, अवरुरोह ।

**वाच्य०**—तेन आदधानेन इव अवरुरुहे ।

**व्याख्या**—सः = रघुः तत्र = हिमालये क्षोभितुं योग्यं क्षोभ्यं न क्षोभ्यम् अक्षोभ्यम् = अधृष्यम्, स्थिरमित्यर्थः, यशसां राशिर्यशोराशिस्तम् = कीर्तिसमूहम्, निवेश्य = निधाय पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यः रावणः तेन तुलितः = चालितः इति पौलस्त्यतुलितः तस्य, अद्रेः = पर्वतस्य कैलासस्य, ह्रियम् = लज्जाम्, आदधानः = जनयन्निव, अवरुरोह = अवततार ।

**समा०**—क्षोभितुं योग्यः क्षोभ्यः न क्षोभ्यः अक्षोभ्यः तम् अक्षोभ्यम् । यशसो राशिः यशोराशिः तं यशोराशिम् । पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यः पौलस्त्येन तुलितः पौलस्त्यतुलितः तस्य पौलस्त्यतुलितस्य ।

**अभि०**—स रघुः तत्र हिमाद्रौ स्थिरं यशोराशिं संस्थाप्य रावणोत्थापित

पराजितोऽयम् इति निन्दाविचारेण कैलाससमीपमगत्वैव प्रतिनिवृत्तः। तेन च ह्रीरिवोत्पादिता कैलासस्य।

**हिन्दी**—रघु हिमालय पर्वत पर अपने स्थिर यश को स्थापित करके 'रावण से उठाया हुआ यह पर्वत तो पराजित है' इस निन्दा के विचार से कैलास पर न जाकर उसे लज्जित करते हुए वहाँ से नीचे उतर पड़े॥ ८०॥

चकम्पे तीर्णलौहित्ये तस्मिन्प्राग्ज्योतिषेश्वरः।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः॥ ८१॥

**सञ्जीविनी**—तस्मिन्रघौ तीर्णा लौहित्या नाम नदी येन तस्मिंस्तीर्णलौहित्ये सति। प्राग्ज्योतिषाणां कामरूपाणां जनपदानामीश्वरस्तस्य रघोर्गजानामालानतां गजबन्धनस्तम्भतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान्॥

**अन्वयः—तस्मिन्, तीर्णलौहित्ये, सति, प्राग्ज्योतिषेश्वरः, तद्गजालानतां प्राप्तैः, कालागुरुद्रुमैः, सह, चकम्पे।**

**वाच्य०**—प्राज्योतिषेश्वरेण चकम्पे।

**व्याख्या**—तस्मिन् = रघौ तीर्णा लौहित्याः तन्नामकनदीविशेषः येन सः तीर्णलौहित्यः तस्मिन् सति, प्राग्ज्योतिषाणाम् ईश्वरः प्राग्ज्योतिषेश्वरः = कामरूपदेशाधिपतिः तस्य = रघोर्गजाः = हस्तिनः, तद्गजाः, आलानस्य = द्विपबन्धनस्तम्भस्य भावः आलानता तद्गजानामालानता ताम् सेनागजबन्धनस्तम्भत्वं प्राप्तैः = गतैः कालागुरूणां द्रुमाः कालगुरुद्रुमाः, तैः = कालागुरुवृक्षैः, सह = सार्धम्, चकम्पे = कम्पितवान्।

**समा०**—तीर्णा लौहित्या येन सः तीर्णलौहित्यः तस्मिन् तीर्णलौहित्ये। प्राग्ज्योतिषाणामीश्वरः प्राग्ज्योतिषेश्वरः। तस्य गजाः तद्गजाः तद्गजानामालानानि तद्गजालानानि तद्गजालानानां भावः तद्गजालानता तां तद्गजालानताम्। कालाश्च ते अगुरुद्रुमाश्च कालागुरुद्रुमाः तैः कालागुरुद्रुमैः।

**अभि०**—हिमाद्रिविजयानन्तरं लौहित्याख्यनदीमुत्तीर्णेन रघुणा कामरूपाधिपतिहृदये तथैव कम्पः कृतः यथा तद्गजैः स्वबन्धनस्तम्भतां नीतेषु कालागुरुद्रुमेषु।

**हिन्दी**—हिमालयविजय के पश्चात्, लौहित्य नामक नदी को पार करके रघु ने कामरूपाधिपति के हृदय में वैसा ही कम्प उत्पन्न किया जैसा कि उसके गजों ने अपने बन्धन स्तम्भभूत कालागुरु वृक्षों में॥ ८१॥

न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम् ।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२ ॥

**सञ्जीविनी**—स प्राग्ज्योतिषेश्वरो रुद्धार्कमावृतसूर्यम् । अधारावर्षं च तद्दुर्दिनं च धारावृष्टिं विना दुर्दिनीभूतम् । अस्य रघो रथवर्त्मरजोऽपि न प्रसेहे । पताकिनीं सेनां तु कुत एव प्रसेहे । न कुतोऽपीत्यर्थः ॥८२॥

**अन्वयः**—सः, रुद्धार्कम्, अधारावर्षदुर्दिनम्, अस्य, रथवर्त्मरजः, अपि, न, प्रसेहे, पताकिनीम्, सेनाम्, तु, कुतः, एव ।

**वाच्य०**—तेन अस्य रथवर्त्मरजः अपि न प्रसेहे, पताकिनी तु कुतः ।

**व्याख्या**—सः = कमरूपदेशाधिपतिः रुद्धः = प्रतिरुद्धः आवृत इति यावत्, अर्कः = सूर्यः येन तत् रुद्धार्कम् न विद्यते धारावर्षो = धारावृष्टिः यस्मिन् तत् अधारावर्षं तादृशं यत् दुर्दिनम् = मेघच्छन्नदिवसम् इति अधारावर्षदुर्दिनम् 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः, अस्य = रघोः, रथानां = स्यन्दनानां वर्त्म = मार्गः रथवर्त्म तत्र विद्यमानं रजः तत् न नैव, प्रसेहे = सोढवान्, पताका विद्यतेऽस्याः पताकिनी = सेना ताम् तु कुत एव प्रसेहे न कुतोऽपीत्यर्थः ।

**समा०**—रुद्धः अर्कः येन तत् रुद्धार्कम्, तत् रुद्धार्कम् । धाराणां वर्षं धारावर्षम् न विद्यते धारावर्षं यस्मिन् तत् अधारावर्षम्, अधारावर्षञ्च तद् दुर्दिनञ्च अधारावर्षदुर्दिनम्, तत् अधारावर्षदुर्दिनम् । रथानां वर्त्म रथवर्त्म रथवर्त्मनः रजः रथवर्त्मरजः, तत् रथवर्त्मरजः । पताका अस्या अस्तीति पताकिनी तां पताकिनीम् ।

**अभि०**—कामरूपदेशाधिपतिः सूर्यमण्डलावरणकारिणीं वृष्टिं विना दुर्दिवसं कुर्वतीं रघुसेनाधूलिमपि दूरतो दृष्ट्वा न सहनं चकार । भीत इत्यर्थः । सेनां तु कुत एव ।

**हिन्दी**—कामरूपदेश का स्वामी सूर्य को भी ढक देने वाली विना वर्षा के दुर्दिन कर देनेवाली सेना की धूलि को भी सहन न कर सका अत्यन्त भीत हो गया, फिर सेना को तो कैसे सहन करता ॥८२॥

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥

**सञ्जीविनी**—कामरूपाणां नाम देशानामीशोऽत्याखण्डलविक्रममतीन्द्रपराक्रमं तं रघुम् भिन्नाः स्रवन्मदाः कटा गण्डा येषां तैर्नागैर्गजैः साधनैर्भेजे । नागा-

न्दत्त्वा शरणं गत इत्यर्थः। कीदृशैर्नागैः। यैरन्यान्रघुव्यतिरिक्तान्नृपानुपरुरोध। शूराणामपि शूरो रघुरिति भावः ॥८३॥

**अन्वयः**—कामरूपाणाम् ईशः, अत्याखण्डलविक्रमम्, तम्, भिन्नकटैः, नागैः, भेजे, यैः, अन्यान्, उपरुरोध।

**वाच्य०**—कामरूपाणाम् ईशेन अत्याखण्डलविक्रमः स भेजे यैः अन्ये उपरुरुधिरे।

**व्याख्या**—कामरूपाणाम् = तन्नामकदेशविशेषाणाम्, ईशः = स्वामी आखण्डलस्य = इन्द्रस्य, विक्रमः = पराक्रमः, इत्याखण्डलविक्रमः सोऽतिक्रान्तो येन अत्याखण्डलविक्रमः तम् = रघुम्, भिन्नाः पृथग्भूताः कटाः = गण्डप्र-देशाः येषां ते भिन्नकटाः तैः नागैः = गजैः, भेजे = सिषेवे। गजानुपायनीकृत्य शरणागत इत्यर्थः, यैः = नागैः अन्यान् = शत्रून्, उपरुरोध = निराकरोत्।

**समा०**—आखण्डलस्य विक्रमः आखण्डलविक्रमः आखण्डलविक्रमम् अतिक्रान्तः अत्याखण्डलविक्रमः, तम् अत्याखण्डलविक्रमम्। भिन्नाः कटाः येषां ते भिन्नकटाः, तैः भिन्नकटैः।

**अभि०**—कामरूपदेशाधिपतिः इन्द्राधिकपराक्रमम् रघुम् तान् गजानुपायनीकृत्य शरणं गतः यैः पूर्वम् अन्यशत्रून् जितवान्।

**हिन्दी**—कामरूपदेश का राजा इन्द्र से भी अधिक पराक्रम वाले रघु के आगे उन हाथियों को भेंट में लेकर उपस्थित हुआ जिनसे शत्रुओं को जीता करता था ॥८३॥

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम्।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥८४॥

**सञ्जीविनी**—कामरूपेश्वरो हेमपीठस्याधिदेवतां तस्य रघोः पादयोश्छायां कनकमयपादपीठव्यापिनीं कान्तिं रत्नान्येव पुष्पाणि तेषामुपहारेण समर्पणेनानर्चार्चयामास ॥८४॥

**अन्वयः**—कामरूपेश्वरः, हेमपीठाधिदेवताम्, तस्य, पादयोः, छायाम्, रत्नपुष्पोपहारेण, आनर्च।

**वाच्य०**—कामरूपेश्वरेण, हेमपीठाधिदेवता, तस्य, पादयोः, छाया, रत्नपुष्पोपहारेण, आनर्चे।

**व्याख्या**—कामरूपाणाम् = तन्नामकदेशविशेषाणाम्, ईश्वरः = राजा, हेम्नः = सुवर्णस्य पीठमासनमिति हेमपीठम्, तस्याधिदेवता = अधिष्ठात्री देवी हेमपीठाधिदेवता ताम्, तस्य = रघोः, पादयोः = चरणयोः, छायाम् = कान्तिम्, रत्नान्येव हीरकादीन्येव पुष्पाणि रत्नपुष्पाणि तेषामुपहारः = उपायनम्, रत्नपुष्पोपहारस्तेन आनर्च = पूजयामास।

**समा०**—कामरूपाणामीश्वरः कामरूपेश्वरः। हेम्नः पीठं हेमपीठम्, हेमपीठस्य अधिदेवता हेमपीठाधिदेवता, तां हेमपीठाधिदेवताम्। रत्नान्येव पुष्पाणि रत्नपुष्पाणि, रत्नपुष्पाणामुपहारः रत्नपुष्पोपहारः, तेन रत्नपुष्पोपहारेण।

**अभि०**—कामरूपाधिपतिः सुवर्णसिंहासनाधिष्ठात्रीं रघुपादच्छायां रत्नरूपैः पुष्पैः पूजयामास।

**हिन्दी**—कामरूप देश के राजा ने स्वर्णसिंहासन की अधिष्ठात्री रघु की पादकान्ति को रत्नरूपी पुष्पों से पूजा ॥८४॥

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम्।
रजो विश्रामयन्राज्ञां छत्रशून्येषु मौलिषु ॥८५॥

**सञ्जीविनी**—जिष्णुर्जयशीलः। "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः। स रघुरितीत्थं दिशो जित्वा रथोद्धतं रजश्छत्रशून्येषु। रघोरेकच्छत्रकत्वादिति भावः। राज्ञां मौलिषु किरीटेषु। 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्धजे' इति हैमः। विश्रामयन् सङ्क्रामयन्नित्यर्थः। न्यवर्तत निवृत्तः ॥८५॥

**अन्वयः**—जिष्णुः, इति, दिशः, जित्वा, रथोद्धतम्, रजः, छत्रशून्येषु, राज्ञाम्, मौलिषु, विश्रामयन्, न्यवर्तत।

**वाच्य०**—जिष्णुना, तेन, इति, दिशः, जित्वा, रथोद्धतम्, रजः, मौलिषु, विश्रामयता, न्यवृत्यत।

**व्याख्या**—जिष्णुः = जयनशीलः, इति = एवम्, दिशः = काष्ठाः, जित्वा = विजयीकृत्य, रथेभ्य उद्धतम् रथोद्धतं तत् = स्यन्दनोत्थापितम्, रजः = धूलिम्, छत्रैः = आतपत्रैः शून्यानि = रहितानि छत्रशून्यानि तेषु, राज्ञाम् = नृपाणाम्, मौलिषु = मस्तकेषु, विश्रामयन् = संक्रामयन्, न्यवर्तत = निववृते।

**समा०**—रथेन उद्धतं रथोद्धतम् तत् रथोद्धतम्। छत्रेण शून्याः छत्रशून्याः, तेषु छत्रशून्येषु।

**अभि०**—एवं रघुः सर्वा अपि दिशो विजित्य पराजितेषु छत्ररहितराजशिरःसु निजसेनोत्थापितां धूलिं विश्रामयन् दिग्विजयान्निवृत्तः ।

**हिन्दी**—इस प्रकार सम्पूर्ण दिशाओं को जीत कर रघु पराजित राजाओं के छत्ररहित सिरों पर अपनी सेना की धूलि गिराते हुए दिग्विजय से लौटे ॥८५॥

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥८६॥

**सञ्जीविनी**—सः रघुः सर्वस्वं दक्षिणा यस्य यस्मिन्वा तं सर्वस्वदक्षिणम् । 'विश्वजित्सर्वस्वदक्षिणः' इति श्रुतेः । विश्वजितं नाम यज्ञमाजह्रे । कृतवानित्यर्थः॥ युक्तं चैतदित्याह–सतां साधूनाम् । वारिमुचां मेघानामिव । आदानमर्जनं विसर्गाय त्यागाय हि । पात्रविनियोगायेत्यर्थः ॥ ८६ ॥

**अन्वयः**—सः, सर्वस्वदक्षिणम्, विश्वजितम् यज्ञम्, आजह्रे, हि सताम्, वारिमुचाम्, इव, आदानम्, विसर्गाय भवतीति शेषः ।

**वाच्य०**—तेन, सर्वस्वदक्षिणः, विश्वजित्, यज्ञः, आजह्रे, आदानेन, भूयते ।

**व्याख्या**—सः = रघुः, सर्वस्वं = सकलं दक्षिणा यस्य तादृशम् विश्वजितम् = विश्वजिन्नामकम्, यज्ञम् = मखम्, आजह्रे = कृतवान्, हि = यतः, सताम् = सज्जनानाम्, वारि = जलं मुञ्चन्तीति वारिमुचो मेघास्तेषाम्, इव = यथा, आदानम् = ग्रहणम्, विसर्गाय = त्यागाय, भवतीति शेषः ।

**समा०**—सर्वञ्च तत् स्वञ्च सर्वस्वम् सर्वस्वं दक्षिणा यस्य सः सर्वस्वदक्षिणः तं सर्वस्वदक्षिणम् । वारि मुञ्चन्तीति वारिमुचः तेषां वारिमुचाम् ।

**अभि०**—दिग्विजयानन्तरं रघुः विश्वजिन्नामकं यज्ञं कर्तुमारेभे । यतः यथा मेघाः समुद्राज्जलमादाय तद्वर्षणेन विश्वहितं कुर्वन्ति तथैव सज्जनानामपि द्रव्यसञ्चयः परहितायैव भवति ।

**हिन्दी**—दिग्विजय के पश्चात् रघु ने विश्वजित् नामक यज्ञ आरम्भ किया जिसमें सम्पूर्ण धन ही दक्षिणा के रूप में दिया जाता था । जैसे मेघ समुद्र से जल ग्रहण करके वृष्टि द्वारा जनता का लाभ करते हैं उसी प्रकार सज्जनों का द्रव्यसञ्चय भी परोपकार के लिये ही होता है ॥ ८६ ॥

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान्स्वपुरनिवृत्तयेऽनुमेने ॥८७॥

**सञ्जीविनी**—काकुत्स्थो रघुः सत्रान्ते यज्ञान्ते । 'सत्रमाच्छादने यज्ञे सदादाने वनेपि च' इत्यमरः । सचिवानाममात्यानां सखेति सचिवसखः सन् । 'सचिवो भृतकेऽमात्ये' इति हैमः । तेषामत्यन्तानुसरणद्योतनार्थं राज्ञः सखित्वव्यपदेशः । 'राजाहःसखिभ्यष्टच्' । गुर्वीभिर्महतीभिः । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके' इति हैमः । पुरस्क्रियाभिः पूजाभिः शमितं पराजयेन व्यलीकं दुःखं वैलक्ष्यं वा येषां तान् । 'दुःखे वैलक्ष्ये व्यलीकम्' इति यादवः । चिरविरहेणोत्सुका उत्कण्ठिता अवरोधा अन्तःपुराङ्गना येषां तान् । राज्ञोऽपत्यानि राजन्याः क्षत्रियास्तान् 'राजश्वशुराद्यत्' इत्यपत्यार्थे यत्प्रत्ययः । 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनायानुमेनेऽनुज्ञातवान् । प्रहर्षिणी वृत्तमेतत् । तदुक्तम्—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति ॥८७॥

**अन्वयः**—काकुत्स्थः, सत्रान्ते, सचिवसखः, सन्, गुर्वीभिः, पुरस्क्रियाभिः, शमितपराजयव्यलीकान्, चिरविरहोत्सुकावरोधान्, राजन्यान्, स्वपुरनिवृत्तये, अनुमेने ।

**वाच्य०**—काकुत्स्थेन, सचिवसखेन, सता, शमितपराजयव्यलीकाः चिरविरहोत्सुकावरोधाः, राजन्याः, अनुमेनिरे ।

**व्याख्या**—ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः = ककुत्स्थवंश्यो रघुः,सत्रस्य = मखस्यान्तस्तस्मिन् = यज्ञान्ते सचिवानाममात्यानां सखा मित्रं सचिवसखः = अमात्यसहायः सन्, गुर्वीभिः = महतीभिः पुरस्क्रियाभिः = पूजाभिः,शमितं = दूरीकृतं पराजयेन = पराभवेन व्यलीकं = दुःखं येषां ते शमितपराजयव्यलीकास्तान्, चिरं विरहश्चिरविरहः = चिरकालवियोगः तेन उत्सुकः = उत्कण्ठितः,अवरोधः = अन्तःपुरवर्गः येषां ते चिरविरहोत्सुकावरोधास्तान्, राजन्यान् = राज्ञोऽपत्यानि राजन्याः क्षत्रियास्तान् 'राजश्वशुराद्यत्' इति यत्, स्वस्य पुराणि स्वपुराणि तानि प्रतिनिवृत्तिः स्वपुरनिवृत्तिः तस्यै = स्वनगरगमनाय, अनुमेने = अनुज्ञातवान् ।

समा०—सत्रस्य अन्तः सत्रान्तः, तस्मिन् सत्रान्ते। सचिवानां सखा सचिवसखः। पराजयेन व्यलीकं येषां ते पराजयव्यलीकाः तान् पराजयव्यलीकान्। चिरं विरहः चिरविरहः, चिरविरहेण उत्सुकः अवरोधः येषां ते चिरविरहोत्सुकावरोधाः तान् चिरविरहोत्सुकावरोधान्। स्वस्य पुरं स्वपुरं, स्वपुरं प्रति निवृत्तिः स्वपुरनिवृत्तिः, तस्यै स्वपुरनिवृत्तये।

अभि०—रघुः विश्वजिन्नामकयज्ञानन्तरम्, अमात्यानुमत्या पराजयखिन्नान् विरहितान्तःपुरान् राज्ञः पुरस्कारादिना विशेषसंमानितान् कृत्वा स्वनगरगमनं प्रति अनुमतिं ददौ।

हिन्दी—रघु ने विश्वजित् नामक यज्ञ करने के अनन्तर अमात्यों की अनुमति से, विशेष आदर सत्कार द्वारा, यज्ञ में आये हुए पराजित राजाओं का दुःख शमन किया तथा, उनके अन्तःपुर चिरकाल से विरहित हैं इस दृष्टि से उन्हें स्वनगरगमन की अनुमति प्रदान की ॥८७॥

ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं प्रसादलभ्यम्।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुर्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥८८॥

सञ्जीविनी—ते राजानः रेखा एव ध्वजाश्च कुलिशानि चातपत्राणि च। ध्वजाद्याकाररेखा इत्यर्थः, तानि चिह्नानि यस्य तत्तथोक्तम्। प्रसादेनैव लभ्यं प्रसादलभ्यम्। सम्राजः सार्वभौमस्य रघोश्चरणयुगं प्रस्थाने प्रयाणसमये याः प्रणतयो नमस्कारास्ताभिः करणैः। अंगलीषु मौलिषु केशबन्धेषु याः स्रजो माल्यानि ताभ्यः च्युतैः मकरन्दैः पुष्परसैः 'मकरन्दः पुष्परसः' इत्यमरः। रेणुभिः परागैः 'परागः सुमनोरजः' इत्यमरः। गौरं गौरवर्णं चक्रुः ॥ ८८ ॥

अन्वयः—ते रेखाध्वजकुलिशातपत्रचिह्नम्, प्रसादलभ्यम्, सम्राजः, चरणयुगम्, प्रस्थानप्रणतिभिः, अङ्गुलीषु, मौलिस्रक्च्युतमकरन्दरेणुगौरम्, चक्रुः।

वाच्य०—तैः सम्राजः चरणयुगम् मौलिस्रक्च्युतमकरन्दरेणुगौरम् चक्रे।

व्याख्या—ते = राजानः, ध्वजश्च = पताका च कुलिशञ्च = वज्रञ्च "वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः" इत्यमरः। आतपात्त्रायत इत्यातपत्रम् = छत्रम् च ध्वजकुलिशातपत्राणि रेखाः = लेखा एव ध्वजकुलिशातपत्राणि इति रेखाध्वजकुलिशातपत्राणि, तानि चिह्नानि लक्षणानि यस्य तत्तथो-

तम् प्रसादेन=प्रसन्नतयैव "प्रसादस्तु प्रसन्नता" इत्यमरः, लभ्यम्=प्राप्यम् इति प्रसादलभ्यम्, सम्यग् राजतेऽसौ सम्राट् तस्य सम्राजः=सार्वभौमस्य रघोः चरणयोः पादयोर्युगं युगलम् प्रस्थाने=प्रस्थानकाले याः प्रणतयो नमस्काराः प्रस्थानप्रणतयः ताभिः अङ्गुलीषु=पादाङ्गुलीषु, मकरन्दश्च=पुष्परसश्च रेणवश्च=परागाश्च मकरन्दरेणवः,मौलिषु=मस्तकेषु स्रजः=माला इति मौलिस्रजः ताभ्यश्च्युताः=पृथग्भूता इति मौलिस्रक्च्युताः मौलिस्रक्च्युताः मकरन्दरेणवः इति मौलिस्रक्च्युतमकरन्दरेणवः तैः गौरम्=गौरवर्णम् चक्रुः=कृतवन्तः ।

समा०—ध्वजाश्च कुलिशानि च आतपत्राणि च ध्वजकुलिशातपत्राणि, रेखा एव ध्वकुलिशातपत्राणि रेखाध्वजकुलिशातपत्राणि तानि चिह्नानि यस्य तत् रेखाध्वजकुलिशातपत्रचिह्नम्, तत् रेखाध्वजकुलिशातपत्रचिह्नम् । प्रसादेन लभ्यं प्रसादलभ्यम्, तत् प्रसादलभ्यम् । चरणयोर्युगं चरणयुगम्, तत् चरणयुगम् । प्रस्थाने प्रणतयः प्रस्थानप्रणतयः,ताभिः प्रस्थानप्रणतिभिः। मौलिषु स्रजः मौलिस्रजः,मौलिस्रग्भ्यश्च्युताः मौलिस्रक्च्युताः मकरन्दानां रेणवः मकरन्दरेणवः मौलिस्रक्च्युताश्च ते मकरन्दरेणवश्च मौलिस्रक्च्युतमकरन्दरेणवः मौलिस्रक्च्युतमकरन्दरेणुभिः गौरं मौलिस्रक्च्युतमकरन्दरेणुगौरम्, तत् मौलिस्रक्च्युतमकरन्दरेणुगौरम् ।

अभि०—यज्ञावसाने लब्धगृहगमनानुमतयो राजानः प्रस्थानकालिकप्रणतिभिः, रघोश्चरणयुगलं शिरोभिः पस्पृशुः, तदा च तेषां मुकुटस्थमालाभ्यो निपतितैः पुष्परसैः परागैश्च रघुपादाङ्गुलयो गौरवर्णाः सञ्जाताः ।

हिन्दी—यज्ञ की समाप्ति पर अपने अपने नगरों में जाने की अनुमति प्राप्त करके राजा लोग प्रस्थानकालिक नमस्कारों के द्वारा रघु के चरणकमलों को अपने मस्तकों से स्पर्श करने लगे जिससे उनके मुकुटों की मालाओं से गिरने वाले पुष्परस तथा पराग ने रघु की पादाङ्गुलियों को गौर बना दिया ॥

इति श्रीशांकरिधारादत्तशास्त्रिमिश्रविरचितायां
छात्रोपयोगिनीव्याख्यायां रघुवंशे महा-
काव्ये रघुदिग्विजयो नाम
चतुर्थः सर्गः ।

# पंचम सर्ग की संक्षिप्त कथा

विश्वजित् नाम के यज्ञ में सर्वस्व दान दे देने वाले महाराज रघु के पास महर्षि वरतन्तु के शिष्य गुरुदक्षिणार्थी कौत्स अयोध्या में पहुँचे।

रघु ने कौत्स ऋषि की पूजा करके महर्षि तथा आश्रम का कुशल समाचार पूछने के पश्चात् उनके आगमन का प्रयोजन पूछा।

यद्यपि पूजा में मिट्टी के पात्र देखकर कौत्स अपनी कार्य सिद्धि के प्रति निराश हो चुके थे। फिर भी अपने आने का कारण चौदह करोड़ स्वर्णमुद्रा गुरुदक्षिणा में देनी है—यह बतलाकर किसी दूसरे दानी के पास जाने का विचार भी प्रगट कर दिया।

यह सुन महाराज रघु ने कहा कि आप मेरे पास से निराश हो कर लौटेंगे, तो मेरी बड़ी निंदा होगी। अतः आप दो चार दिन मेरी अग्निशाला में विश्राम करें। तब तक मैं आपके लिये धन का प्रबंध करता हूँ।

कौत्स ठहर गये और महाराज ने पृथवी को धन रहित समझ कर यक्षराज कुबेर से धन ले आने का विचार कर रात में ही अस्त्र शस्त्र से सुसज्जित रथ में शयन किया।

प्रातः काल महराज कुबेर के ऊपर चढ़ाई के लिये प्रस्थान की तैय्यारी में ही थे, कि खजाने के सन्तरियों ने सूचना दी कि महाराज आपका भण्डार स्वर्ण से भरा पड़ा है। कुबेर ने डरकर रात में सोने की वर्षा कर दी थी। तब महाराज रघु ने वह सारा धन ऊँट तथा खच्चरों पर लदवाकर महर्षि कौत्स के साथ कर दिया। इससे अतीव प्रसन्न होकर महर्षि ने रघु को आशीर्वाद दिया कि तुम अपने ही जैसे पुत्र को शीघ्र प्राप्त करो।

महर्षि के जाने पर रघु को पुत्र उत्पन्न हुआ जिसका नाम अज रखा गया। जब कुमार अज बड़े हुए, और समस्त विद्यायें पढ़ चुके तो महाराज रघुने कुमार को युवराज बना दिया। और विदर्भ नरेश महाराज भोज के संबंध को श्रेष्ठ

जान कर उनका आमन्त्रण आते ही रघु ने अज को भोज की बहन इन्दुमती के स्वयंवर में संमिलित होने के लिये सेना सहित भोजकी राजधानी में भेज दिया। मार्ग में नर्मदा के तट पर अज ने विश्राम करने के विचार से पड़ाव डाल दिया। इसी समय एक उन्मत्त जंगली हाथी नर्मदा से निकल कर अज की सेना में उपद्रव करने लगा। तब अज ने उसे भगाने के अभिप्राय से उसके मस्तक पर एक बाण मारा। और बाण के लगते ही हाथी का शरीर त्याग कर दिव्य रूप धारण कर वह आकाश में खड़ा होकर बोला कि हे अज ! मैं गन्धर्वराज प्रियदर्शन का पुत्र प्रियंवद हूँ। मतंग ऋषि के शाप से मैं हाथी की योनि को प्राप्त हो गया था।

आपने कृपा करके मुझे हाथी की योनि से मुक्त कर दिया है। अतः इसके प्रत्युपकार में मैं आपको संमोहन नामका अस्त्र, जिसको छोड़ने तथा लौटाने का मंत्र भिन्न-२ है, आपको देना चाहता हूँ। संकोच में पड़े अज ने इसकी प्रार्थना स्वीकार कर अस्त्र को ग्रहण कर लिया। तब प्रियंवद तो कुबेर के बगीचे में चला गया तथा अज भोजनगरी की ओर गए। नगर के पास आए हुये अज को जानकर भोजराज ने खूब ठाट-बाट से उनका स्वागत किया और नगर में ले जाकर राजमहल में ठहरा दिया। और कुमार अज ने विश्राम किया।

प्रातः काल वन्दिपुत्रों ने बड़े ही सुन्दर मनोहर कर्णप्रिय गीतों को सुनाकर अज को जगाया। अज भी तुरन्त उठकर नित्यक्रिया सन्ध्या वन्दनादि से निवृत्त हो गये। और उनके वेष रचना में कुशल अनुचरों ने स्वयंवर के योग्य अतीव भव्य राजसी ठाट-बाट से उन्हें सजा दिया।

इस प्रकार सज-धजकर कुमार अज स्वयंवर में बैठे हुये राजाओं के समूह में पहुँच गये।

---

# श्रीरघुवंश-महाकाव्यम्

## पञ्चमः सर्गः

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातम्।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

**सञ्जीविनी**—विश्वजिति विश्वजिन्नाम्न्यध्वरे यज्ञे 'यज्ञः सवोऽध्वरो यागः' इत्यमरः। निःशेषं विश्राणितं दत्तम् 'श्रणु दाने' चुरादिः। कोशानामर्थराशीनां जातं समूहो येन तं तथोक्तम्, 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः। 'जातं जनिसमूहयोः' इति शाश्वतः। एतेन कौत्सस्यानवसरप्राप्ति सूचयति। तं क्षितीशं रघुमुपात्तविद्यो लब्धविद्यो वरतन्तोः शिष्यः कौत्सः। 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्, इञोऽपवादः। गुरुदक्षिणार्थी। 'पुष्करादिभ्यो देशे' इत्यत्र 'अर्थाच्चासंनिहिते' 'तदन्ताच्च' इतीनिः। अप्रत्याख्येय इति भावः। प्रपेदे प्राप। अस्मिन्सर्गे वृत्तमुपजातिः। तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥१॥

**अन्वयः—विश्वजिति, अध्वरे, निःशेषविश्राणितकोशजातम्, तम्, क्षितीशम्, उपात्तविद्यः, वरतन्तुशिष्यः, कौत्सः, गुरुदक्षिणार्थी, 'सन्' प्रपेदे।**

**वाच्य०**—निःशेषविश्राणितकोशजातः, सः, क्षितीशः उपात्तविद्येन, वरतन्तुशिष्येण, कौत्सेन, गुरुदक्षिणार्थिना, प्रपेदे।

**व्याख्या**—विश्वम् = जगत्, जयति = अभिभवति, विश्वजित् तस्मिन्, विश्वजिति, अध्वरे = यज्ञे, विश्वजिन्नामके यज्ञे इत्यर्थः, कोशानाम् = निधीनाम्, जातम् = समूहः इति कोशजातम्, निःशेषम् = समग्रम्, विश्राणितम् = अर्पितम्, कोशजातम् येन सः निशेषविश्राणितकोशजातः तं तथोक्तम्, तम् = पूर्वोक्तम्,

क्षितेः = पृथिव्याः, ईशः = स्वामी, क्षितीशः तम् क्षितीशम् राजानं रघुम् इत्यर्थः, उपात्ता = गृहीता, विद्याः = चतुर्दशविद्याः, येन सः उपात्तविद्यः, वरतन्तोः = तन्नामकगुरोः, शिष्यः = छात्रः वरतन्तुशिष्यः, कौत्सः = कौत्सनामा, अर्थः = प्रयोजनम् अस्य अस्ति इति अर्थी, गुरोः = उपाध्यायस्य, दक्षिणा = यज्ञाद्यन्ते देयं द्रव्यम् गुरुदक्षिणा, गुरुदक्षिणायाः अर्थी गुरुदक्षिणार्थी 'सन्', प्रपेदे = प्राप।

**समा०**—विश्वं जयति इति विश्वजित् तस्मिन् विश्वजिति। कोशानाम् जातम् कोशजातम् निःशेषम् विश्राणितम् कोशजातम् येन सः निःशेषविश्राणितकोशजातः, तम् निःशेषविश्राणितकोशजातम्। क्षितेः ईशः क्षितीशः तम् क्षितीशम्। उपात्ताः विद्याः येन सः उपात्तविद्यः। वरतन्तोः शिष्यः वरतन्तुशिष्यः। अर्थः यस्य अस्ति इति अर्थी, गुरोः दक्षिणा गुरुदक्षिणा गुरुदक्षिणायाः अर्थी गुरुदक्षिणार्थी।

**अभि०**—यदा रघुर्विश्वजिन्नामके यज्ञे समस्तमपि कोशमर्थिभ्यो ददौ तदा वरतन्तूपाध्यायात्सकला अपि विद्याः अधीत्य तदर्थं दक्षिणाया याचको भूत्वा कौत्सस्तं रघुमुपागमत्।

**हिन्दी**—जब कि राजा रघु ने विश्वजित् नामक यज्ञ में अपना सारा खजाना दक्षिणा के रूप में दे डाला तब वरतन्तु महर्षि का शिष्य कौत्स सम्पूर्ण विद्यायें पढ़कर गुरु-दक्षिणा देने के लिये द्रव्य प्राप्त करने की इच्छा से रघु के पास याचक बनकर आया॥१॥

स मृन्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः॥ २॥

**सञ्जीविनी**—अनर्घशीऽलोमूल्यस्वभावः असाधारणस्वभाव इत्यर्थः। 'मूल्ये पूजाविधावर्घः' इति 'शीलं स्वभावे सद्वृत्ते' इति चामरशाश्वतौ। यशसा कीर्त्या प्रकाशत इति प्रकाशः, पचाद्यच्। अतिथिषु साधुरातिथेयः 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्। स रघुः हिरण्यस्य विकारो हिरण्मयम् 'दाण्डिनायन०' इत्यादिसूत्रेण निपातः। वीतहिरण्मयत्वादपगतसुवर्णपात्रत्वात् यज्ञस्य सर्वस्वदक्षिणाकत्वादिति भावः। मृन्मये मृद्विकारे पात्रे अर्घार्थमिदमर्घ्यम् 'पादार्घाभ्यां च' इति यत्। पूजार्थं द्रव्यं निधाय श्रुतेव शास्त्रेण प्रकाशं प्रसिद्धम् श्रूयत इति श्रुतं वेदशास्त्रम् 'श्रुतं शास्त्रावधृतयोः' इत्यमरः। अतिथिमभ्यागतम् कौत्सम् 'अतिथिर्ना गृहागते' इत्यमरः। प्रत्युज्जगाम॥२॥

**अन्वयः**—अनर्घशीलः, यशसा, प्रकाशः, आतिथेयः, सः, वीतहिरण्मयत्वात्, मृन्मये, पात्रे अर्घ्यम्, निधाय, श्रुतप्रकाशम्, अतिथिम्, प्रत्युज्जगाम ।

**वाच्य०**—अनर्घशीलेन, प्रकाशेन, आतिथेयेन, तेन, श्रुतप्रकाशः, अतिथिः, प्रत्युज्जग्मे ।

**व्याख्या**—न विद्यते अर्घम्=मूल्यम्, यस्य तत् अनर्घम् अनर्घं, शीलम्=स्वभावः, यस्य असौ अनर्घशीलः, यशसा=कीर्त्या, प्रकाशः=प्रसिद्धः, अतिथिषु=अभ्यागतेषु, साधुः आतिथेयः, सः=रघुः, हिरण्यस्य=सुवर्णस्य विकारः हिरण्मयम्, वीतम्=गतम् हिरण्मयम् यस्मात् सः वीतहिरण्मयः, वीतहिरण्मयस्य भावः वीतहिरण्मयत्वम् तस्मात् वीतहिरण्मयत्वात्, मृदः=मृत्तिकायाः विकारः मृन्मयम् तस्मिन् मृन्मये, पात्रे=भाजने, अर्घाय=पूजार्थम् इदम् अर्घ्यम्, निधाय=संस्थाप्य, श्रुतेन=शास्त्रेण, प्रकाशः=प्रसिद्धः, इति श्रुतप्रकाशः तम् श्रुतप्रकाशम्, अतिथिम्=अभ्यागतम्, प्रत्युज्जगाम=प्रत्युद्ययौ ।

**समा०**—न विद्यते अर्घम् मूल्यम् यस्य तत् अनर्घम्, अनर्घम् शीलम् यस्य सः अनर्घशीलः, अतिथिषु, अभ्यागतेषु साधुः आतिथेयः, हिरण्यस्य विकारः हिरण्मयम् वीतम् हिरण्मयम् यस्मात् सः वीतहिरण्मयः, वीतहिरण्मयस्य भावः वीतहिरण्मयत्वम् तस्मात् वीतहिरण्मयत्वात्, मृदः विकारः मृन्मयम् तस्मिन् मृन्मये । अर्घाय इदम् अर्घ्यम्, श्रुतेन प्रकाशः श्रुतप्रकाशः तम् श्रुतप्रकाशम् ।

**अभि०**—असाधारणस्वभावो यशस्वी तथाऽतिथिसेवाऽभिज्ञो रघुः सुवर्णपात्राभावेन मृत्पात्र एवोपहारसामग्रीं निधाय प्रसिद्धशास्त्रज्ञस्य कौत्सस्य सम्मुखमुपस्थितोऽभवत् ।

**हिन्दी**—असाधारण स्वभाव वाले, यशस्वी तथा अतिथि सेवा में निपुण राजा रघु सोने के पात्रों के न रहने से मिट्टी के पात्र में ही अर्घ्य द्रव्य लेकर कौत्स के संमुख उपस्थित हुए ॥२॥

तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।
विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥

**सञ्जीविनी**—विधिज्ञः शास्त्रज्ञः अकरणे प्रत्यवायभीरुरित्यर्थः । मानधनानामग्रयाय्यग्रेसरः । अपयशोभीरुरित्यर्थः । कृत्यवित्कार्यज्ञः आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् । विशांपतिर्मनुजेश्वरः 'द्वौ विशौ वैश्यमनुजौ' इत्य-

मरः। विष्टरभाजमासनगतम् उपविष्टमित्यर्थः। 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः। 'वृक्षासनयोर्विष्टरः' इति निपातः। तं तपोधनं विधिवद्विध्यर्हम् यथाशास्त्रमित्यर्थः। 'तदर्हम्' इति वतिप्रत्ययः। अर्चयित्वाऽऽरात्समीपे 'आराद्दूरसमीपयोः' इत्यमरः। कृताञ्जलिः सन्निति वक्ष्यमाणप्रकारेणोवाच ॥३॥

**अन्वयः—विधिज्ञः, मानधनाग्रयायी, कृत्यवित्, विशाम्, पतिः, विष्टरभाजम्, तम्, तपोधनम्, विधिवत्, अर्चयित्वा, आरात्, कृताञ्जलिः, 'सन्', इति, उवाच।**

**वाच्य०**—विधिज्ञेन, मानधनाग्रयायिना, कृत्यविदा, विशाम्, पत्या, कृताञ्जलिना, 'सता' ऊचे।

**व्याख्या**—विधिम् = शास्त्रम्, जानाति = वेत्ति, इति विधिज्ञः, मानः = चित्तसमुन्नतिः, एव धनम् = वित्तम् येषां ते, मानधनाः, अग्रे = पुरः, याति = गच्छति, इति अग्रयायी, मानधनानाम् अग्रयायी इति मानधनाग्रयायी, कृत्यम् = कार्यम्, वेत्ति = जानाति, इति कृत्यवित्, विशाम् = मनुजानाम्, पतिः = स्वामी, विष्टरम् = आसनम्, भजति = सेवते, इति विष्टरभाक्, तम् विष्टरभाजम्, उपविष्टम् इत्यर्थः, तम् = पूर्वोक्तं तपः = तपश्चर्या, एव, धनम् = वित्तम्, यस्य सः तपोधनः, तम्, तपोधनम् 'कौत्सम्' विधिवत् = यथाशास्त्रम्, अर्चयित्वा = संपूज्य, आरात् = समीपे, कृतः = विहितः, बद्ध इति यावत्, अञ्जलिः = हस्तसंपुटः, येन सः कृताञ्जलिः, 'सन्' इति = इत्थम्, वक्ष्यमाणप्रकारेण, उवाच = कथयामास।

**समा०**—विधिम् जानातीति विधिज्ञः, मानः एव धनम् येषाम् ते मानधनाः, अग्रे याति इति अग्रयायी, मानधनानाम् अग्रयायी मानधनाग्रयायी। कृत्यम् वेत्ति इति कृत्यवित्। विष्टरम् भजति इति विष्टरभाक्, तम् विष्टरभाजम्। तपः एव धनम् यस्य सः तपोधनः, तम् तपोधनम्। कृतः अञ्जलिः येन सः कृताञ्जलिः।

**अभि०**—शास्त्रविधिज्ञो रघुस्तं तपस्विनं कौत्सं शास्त्रोक्तविधिना संपूज्यासन उपवेश्य स्वयं संयोजितकरयुगलः सन्नुवाच।

**हिन्दी**—शास्त्रविधि को जानने वाले मनस्वी रघु ने तपस्वी कौत्स की शास्त्रोक्त-विधि से पूजा की, और आसनपर बैठाकर उनके सम्मुख हाथ जोड़कर इस प्रकार बोले ॥३॥

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥४॥

**सञ्जीविनी**—हे कुशाग्रबुद्धे सूक्ष्मबुद्धे 'कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्' इति हलायुधः। मन्त्रकृतां मन्त्रद्रष्टृणाम् 'सुकर्मपापमन्त्र०' इत्यादिना क्विप्। ऋषीणामग्रणीः श्रेष्ठस्ते तव गुरुः कुशल्यपि क्षेमवान्किम्। अपिः प्रश्ने। 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः। यतो यस्माद् गुरोः सकाशात्त्वयाऽशेषं ज्ञानम्। लोकेनोष्णरश्मेः सूर्याच्चैतन्यं प्रबोध इव आप्तं स्वीकृतम् ॥४॥

**अन्वयः**—कुशाग्रबुद्धे! मन्त्रकृताम्, ऋषीणाम्, अग्रणीः, ते, गुरुः कुशली, अपि, यतः, त्वया, अशेषम्, ज्ञानम्, लोकेन उष्णरश्मेः, चैतन्यम् इव, आप्तम्।

**वाच्य०**—ऋषीणाम् अग्रण्या, ते गुरुणा, कुशलिना अपि, 'भूयते' यतः त्वम् ज्ञानम् लोकः चैतन्यम्, इव, आप्तवान्।

**व्याख्या**—कुशस्य = दर्भस्य, अग्रम् = अग्रभागः इति कुशाग्रम्, कुशाग्रम् इव = यथा (तीक्ष्णा) बुद्धिः = मतिः, यस्य सः कुशाग्रबुद्धिः, तत्सम्बुद्धौ, हे कुशाग्रबुद्धे, मन्त्रान्कृतवन्तः इति मन्त्रकृतः, तेषाम् मन्त्रकृताम् ऋषीणाम् = मुनीनाम्, अग्रम् = पुरः, नयति = प्रापयति, इति अग्रणीः, ते = तव कौत्सस्य गुरुः = उपाध्यायः वरतन्तुः, कुशलम् = क्षेमम् अस्य अस्ति इति कुशली, अपिरिति प्रश्नेऽव्ययम्, यतः = यस्मात् गुरोः सकाशादित्यर्थः, त्वया = कौत्सेन, अशेषम् = समग्रम्, ज्ञानम् = अवबोधः, लोकेन = जनेन, उष्णाः = तप्ताः, रश्मयः = किरणाः यस्य सः उष्णरश्मिः, सूर्य इत्यर्थः, तस्मात् उष्णरश्मेः चैतन्यम् = प्रबोधः, इव = यथा, आप्तम् = गृहीतम्।

**समा०**—कुशस्य, अग्रम् कुशाग्रम्, कुशाग्रम्, इव बुद्धिः यस्य सः कुशाग्रबुद्धिः तत्सम्बुद्धौ हे कुशाग्रबुद्धे। मन्त्रान्कृतवन्तः, इति मन्त्रकृतः तेषाम् मन्त्रकृताम्। अग्रम् नयति इति अग्रणीः। कुशलम् अस्य अस्ति इति कुशली। उष्णाः रश्मयः यस्य सः उष्णरश्मिः, तस्मात् उष्णरश्मेः।

**अभि०**—हे तीक्ष्णमते! कौत्स, महर्षिवर्यस्ते गुरुर्वरतन्तुः कुशलेन सह वर्तते किमु? यस्मात्त्वया सकलं ज्ञानं तथैव लब्धं यथा लोको रवेरालोकेन चैतन्यं गृह्णाति।

**हिन्दी**—हे तीक्ष्णबुद्धे! कौत्स, तुम्हारे गुरु ऋषिश्रेष्ठ वरतन्तु जी कुशल पूर्वक तो हैं? जिनसे तुमने सम्पूर्ण ज्ञान इस प्रकार प्राप्त किया है जिस प्रकार सूर्य से मनुष्य प्रबोध (जागरण) प्राप्त करते हैं ।।४।।

कायेन वाचा मनसाऽपि शश्वद्यत्संभृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ।।५।।

**सञ्जीविनी**—कायेनोपवासादिकृच्छ्रचान्द्रायणादिना वाचा वेदपाठेन मनसा गायत्रीजपादिना कायेन वाचा मनसापि करणेन वासवस्येन्द्रस्य धैर्यं लुम्पतीति वासवधैर्यलोपि स्वपदापहारशङ्काजनकमित्यर्थः । यत्तपः शश्वदसकृत् 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः । संभृतं संचितं महर्षेर्वरतन्तोस्त्रिविधं वाङ्मनःकायजं तत्ततोऽन्तरायैर्विघ्नैरिन्द्रप्रेरिताप्सरःशापैर्व्ययं नाशं नापाद्यते कच्चित् न नीयते किम् 'कच्चित्कामप्रवेदने' इत्यमरः ।।५।।

**अन्वयः**—**कायेन, वाचा, मनसा, अपि वासवधैर्यलोपि, यत्, शश्वत् सम्भृतम् महर्षेः, त्रिविधम्, तत्, तपः, अन्तरायैः व्ययम्, न आपाद्यते कच्चित्?**

**वाच्य०**—वासवधैर्यलोपिना येन सम्भृतेन, 'भूयते' अन्तरायाः व्ययम् न आपादयन्ति कच्चित्?

**व्याख्या**—कायेन = शरीरेण, चान्द्रायणादिव्रतेनेत्यर्थः, वाचा = वाण्या, वेदपाठेनेत्यर्थः, मनसा = हृदयेन, ध्यानादिनेत्यर्थः, अपिरिति समुच्चयेऽव्ययम्, वासवस्य = इन्द्रस्य, धैर्यम् = धृतिः इति वासवधैर्यम्, वासवधैर्यम् लुम्पति = विनाशयति इति वासवधैर्यलोपि, यत् = तपः, शश्वत् = सर्वदा, सम्भृतम् = सञ्चितम्, महान् = श्रेष्ठश्चासौ, ऋषिः = मुनिः इति महर्षिः तस्य महर्षेः, तिस्रो विधाः = प्रकाराः, यस्य तत् त्रिविधम्, मनोवाक्कायजमित्यर्थः, तत्, तपः = तपश्चरणम्, अन्तरायैः = विघ्नैः, व्ययम् = नाशम्, न = नैव, आपाद्यते = प्राप्यते, कच्चित् = किम् ?

**समा०**—वासवस्य धैर्यम् वासवधैर्यम्, वासवधैर्यम् लुम्पति इति वासवधैर्यलोपि। महान् च असौ ऋषिः महर्षिः तस्य महर्षेः। तिस्रोः विधाः यस्य तत् त्रिविधम्।

**अभि०**—यत्ते गुरुर्मनसा, वाण्या तथा शरीरेणेन्द्रस्य धैर्यापहारकं तपोऽर्जयति तद्विघ्नैः क्षीयते न किम् ?

**हिन्दी**—तुम्हारे गुरु जी ने मन, वाणी तथा शरीर से, इन्द्र के पद को भग्न करने वाला जो तप का सञ्चय किया है, कहीं उसका इन्द्र द्वारा भेजी अप्सराओं से किये विघ्नों में शापरूप से क्षय तो नहीं होता है ? ॥ ५ ॥

**आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।**
**कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥**

**सञ्जीविनी**—आधारबन्धप्रमुखैरालवालनिर्माणादिभिः प्रयत्नैरुपायैः 'आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च' इति विश्वः । सुतेभ्यो निर्गतो विशेषोऽतिशयो यस्मिन्कर्मणि तत्तथा संवर्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः आदिशब्दाद्दावानलादिः उपप्लवो बाधको न कच्चिन्नास्ति किम् ॥६॥

**अन्वयः**—**आधारबन्धप्रमुखैः, प्रयत्नैः, सुतनिर्विशेषम्, संवर्धितानां, श्रमच्छिदाम्, वः, आश्रमपादपानाम्, वाय्वादिः, उपप्लवः, न, कच्चित् ?**

**वाच्य०**—वाय्वादिना, उपप्लवेन, न, 'भूयते' कच्चित् ?

**व्याख्या**—आधारस्य = आलवालस्य, बन्धः = बन्धनम्, आधारबन्धः, आधारबन्ध एव प्रमुखः = प्रधानम् येषाम् ते, आधारबन्धप्रमुखाः, तैः, आधारबन्धप्रमुखैः, प्रयत्नैः = उपायैः, सुतात् = पुत्रात्, निर्विशेषम् = वैशिष्ट्यरहितम्, समानमित्यर्थः, संवर्धितानाम् = परिवर्धितानाम्, श्रमम् = खेदम्, छिन्दन्ति = नाशयन्ति, इति श्रमच्छिदः, तेषाम्, श्रमच्छिदाम्, आश्रमस्य = मुन्यावासस्य, पादपाः = वृक्षाः, इति आश्रमपादपाः, तेषाम्, आश्रमपादपानाम्, वायुः = पवनः, आदिः = प्रथमः यस्य सः वाय्वादिः, उपप्लवः, = उत्पातः, न = नहि, कच्चित् = किम् ?

**समा०**—आधारस्य बन्धः आधारबन्धः, आधारबन्धः, एव प्रमुखः येषाम् ते आधारबन्धप्रमुखाः तैः आधारबन्धप्रमुखैः । निर्गतः विशेषः यस्मिन्कर्मणि तत् निर्विशेषम्, सुतात् निर्विशेषम् सुतनिर्विशेषम् । श्रमम् छिन्दन्ति इति श्रमच्छिदः तेषाम् श्रमच्छिदाम् । आश्रमस्य पादपाः इति आश्रमपादपाः तेषाम् आश्रमपादपानाम् । वायुः आदिः यस्य सः वाय्वादिः ।

**अभि०**—युष्माभिराश्रमवृक्षाणामालवालनिर्माणादिरूपेण पुत्रवत्पालनं क्रियते। कच्चित्तेषामेवाश्रमतरूणां कृते वात्यादिप्रकोपस्तु न जायते ?

**हिन्दी**—जिन आश्रम के वृक्षोंका आलवाल अर्थात् थावला ( क्यारी )

बनाने आदि से पुत्र की तरह पालन किया जाता है और जिनसे छाया मिलती है, उनके ऊपर आंधी आदि उपद्रवों का प्रकोप तो नहीं होता ?

क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥७॥

**सञ्जीवनी**—क्रियानिमित्तेष्वप्यनुष्ठानसाधनेष्वपि कुशेषु मुनिभिर्वत्सलत्वान्मृगस्नेहादभग्नकामाऽप्रतिहतेच्छा तेषां मुनीनामङ्का एव शय्यास्तासु च्युतानि नाभिनालानि यस्याः सा तथोक्ता मृगीणां प्रसूतिः संततिरनघाऽव्यसना कच्चित् अनपायिनी किमित्यर्थः । 'दुःखैनोव्यसनेष्वघम्' इति यादवः । ते हि व्यालभयाद्दशरात्रमङ्क एव धारयन्ति ॥७॥

**अन्वय**--क्रियानिमित्तेषु, अपि, कुशेषु, मुनिभिः, वत्सलत्वात्, अभग्नकामा, तदङ्कशय्याच्युतनाभिनाला, मृगीणाम्, प्रसूतिः, अनघा, कच्चित् ?

**वाच्य०**—अभग्नकामया, तदङ्कशय्याच्युतनाभिनालया, प्रसूत्या, अनघया, 'भूयते' कच्चित् ?

**व्याख्या**—क्रियायाः=अनुष्ठानस्य, निमित्तानि=साधनानि इति, क्रियानिमित्तानि, तेषु, क्रियानिमित्तेषु, अपि, कुशेषु=दर्भेषु, मुनिभिः=ऋषिभिः, वत्सलस्य=भावः वत्सलत्वम् तस्मात् वत्सलत्वात्, मृगस्नेहात्, न=नहि, भग्नः=नष्टः, कामः=अभिलाषः, यस्याः सा, अभग्नकामा, तेषाम्=मुनीनाम्, अङ्काः=क्रोडस्थानानि इति तदङ्काः, तदङ्काः एव शय्या=शयनस्थल्यः, इति तदङ्कशय्याः, तदङ्कशय्यासु च्युतानि=पतितानि इति तदङ्कशय्याच्युतानि, तदङ्कशय्याच्युतानि नाभिनालानि=तुन्दिकानालानि यस्याः सा, तदङ्कशय्याच्युतनाभिनाला, मृगीणाम्=हरिणीनाम्, प्रसूतिः=सन्ततिः, न=नहि विद्यन्ते अघानि=व्यसनानि, यस्याः सा, अनघा, दुःखरहितेत्यर्थः कच्चित् ? काम वेदनेऽव्ययम् ।

**समा०**--क्रियायाः निमित्तानि क्रियानिमित्तानि तेषु क्रियानिमित्तेषु, वत्सलस्य भावः वत्सलत्वम्, तस्मात् वत्सलत्वात् भग्नः कामः यस्याः सा भग्नकामा, न भग्नकामा अभग्नकामा । तेषाम् अङ्काः तदङ्काः तदङ्काः एव शय्याः तदङ्कशय्याः तदङ्कशय्यासु च्युतानि तदङ्कशय्याच्युतानि नाभेः नालानि नाभिनालानि तदङ्क-

शय्याच्युतानि नाभिनालानि यस्याः सा तदङ्कशय्याच्युतनाभिनाला। न विद्यन्ते अघानि यस्याः सा, अनघा।

**अभि०**—येषां मृगपोतानां नाभिनालानि मुन्यङ्केषु एव पतन्ति तथाऽनुष्ठान-साधनानपि कुशाङ्कुरान् दूषितुं प्रवृत्तानां वत्सलतया येषां वारणं न क्रियते ते मृगपोताः कुशलवन्तः किमु ?

**हिन्दी**—और वे हरिणों के बच्चे तो कुशल से हैं, जिन्हें ऋषि लोग गोद में बैठाकर प्रेम से खिलाते हैं जिनके नाभिनाल मुनियों की गोद में गिरते हैं। और जिनको ऋषिगण पुत्रस्नेह से यज्ञ क्रिया के लिये एकत्र किये कुशा पर भी बैठने आदि से नहीं रोकते हैं ॥७॥

निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम्।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥८॥

**सञ्जीविनी**—यैस्तीर्थजलैर्नियमाभिषेको नित्यस्नानादिर्निर्वर्त्यते निष्पाद्यते येभ्यो जलेभ्यः उद्धृत्येति शेषः, पितॄणामग्निष्वात्तादीनां निवापाञ्जलयस्तर्पणा-ञ्जलयः 'पितृदानं निवापः स्यात्' इत्यमरः। निर्वर्त्यन्ते उञ्छानां प्रकीर्णोद्धृतधा-न्यानां षष्ठैः षष्ठभागैः पालकत्वाद्राजग्राह्यैरङ्कितानि सैकतानि पुलिनानि येषां तानि तथोक्तानि वो युष्माकं तानि तीर्थजलानि शिवानि भद्राणि कच्चित् अनु-पप्लवानि किमित्यर्थः। 'उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम्' इति यादवः। 'षष्ठाष्टमाभ्यां च' इति षष्ठशब्दाद्भागार्थेऽन्प्रत्ययः। अत एवापूरणार्थत्वात् 'पूरण-गुण०' इत्यादिना न षष्ठीसमासप्रतिषेधः। सिकता येषु सन्ति सैकतानि 'सिकता-शर्कराभ्यां च' इत्यण्प्रत्ययः ॥८॥

**अन्वयः**—यैः, नियमाभिषेकः, निर्वर्त्यते, येभ्यः, पितॄणाम्, निवापाञ्जलयः, उञ्छषष्ठाङ्कितसैकतानि, वः, तानि, तीर्थजलानि, शिवानि, कच्चित् ?

**वाच्य०**—यानि, नियमाभिषेकम्, निर्वर्तयन्ति, निवापाञ्जलीन्, 'निर्वर्त-यन्ति', उञ्छषष्ठाङ्कितसैकतैः, वः, तैः, तीर्थजलैः, शिवैः, 'भूयते', कच्चित् ?

**व्याख्या**—यैः = जलैः, नियमेन = नियमपूर्वकं प्रत्यहमित्यर्थः, अभिषेकः = स्नानम्, इति नियमाभिषेकः, निर्वर्त्यते = संपाद्यते येभ्यः = जलेभ्यः पितॄणाम् = अग्निष्वात्तादीनाम्, निवापाञ्जलयः = पितृतर्पणानि निर्वर्त्यन्ते, उञ्छानाम् = कणशो गृहीतानाम् धान्यानाम्, षष्ठाः = षष्ठांशाः इति उञ्छषष्ठाः, उञ्छषष्ठैः

अङ्कितानि = चिह्नितानि सैकतानि = वालुकातटानि येषु तानि उञ्छषष्ठाङ्कित-सैकतानि, वः = युष्माकम्, तानि = प्रसिद्धानि, तीर्थस्य = जलावतारस्य, जलानि = सलिलानि, शिवानि = भद्राणि, कच्चित् = किम् ?

**समा०**—नियमेन अभिषेकः नियमाभिषेकः। निवापे अञ्जलयः इति निवापाञ्जलयः। उञ्छानाम् षष्ठाः उञ्छषष्ठाः उञ्छषष्ठैः अङ्कितानि सैकतानि येषु तानि, उञ्छषष्ठाङ्कितसैकतानि। तीर्थस्य जलानि तीर्थजलानि।

**अभि०**—यानि युष्माकं व्रतस्नानादिकं सम्पन्नं कुर्वन्ति, येभ्यश्च यूयं पितृतर्पणक्रियां कुरुथ, येषां च वालुकावन्ति तटानि युष्माकं कणशो गृहीतानां धान्यानां राजग्राह्यैः षष्ठांशैश्चिह्नितानि, तानि तीर्थजलानि भद्राणि किम् ?

**हिन्दी**—जिनसे आप स्नान सन्ध्यावन्दन तथा तर्पण करते हैं एवं जिनके रेतीले किनारे पर एक-एक कण उठा कर चुने हुए अन्न का राज-भाग रूपी षष्ठांश जानकर छोडते हैं, वे आपके तीर्थ जल तो उपद्रवों से रहित हैं ? ॥८॥

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित्।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

**सञ्जीविनी**—कालेषु योग्यकालेषूपपन्नानामागतानामतिथीनां कल्प्या भागा यस्य तत्तथोक्तम्, वने भवं वन्यम् शरीरस्थितेर्जीवितस्य साधनं वो युष्माकम् पच्यत इति पाकः फलम् धान्यमिति यावत्, नीवारपाकादि आदिशब्दाच्छ्यामाकादिधान्यसंग्रहः, जनपदेभ्य आगतैर्जानपदैः 'तत आगतः' इत्यण्। कडङ्गरीयैः कडङ्गरं बुसमर्हन्तीति कडङ्गरीयाः 'कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान्' इत्यमरः। 'कडङ्गरदक्षिणाच्छ च' इति छप्रत्ययः। तैर्गोमहिषादिभिर्नामृश्यते। कच्चित् न भक्ष्यते किमित्यर्थः ॥९॥

**अन्वयः**—**कालोपपन्नातिथिकल्प्यभागम्, वन्यम्, शरीरस्थितिसाधनम् वः, नीवारपाकादि, जानपदैः, कडङ्गरीयैः, न, आमृश्यते, कच्चित् ?**

**वाच्य०**—जानपदाः, कडङ्गरीयाः, न, आमृशन्ति, कच्चित् ?

**व्याख्या**—कालेषु = योग्यसमयेषु, उपपन्नाः = प्राप्ताः इति कालोपपन्नाः कालोपपन्नाः च ते, अतिथयः = अभ्यागताः इति कालोपपन्नातिथयः, कालोपपन्नातिथीनाम्, कल्प्याः = कल्पनीयाः इति कालोपपन्नातिथिकल्प्याः, कालोपपन्नातिथिकल्प्याः भागाः = अंशाः यस्य तत् कालोपपन्नातिथिकल्प्यभागम्, वने = अरण्ये, भवम्

